॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला
३७

( व्याकरणविभागे षष्ठं ( ६ ) प्रसूनम् )

श्रीमद्विद्वद्वरवामन-जयादित्यविरचिता

पाणिनीयव्याकरणसूत्रवृत्तिः

# का शि का

सटिप्पण 'प्रकाश' हिन्दीव्याख्योपेता

व्याख्याकारः—

श्रीनारायण मिश्रः

काशीहिन्दूविश्वविद्यालये संस्कृतप्राध्यापकः

उपोद्घातलेखकः—

पं० ब्रह्मदत्तजिज्ञासुः

( द्वितीयो भागः )



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९७२

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

मुद्रक : विद्याविलास प्रेस, वाराणसी

संस्करण : चतुर्थ, वि० संवत् २०२९

मूल्य : द्वितीय भाग [illegible]

सम्पूर्ण [illegible]

२५/—



गोपाल मन्दिर लेन

पो० बा० ८, वाराणसी–१ ( भारतवर्ष )

फोन : ६३१४५

प्रधान शाखा

चौखम्बा विद्याभवन

चौक, पो० बा० ६९, वाराणसी–१

फोन : ६३०७६

THE
KASHI SANSKRIT SERIES
37

*****

PĀṆINĪYAVYĀKARAṆASŪTRAVṚTTI

# KĀŚIKĀ

OF

Pt. VĀMANA AND JAYĀDITYA

Edited with

*The 'Prakāśa' Hindī Commentary and Introduction*

By

ŚRĪ NĀRĀYAṆA MIŚRA

*Lecturer in Sanskrit, B. H. U., Varanasi.*

PREFACE By

Pt. BRAHMADATTA JIJÑĀSU

( Part II )

THE
CHOWKHAMBA SANSKRIT SERIES OFFICE
VARANASI-1
1972

पाणिनीयसूत्रवृत्तिः

# का शि का

( उत्तरार्द्धम् )

## अथ पञ्चमाध्यायस्य प्रथमः पादः

### प्राक् क्रीताच्छः ॥ १ ॥

तेन क्रीतमिति वक्ष्यति, प्रागेतस्मात् क्रीतसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामश्छ-प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—तस्मै हितमिति। वत्सेभ्यो हितो वत्सीयो गोधुक्। करभीय उष्ट्रः। अकरभीयः। अवत्सीयः। अर्थोऽवधित्वेन गृहीतः, न प्रत्ययः। तेन प्राक् ठञश्छ इति नोक्तम् ॥

### उगवादिभ्यो यत् ॥ २ ॥

प्राक् क्रीतादित्येव। उवर्णान्तात् प्रातिपदिकाद्गवादिभ्यश्च यत्प्रत्ययो भवति प्राक्क्रीतीयेष्वर्थेषु। छस्यापवादः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका(१)। गवादिभ्यः खल्वपि—गव्यम्, हविष्यम्। सनङ्गुर्नाम चर्मविकारः, ततः परत्वाच्चर्मणोऽञित्येष विधिः प्राप्नोति। तथा चरुर्नाम हविः। सक्तुरन्नविकारः। अपूपादिष्वन्नविकारेभ्यश्चेति पठ्यते। ततो विभाषा हविरपूपादिभ्यश्चेत्येष विधिः प्राप्नोति। तत्र पूर्वविप्रतिषेधेन यत् प्रत्यय एवेष्यते—सनङ्गव्यं चर्म। चरव्यास्तण्डुलाः। सक्तव्या धाना इति। गवादिषु नाभि नभं चेति पठ्यते। तस्यायमर्थः—नाभिशब्दो यत्प्रत्ययमुत्पादयति नभं चादेशमापद्यत इति। नाभये हितो नभ्योऽक्षः। नभ्यमञ्जनम्। यस्तु शरीरावयवो नाभिशब्दस्ततः शरीरावयवादिति यति कृते नाभये हितं नाभ्यं तैलमिति भवितव्यम्। गवादिषु यता सन्नियुक्तो नभभावोऽत्र न भवति। गो। हविस्। वर्हिष्। खट। अष्टका। युग। मेधा। स्रक्। *नाभि नभं च*। *शुनः संप्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम्*। शुन्यम्। शून्यम्। चकारस्यानुक्तसमुच्चयार्थत्वात् नस्तद्धिते इति लोपो न

---

प्राक्—'तेन क्रीतम्' सूत्र से पूर्व छ प्रत्यय का अधिकार समझना चाहिए।

उगवादिभ्यो—उवर्णान्त तथा गो आदि प्रातिपदिकों से प्राक्क्रीतीय अर्थों में यत् प्रत्यय होता है।

नाभि—नाभि शब्द से यत् प्रत्यय होता है और नाभि के स्थान में नभ आदेश भी हो जाता है।

शुनः—श्वन् शब्द से यत् प्रत्यय, सम्प्रसारण और विकल्प से दीर्घादेश एवम् अन्तोदात्तत्व का विधान समझना चाहिए।

---

( १ ) कमण्डलव्या मृत्तिकेति पुस्तकान्तरे नास्ति।

स्यात्। ॐऊधसोऽनङ् चॐ। ऊधन्यः कूपः। उदर। खर। खद। अक्षर। विष। गवादिः(१)॥

## कम्बलाच्च संज्ञायाम् ॥ ३ ॥

कम्बलात्प्राक्क्रीतीयेष्वर्थेषु यत्प्रत्ययो भवति संज्ञायां विषये। छस्यापवादः। कम्बल्यमूर्णापलशतम्। संज्ञायामिति किम्? कम्बलीया ऊर्णा॥

## विभाषा हविरपूपादिभ्यः ॥ ४ ॥

हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति। आमिक्ष्यं दधि। आमिक्षीयं दधि। पुरोडाश्यास्तण्डुलाः। पुरोडाशीयाः। हविश्शब्दात्तु गवादिपाठान्नित्यमेव भवति। अपूपादिभ्यः–अपूप्यम्। अपूपीयम्। तण्डुल्यम्। तण्डुलीयम्। अपूप। तण्डुल। अभ्यूष। पृथुक। अभ्येष। अर्गल। मुसल। सूप। कटक। कर्णवेष्टक। किण्व। ॐअन्नविकारेभ्यश्चॐ। पूप। स्थूणा। पीप। अश्व। पत्र। अपूपादिः(२)॥

## तस्मै हितम् ॥ ५ ॥

तस्मा इति चतुर्थीसमर्थाद्धितमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। वत्सेभ्यो हितो गोधुक् वत्सीयः। अवत्सीयः। पटव्यम्। गव्यम्। हविष्यम्। अपूप्यम्। अपूपीयम्॥

## शरीरावयवाद्यत् ॥ ६ ॥

शरीरं प्राणिकायः। शरीरावयववाचिनः प्रातिपदिकाद्यत् प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। दन्त्यम्। कण्ठ्यम्। ओष्ठ्यम्। नाभ्यम्। नस्यम्॥

## खलयवमाषतिलवृषब्रह्मणश्च ॥ ७ ॥

खलादिभ्यो यत्प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। खलाय हितं खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृष्यम्। ब्रह्मण्यम्। वृष्णे हितम्, ब्राह्मणेभ्यो हितमिति वाक्यमेव भवति। छप्रत्ययोऽपि न भवति, अनभिधानात्। चकारोऽनुक्तसमुच्चयार्थः–रथाय हिता रथ्या॥

---

ऊधसो—ऊधस् शब्द से यत् प्रत्यय तथा ऊधस् को अनङ् आदेश भी समझना चाहिए।

कम्बलाच्च—कम्बल शब्द से भी प्राक्क्रीतीय अर्थों में यत् प्रत्यय होता है प्रत्ययान्त से संज्ञा की प्रतिपत्ति होने पर।

विभाषा—हविर्विशेषवाचक शब्द तथा अपूप आदि शब्दों से विकल्प से प्राक्क्रीतीय अर्थ में यत् प्रत्यय होता है।

अन्न—अन्न विकार वाचक प्रातिपदिकों से भी यत् प्रत्यय समझना चाहिए।

तस्मै—चतुर्थीसमर्थ शब्दों से (तस्मै) 'हितम्' अर्थ में यथाविहित प्रत्यय होते हैं।

शरीरावयवाद्—शरीरावयववाचक चतुर्थीसमर्थ शब्दों से 'हितम्' अर्थ में यत् प्रत्यय होता है।

खलयव—'तस्मै हितम्' इस अर्थ में खल, यव, माष, तिल, वृष तथा ब्रह्मन् शब्दों से यत् प्रत्यय होता है।

---

(१) स्कन्द, अध्वा, एतौ अत्र गणे पुस्तकान्तरेऽधिकौ।

(२) कट। अयस्थूण। ओदन। अवोष। प्रदोष। एते शब्दा अत्र गणे अधिकाः।

## अजाविभ्यां थ्यन् ॥ ८ ॥

अज अवि इत्येताभ्यां थ्यन् प्रत्ययो भवति तस्मै हितमित्येतस्मिन्विषये। छस्यापवादः। अजथ्या यूथिः। अविथ्या ॥

## आत्मन्विश्वजनभोगोत्तरपदात् खः ॥ ९ ॥

आत्मन् विश्वजन इत्येताभ्यां भोगोत्तरपदाच्च प्रातिपदिकात्खः प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। आत्मन्निति नलोपो न कृतः, प्रकृतिपरिमाणज्ञापनार्थम्, तेनोत्तरपदग्रहणं भोगशब्देनैव संबध्यते, न तु प्रत्येकम्। आत्मने हितम् आत्मनीयम्। आत्माध्वानौ खे इति प्रकृतिभावः। विश्वजनेभ्यो हितं विश्वजनीनम्। ॐकर्मधारयादिष्यतेॐ। षष्ठीसमासाद् बहुव्रीहेश्च छ एव भवति–विश्वजनाय हितं विश्वजनीयम्। ॐपञ्चजनादुपसंख्यानम्ॐ। पञ्चजनाच्च खः। अत्रापि कर्मधारयादिष्यते–पञ्चजनीनम्। अन्यत्र पञ्चजनीयम्। ॐसर्वजनाट्ठञ् खश्चॐ। (१)सार्वजनिकम्। सर्वजनीनम्। अत्रापि कर्मधारयादेव। सर्वजनीयमन्यत्। ॐमहाजनान्नित्यं ठञ् वक्तव्यःॐ। महाजनाय हितं माहाजनिकम्। तत्पुरुषादेव। बहुव्रीहेस्तु छ एव भवति–महाजनीयम्। भोगोत्तरपदात् खल्वपि–मातृभोगीणः, पितृभोगीणः। भोगशब्दः शरीरवाची केवलेभ्यो मात्रादिभ्यश्छ एव भवति। मात्रीयः, पित्रीयः। ॐराजाचार्याभ्यां तु नित्यम्ॐ। भोगोत्तरपादाभ्यामेव खः प्रत्यय इष्यते, न केवलाभ्याम्। राजभोगीनः। ॐआचार्यादणत्वं चॐ। आचार्यभोगीनः। केवलाभ्यां वाक्यमेव भवति–राज्ञे हितम्। आचार्याय हितमिति ॥

## सर्वपुरुषाभ्यां णढञौ ॥ १० ॥

सर्वपुरुषाभ्यां यथासंख्यं णढञौ प्रत्ययौ भवतः तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। सर्वस्मै हितं सार्वम्। पौरुषेयम्। ॐसर्वाण्णस्य वा वचनम्ॐ। सर्वीयम्। ॐपुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्ॐ। पौरुषेयो वधो विकारः, समूहो वा। तेन कृतः पौरुषेयो ग्रन्थः ॥

---

अजाविभ्याम्—अज तथा अवि शब्दों से 'तस्मै हितम्' अर्थ में थ्यन् प्रत्यय होता है।

आत्मन्—आत्मन्, विश्वजन तथा भोग शब्द हो उत्तर पद के रूप में जिन शब्दों का उन शब्दों से 'तस्मै हितम्' अर्थ में ख प्रत्यय होता है।

कर्म—कर्मधारयसमस्त विश्वजन ( विश्वे जनाः विश्वजनाः ) शब्द से ही ख प्रत्यय का विधान अवगन्तव्य है।

पञ्च—पञ्चजन शब्द से भी ख प्रत्यय का विधान समझना चाहिए।

सर्वजनात्—सर्वजन शब्द से विकल्प से ठञ् तथा ख प्रत्यय अवगन्तव्य हैं।

महाजनात्—तत्पुरुषसमासान्त महाजन शब्द से नित्य ठञ् प्रत्यय समझना चाहिए।

राजाचार्याभ्याम्—राजभोग तथा आचार्यभोग शब्दों से नित्य ख प्रत्यय समझना चाहिए।

आचार्यदणत्वम्—आचार्यभोग शब्द से विहित ख-प्रत्यय-स्थानीय नकार को णत्व का अभाव भी समझना चाहिए।

सर्व—सर्व तथा पुरुष शब्दों से क्रमशः ण तथा ठञ् प्रत्यय होते हैं 'तस्मै हितम्' अर्थ में।

सर्वात्—सर्व शब्द से विकल्प से ण प्रत्यय समझना चाहिए।

पुरुषात्—पुरुष शब्द से वध, विकार, समूह तथा 'तेन कृतः' ( उसके द्वारा निर्मित ) अर्थों में भी ठञ् प्रत्यय अवगन्तव्य है।

---

( १ ) सर्वजनाच्छश्च चकारात् खश्चेति पाठान्तरम्।

## माणवचरकाभ्यां खञ् ॥ ११ ॥

माणवचरकशब्दाभ्यां खञ् प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये। छस्यापवादः। माणवाय हितं माणवीनम्। चारकीणम्।

## तदर्थं विकृतेः प्रकृतौ ॥ १२ ॥

प्रकृतिरुपादानकारणम्, तस्यैव उत्तरमवस्थान्तरं विकृतिः। विकृतिवाचिनः प्रातिपदिकात्प्रकृतावभिधेयायां यथाविहितं प्रत्ययो भवति। तदर्थमिति प्रत्ययार्थविशेषणम्, तदिति सर्वनाम्ना विकृतिः परामृश्यते, विकृत्यर्थायां प्रकृतौ प्रत्ययः। तदर्थग्रहणेन प्रकृतेरनन्यार्थताख्यायते, न प्रकृतिविकारसंभवमात्रे प्रत्ययः, किन्तर्हि प्रकृतेरनन्यार्थत्वे विवक्षिते। प्रत्ययार्थस्य च तदर्थत्वे सति सामर्थ्याल्लभ्या चतुर्थी समर्थविभक्तिः। केचित्तु तस्मै हितमित्यनुवर्त्तयन्ति। अङ्गारेभ्यो हितानि एतानि काष्ठानि अङ्गारीयाणि काष्ठानि। प्राकारीया इष्टकाः। शङ्कव्यं दारु। पिचव्यः कार्पासः। तदर्थमिति किम्? यवानां धानाः। धानानां सक्तवः। प्रकृत्यन्तरनिवृत्तिरत्र विवक्षिता, न तादर्थ्यम्—धानानां सक्तवो न लाजानामिति। विकृतेरिति किम्? उदकार्थः कूपः। विकृतिग्रहणे अक्रियमाणे या काचित्प्रकृतिर्गृह्येत, नोपादानकारणमेव। भवति च कूप उदकस्य प्रकृतिः तत्रोत्पादनात्। न तु उदकं तस्य विकृतिः, अत्यन्तभेदात्। प्रकृताविति किम्? अस्यर्था कोशी। असिरयसो विकृतिर्भवति, न तु कोशी तस्य प्रकृतिर्भवति। द्वयोरपि प्रकृतिविकृत्योर्ग्रहणे विवक्षितः प्रकृतिविकारभावो लभ्यते॥

## छदिरुपधिबलेर्ढञ् ॥ १३ ॥

छदिरादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये। छस्यापवादः। छादिषेयाणि तृणानि। औपधेयं दारु। वालेयास्तण्डुलाः। उपधिशब्दात् स्वार्थे प्रत्ययः। उपाधीयत इत्युपधिः, रथाङ्गम्। औपधेयमपि तदेव दारु॥

## ऋषभोपानहोर्ञ्यः ॥ १४ ॥

ऋषभ उपानह इत्येताभ्यां ञ्यः प्रत्ययो भवति तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये। छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। चर्मण्यपि प्रकृतित्वेन विवक्षिते पूर्वविप्रतिषेधादयमेवेष्यते—औपानह्यं चर्म॥

## चर्म्मणोऽञ् ॥ १५ ॥

चर्मण इति षष्ठी। चर्मणो या विकृतिस्तद्वाचिनः प्रातिपदिकादञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये। छस्यापवादः। वारध्रं चर्म। वारत्रं चर्म॥

---

माणव—माणव तथा चरक शब्दों से 'तस्मै हितम्' अर्थ में खञ् प्रत्यय होता है।

तदर्थम्—विकृत्यर्थ प्रकृति ( उपादानकारण ) के अभिधेय होने पर विकृतिवाचक ( उपादेयार्थक ) शब्दों से यथाविहित प्रत्यय होते हैं।

छदिरुपधि—छदिर्, उपधि तथा बलि शब्दों से 'तदर्थं विकृतेः प्रकृतौ' अर्थ में ढञ् प्रत्यय होता है।

ऋषभोपानहोः—ऋषभ तथा उपानह शब्दों से 'तदर्थं विकृतेः प्रकृतौ' अर्थ में ञ्य प्रत्यय होता है।

चर्मणोऽञ्—चर्म-विकार-वाचक प्रातिपदिक से 'तदर्थं विकृतेः प्रकृतौ' अर्थ में अञ् प्रत्यय होता है।

## तदस्य तदस्मिन् स्यादिति ॥ १६ ॥

तदिति प्रथमा समर्थविभक्तिः, अस्येति प्रत्ययार्थः, स्यादिति प्रकृतिविशेषणम्, इतिकरणो विवक्षार्थः। एवं द्वितीयेऽपि वाक्ये। सप्तम्यर्थे तु प्रत्यय इत्येतावान् विशेषः। प्रथमासमर्थात् षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति यत्तत्प्रथमासमर्थं स्याच्चेत्तद्भवति। इतिकरणस्ततश्चेद्विवक्षा। प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः। प्रासादीयं दारु। सप्तम्यर्थे खल्वपि—प्राकारोऽस्मिन् देशे स्यात् प्राकारीयो देशः। प्रासादीया भूमिः। स्यादिति सम्भावनायां लिङ् सम्भावनेऽलमिति चेदित्यादिना। इष्टकानां बहुत्वेन तत्र सम्भाव्यते—प्राकार आसामिष्टकानां स्यादिति। देशस्य च गुणेन सम्भाव्यते—प्रासादोऽस्मिन् देशे स्यादिति। प्रकृतिविकारभावस्तादर्थ्यं चेह न विवक्षितं किं तर्हि योग्यतामात्रम्, तेन पूर्वस्यायमविषयः। द्विस्तद्ग्रहणं न्यायप्रदर्शनार्थम्—अनेकस्मिन् प्रत्ययार्थे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति। अथेह कस्मान्न भवति—प्रासादो देवदत्तस्य स्यादिति ? गुणवानयं सम्भाव्यते, प्रासादलाभोऽस्येति। इतिकरणो विवक्षार्थ इत्युक्तम् ॥

## परिखाया ढञ् ॥ १७ ॥

परिखाशब्दाद् ढञ् प्रत्ययो भवति तदस्य तदस्मिन् स्यादित्येतस्मिन्नर्थे। छस्यापवादः। पारिखेयो भूमिः। छयतोः पूर्णोवधिः, इतः परमन्यः प्रत्ययो विधीयते ॥

## प्राग्वतेष्ठञ् ॥ १८ ॥

तेन तुल्यं क्रिया चेद्वतिरिति वक्ष्यति। प्रागेतस्माद्वतिसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ठञ् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—पारायणतुरायणचान्द्रायणं वर्त्तयति पारायणिकः, तौरायणिकः, चान्द्रायणिकः ॥

## आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ १९ ॥

तदर्हतीति वक्ष्यति। आ एतस्मादर्हसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यो गोपुच्छादीन् वर्जयित्वा। अभिविधावयमाकारः। तेनार्हत्यर्थेऽपि ठक् भवत्येव। ठञधिकारमध्ये तदपवादः ठग् विधीयते। वक्ष्यति—तेन क्रीतम्। नैष्किकम्। पाणिकम्। अगोपुच्छसंख्यापरिमाणादिति किम् ? गोपुच्छेन क्रीतं गौपुच्छिकम्। संख्या—षाष्टिकम्। परिमाण—प्रास्थिकम्, कौडविकम्। ठञ् प्रत्युदाह्रियते। संख्यापरिमाणयोः को विशेषः ? भेदगणनं संख्या एकत्वादिः। गुरुत्वमानमुन्मानं पलादिः। आयाममानं प्रमाणं वितस्त्यादिः। आरोहपरिणाहमानं परिमाणं प्रस्थादिः ॥

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥

## असमासे निष्कादिभ्यः ॥ २० ॥

आर्हादित्येव। निष्कादिभ्यः शब्देभ्योऽसमासे ठक् प्रत्ययो भवति आर्हीयेष्वर्थेषु।

---

तदस्य—प्रथमासमर्थ शब्द से षष्ठ्यर्थ तथा सप्तम्यर्थ में यथाविहित प्रत्यय होते हैं यदि प्रथमासमर्थ 'स्यात्' ( सम्भावनाविषयीभूत ) हो।

परिखायाः—परिखा शब्द से 'तदस्य तदस्मिन् स्यात्' अर्थ में ढञ् प्रत्यय होता है।

प्राग्वतेः—'तेन तुल्यं क्रिया चेद्वतिः' सूत्र से पहले ठञ् प्रत्यय का अधिकार समझना चाहिए।

आर्हात्—'तदर्हति०' सूत्र-पर्यन्त अर्थों में ( आर्हीयार्थ में ) गोपुच्छ, संख्यावाचक तथा परिमाण-वाचक शब्दों से भिन्न शब्दों से ठक् प्रत्यय का अधिकार समझना चाहिए।

असमासे—निष्क आदि शब्दों से आर्हीय अर्थों में असमास में ठक् प्रत्यय होता है।

ठञोऽपवादः। नैष्किकम्। पाणिकम् । पादिकम् । माषिकम्। असमास इति किम्? परमनैष्किकम्, उत्तमनैष्किकम्। ठञेव भवति। परिमाणान्तस्येत्युत्तरपदवृद्धिः। अथ किमर्थमसमास इत्युच्यते, यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते? निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य, उगवादिभ्यो यत्-गव्यम्, सुगव्यम् , अतिसुगव्यम् । विभाषा हविरपूपादिभ्यः-अपूप्यम्, अपूपीयम्; यवापूप्यम्, यवापूपीयम्। शरीरावयवाद्यत्-दन्त्यम्, राजदन्त्यमित्येवमादि सिद्धं भवति। इत उत्तरं च संख्यापूर्वपदानां तदन्तविधिरिष्यते, पारायणतुरायणचान्द्रायणं वर्तयति-द्वैपारायणिकः, त्रैपारायणिकः। लुगन्तायास्तु प्रकृतेर्नेष्यते-द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। त्रिशूर्पम्। द्विशूर्पेण क्रीतमिति तदन्तविधिप्रतिषेधात् शूर्पादञन्यतरस्यामित्यञ् न भवति, सामान्यविहितष्ठञेव भवति-द्विशौर्पिकम्। (१)ठञो द्विगुं प्रत्यनिमित्तत्वाल्लुगभावः। तथा चोक्तम्-प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति। निष्क। पण। पाद। माष। वाह। द्रोण। षष्टि। निष्कादिः॥

## शताच्च ठन्यतावशते ॥ २१ ॥

आर्हादित्येव। शतशब्दात् ठन्यतौ प्रत्ययौ भवतः अशतेऽभिधेये आर्हीयेष्वर्थेषु। कनोऽपवादः। शतेन क्रीतं शतिकम्। शत्यम्। अशत इति किम्? शतं परिमाणमस्य शतकं निदानम्। प्रत्ययार्थोऽत्र संघः शतमेव वस्तुतः प्रकृत्यर्थान्न भिद्यते। इह तु न भवति-शतेन क्रीतं शत्यं शाटकशतमिति, शतिकं शाटकशतमिति। वाक्येन ह्यत्र प्रत्ययार्थस्य तत्त्वं गम्यते, न श्रुत्या। तथा चोक्तम्-शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेध इति। चकारोऽसमास इत्यनुकर्षणार्थः। द्वौ च शतं च द्विशतम्, द्विशतेन क्रीतं द्विशतकम्। त्रिशतकम्। प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीत्यनया इष्ट्या समासादपि प्राप्नोति॥

## संख्याया अतिशदन्तायाः कन् ॥ २२ ॥

आर्हादित्येव। संख्याया अत्यन्ताया अशदन्तायाश्च कन् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः। पञ्चभिः क्रीतः पञ्चकः। बहुकः। गणकः। अतिशदन्ताया इति किम्? साप्ततिकः, चात्वारिंशत्कः। अर्थवतस्तिशब्दस्य ग्रहणाद् डतेः पर्युदासो न भवति-कतिकः॥

## वतोरिड् वा ॥ २३ ॥

वत्वन्तस्य संख्यात्वात् कन् सिद्ध एव, तस्य त्वनेन वा इडागमो विधीयते। वतोः परस्य कपो वा इडागमो भवति आर्हीयेष्वर्थेषु। तावतिकः, तावत्कः। यावतिकः, यावत्कः॥

---

शताच्च—शतभिन्न पदार्थ के अभिधेय होने पर शत शब्द से आर्हीय अर्थों में ठन् तथा यत् प्रत्यय होते हैं।

संख्यायाः—अत्यन्त एवम् अशदन्त संख्या वाचक शब्दों से आर्हीयार्थ में कन् प्रत्यय होता है।

वतोः—वत्वन्त संख्यावाचक शब्दों से विहित कन् प्रत्यय को विकल्प से इट् का आगम होता है।

---

(१) ठञो द्विगुम्प्रतीत्येष ग्रन्थः पुस्तकान्तरे नास्ति॥

## विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् ॥ २४ ॥

विंशतित्रिंशद्भ्यां ड्वुन् प्रत्ययो भवति असंज्ञायां विषये आर्हीयेष्वर्थेषु। विंशकः। त्रिंशकः। ति विंशतेर्डिति इति तिलोपः। असंज्ञायामिति किम्? विंशतिकः, त्रिंशत्कः। कथं पुनरत्र कन्, यावता अतिशदन्ताया इति पर्युदासेन भवितव्यम्? योगविभागः करिष्यते—विंशतित्रिंशद्भ्यां कन् प्रत्ययो भवति। ततो ड्वुन्नसंज्ञायामिति ॥

## कंसाट्टिठन् ॥ २५ ॥

कंसाट्टिठन् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः। टकारो ङीबर्थः। इकार उच्चारणार्थः। नकारः स्वरार्थः। कंसिकः। कंसिकी। ॐअर्धाच्चेति वक्तव्यम्ॐ। अर्द्धिकः। अर्द्धिकी। ॐकार्षापणाट्टिठन् वक्तव्यःॐ। कार्षापणिकः। कार्षापणिकी। ॐप्रतिशब्दश्चास्यादेशो वा वक्तव्यःॐ। प्रतिकः। प्रतिकी ॥

## शूर्पादञन्यतरस्याम् ॥ २६ ॥

शूर्पशब्दादन्यतरस्यामञ् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः, पक्षे सोऽपि भवति। शूर्पेण क्रीतं शौर्पम्। शौर्पिकम् ॥

## शतमानविंशतिकसहस्रवसनादण् ॥ २७ ॥

शतमानादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठक्ठञ्कनामपवादः। शतमानेन क्रीतं शातमानम्। वैंशतिकम्। साहस्रम्। वासनम् ॥

## अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ २८ ॥

आर्हादित्येव। अध्यर्धशब्दः पूर्वो यस्मिंस्तस्मादध्यर्द्धपूर्वात् प्रातिपदिकाद् द्विगोश्च परस्य आर्हीयस्य लुग् भवति असंज्ञायां विषये। अध्यर्द्धकंसम्। द्विकंसम्। त्रिकंसम्। अध्यर्द्धशूर्पम्। द्विशूर्पम्। त्रिशूर्पम्। असंज्ञायामिति किम्? पाञ्चलोहितिकम्। पाञ्चकलापिकम्। प्रत्ययान्तरस्य विशेषणमसंज्ञाग्रहणम्—न चेत् प्रत्ययान्तं संज्ञेति। अध्यर्द्धशब्दः संख्यैव, किमर्थं भेदेनोपादीयते? ज्ञापकार्थम्–क्वचिदस्य संख्याकार्यं न भवति, संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति ॥

## विभाषा कार्षापणसहस्राभ्याम् ॥ २९ ॥

---

विंशति—विंशति तथा त्रिंशत शब्दों से आर्हीय अर्थों में असंज्ञाविषय में ड्वुन् प्रत्यय होता है।

कंसात्—कंस शब्द से आर्हीयार्थ में असंज्ञाविषय में टिठन् प्रत्यय होता है।

अर्धाच्चेति—अर्ध शब्द से भी टिठन् प्रत्यय समझना चाहिए।

कार्षापणात्—कार्षापण शब्द से भी टिठन् प्रत्यय अवगन्तव्य है।

प्रतिशब्दश्च—कार्षापण शब्द को टिठन् प्रत्यय के साथ-साथ विकल्प से प्रति आदेश भी समझना चाहिए।

शतमान—शतमान आदि शब्दों से आर्हीयार्थ में अण् प्रत्यय होता है।

अध्यर्द्ध—अध्यर्द्धपूर्वक प्रातिपदिक तथा द्विगु से परवर्ती आर्हीयार्थक प्रत्ययों का लुक् हो जाता है असंज्ञा-विषय में।

विभाषा—अध्यर्द्धकार्षापण तथा अध्यर्द्धसहस्र शब्दों से और कार्षापणशब्दोत्तरपदक एवम् सहस्रशब्दोत्तरपदक द्विगु से विहित आर्हीयार्थक प्रत्यय का विकल्प से लुक् हो जाता है।

अध्यर्द्धपूर्वाद् द्विगोश्च कार्षापणसहस्रान्तादुत्तरस्यार्हीयप्रत्ययस्य विभाषा लुग्भवति। पूर्वेण लुकि नित्ये प्राप्ते विकल्प्यते। अध्यर्द्धकार्षापणम्। अध्यर्द्धकार्षापणिकम्। द्विकार्षापणम्। द्विकार्षापणिकम्। औपसंख्यानिकस्य टिठनो लुक्। अलुक्पक्षे च प्रतिरादेशो विकल्पितः—अध्यर्द्धप्रतिकम्। द्विप्रतिकम्। त्रिप्रतिकम्। सहस्रात्—अध्यर्द्धसहस्रम्। अध्यर्द्धसाहस्रम्। द्विसहस्रम्। द्विसाहस्रम्। अलुक्पक्षे संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः। ॐसुवर्णशतमानयोरूपसंख्यानम्ॐ। अद्धयर्धसुवर्णम्। अध्यर्द्धसौवर्णिकम्। द्विसुवर्णम्। द्विसौवर्णिकम्। अध्यर्धशतमानम्। अद्धयर्धशातमानम्। द्विशतमानम्। द्विशातमानम्। परिमाणान्तस्येत्युत्तरपदवृद्धिः॥

## द्वित्रिपूर्वान्निष्कात्॥ ३०॥

द्विगोरित्येव। द्वित्रिपूर्वाद् द्विगोर्निष्कान्तादार्हीयप्रत्ययस्य विभाषा लुग्भवति। द्विनिष्कम्। द्विनैष्किकम्। त्रिनिष्कम्। त्रिनैष्किकम्। ॐबहुपूर्वाच्चेति वक्तव्यम्ॐ। बहुनिष्कम्। बहुनैष्किकम्। परिमाणान्तस्येत्युत्तरपदवृद्धिः॥

## बिस्ताच्च॥ ३१॥

द्वित्रिपूर्वादिति चकारेणानुकृष्यते। द्वित्रिपूर्वाद् बिस्तान्तात् द्विगोः परस्यार्हीयप्रत्ययस्य विभाषा लुग्भवति। द्विबिस्तम्। द्विबैस्तिकम्। त्रिबिस्तम्। त्रिबैस्तिकम्। बहुबिस्तम्। बहुबैस्तिकम्(१)॥

## विंशतिकात् खः॥ ३२॥

अध्यर्धपूर्वात्प्रातिपदिकाद् द्विगोश्च विंशतिकशब्दान्तादार्हीयेष्वर्थेषु खः प्रत्ययो भवति। अद्ध्यर्धविंशतिकीनम्। द्विविंशतिकीनम्। त्रिविंशतिकीनम्। विधानसामर्थ्याल्लुङ् न भवति॥

## खार्या ईकन्॥ ३३॥

अध्यर्द्धपूर्वाद् द्विगोरित्येव। अध्यर्द्धपूर्वात् प्रातिपदिकाद् द्विगोश्च खारीशब्दान्तादार्हीयेष्वर्थेषु ईकन् प्रत्ययो भवति। अध्यर्द्धखारीकम्। द्विखारीकम्। ॐकेवलाच्चेति वक्त-

---

**सुवर्ण**—अध्यर्द्धसुवर्ण एवम् अध्यर्द्धशतमान शब्दों से और सुवर्णोत्तरपदक तथा शतमानोत्तरपदक द्विगु से विहित आर्हीयार्थक प्रत्यय का भी विकल्प से ही लुक् समझना चाहिए।

**द्वित्रि**—द्विपूर्वक तथा त्रिपूर्वक निष्कशब्दान्त द्विगु से विहित आर्हीयार्थक प्रत्यय का विकल्प से लुक् हो जाता है।

**बहु**—बहुपूर्वक निष्कान्त द्विगु से विहित आर्हीयार्थक प्रत्यय का भी विकल्प से लुक् समझना चाहिए।

**बिस्ताच्च**—द्विपूर्वक तथा त्रिपूर्वक बिस्तशब्दान्त द्विगु से विहित आर्हीयार्थक प्रत्यय का भी विकल्प से लुक् समझना चाहिए।

**विंशतिकात्**—अध्यर्द्धविंशतिक तथा विंशतिशब्दोत्तरपदक द्विगु से आर्हीयार्थक ख प्रत्यय होता है।

**खार्याः**—अध्यर्द्धखारी शब्द तथा खारीशब्दोत्तरपदक द्विगु से आर्हीयार्थक ईकन् प्रत्यय होता है।

**केवलाच्चेति**—केवल खारी शब्द से भी ईकन् प्रत्यय अवगन्तव्य है।

---

(१) योगविभाग उत्तरार्थं इत्यधिकं पुस्तकान्तरे।

ण्यम्॥। खारीकम्। ॥काकिण्याश्चोपसंख्यानम्॥। अध्यर्द्धकाकिणीकम्। द्विकाकिणीकम्। त्रिकाकिणीकम्। ॥केवलायाश्च॥। काकिणीकम्॥

## पणपादमापशताद्यत् ॥ ३४ ॥

अध्यर्द्धपूर्वाद् द्विगोरित्येव। अध्यर्द्धपूर्वाद् द्विगोश्च पणपादमाषशतशब्दान्तादार्हीयेष्वर्थेषु यत् प्रत्ययो भवति। अध्यर्द्धपण्यम्। द्विपण्यम्। त्रिपण्यम्। पाद–अध्यर्द्धपाद्यम्। द्विपाद्यम्। त्रिपाद्यम्। पद्भावो न भवति, पद्यत्यतदर्थे इतिः प्राण्यङ्गस्य स इष्यते, इदं तु परिमाणम्। माष–अध्यर्द्धमाष्यम्। द्विमाष्यम्। त्रिमाष्यम्। शत–अध्यर्द्धशत्यम्। द्विशत्यम्। त्रिशत्यम्॥

## शाणाद्वा ॥ ३५ ॥

अध्यर्द्धपूर्वाद् द्विगोरित्येव। शाणशब्दादध्यर्द्धपूर्वाद् द्विगोरार्हीयेष्वर्थेषु वा यत् प्रत्ययो भवति। ढञोऽपवादः, पक्षे सोऽपि भवति, तस्य च लुक्। अध्यर्द्धशाण्यम्। अध्यर्द्धशाणम्। द्विशाण्यम्। द्विशाणम्। त्रिशाण्यम्। त्रिशाणम्। ॥शताच्चेति वक्तव्यम्॥। अध्यर्द्धशत्यम्। अध्यर्द्धशतम्। द्विशत्यम्। द्विशतम्। त्रिशत्यम्। त्रिशतम्॥

## द्वित्रिपूर्वादण् च ॥ ३६ ॥

शाणाद्वेत्येव। द्वित्रिपूर्वाच्छाणान्तात्प्रतिपदिकादार्हीयेष्वर्थेषु अण् प्रत्ययो भवति, चकाराद्यच्च वा। तेन त्रैरूप्यं भवति–द्वैशाणम्। द्विशाण्यम्। द्विशाणम्। त्रैशाणम्। त्रिशाण्यम्। त्रिशाणम्। परिमाणान्तस्यासंज्ञाशाणयोरिति पर्युदासादादिवृद्धिरेव भवति॥

## तेन क्रीतम् ॥ ३७ ॥

ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः, तेषामितः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते। तेनेति तृतीयासमर्थात् क्रीतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सप्तत्या क्रीतं साप्ततिकम्। आशीतिकम्। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्। शत्यम्। शतिकम्। द्विकम्। त्रिकम्। तेनेति मूल्यात्करणे तृतीया समर्थविभक्तिः। अन्यत्रानभिधानान्न भवति–देवदत्तेन क्रीतम्। पाणिना क्रीतमिति। द्विवचनबहुवचनान्तात्प्रत्ययो न भवति–प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतमिति अनभिधानादेव। यत्र तु प्रकृत्यर्थस्य संख्याभेदावगमे प्रमाणमस्ति तत्र द्विवचनबहुवचनान्तादपि प्रत्ययो भवति–द्वाभ्यां

---

काकिण्याः—अध्यर्द्धकाकिणी शब्द तथा काकिणीशब्दान्त द्विगु से भी ईकन् प्रत्यय समझना चाहिए।

केवलायाश्च—केवल काकिणी शब्द से भी ईकन् प्रत्यय समझना चाहिए।

पणपाद—अध्यर्द्धपूर्वक पण, पाद, माष तथा शत शब्दों से तथा पणशब्दान्त, पादशब्दान्त, माषशब्दान्त एवम् शतशब्दान्त द्विगु से आर्हीयार्थ में यत् प्रत्यय होता है।

शाणाद्वा—अध्यर्द्धशाण तथा शाणशब्दान्त द्विगु से आर्हीयार्थ मे विकल्प से यत् प्रत्यय होता है।

शताच्चेति—अध्यर्द्धशत तथा शतशब्दान्त द्विगु से भी आर्हीयार्थक यत् प्रत्यय समझना चाहिए।

द्वित्रि—द्विपूर्वक तथा त्रिपूर्वक शाणशब्दान्त द्विगु से आर्हीयार्थ में अण् तथा विकल्प से यत् प्रत्यय होते हैं।

तेन क्रीतम्—तृतीयासमर्थ प्रातिपदिक से 'क्रीतम्' (तेन क्रीतम्) अर्थ में यथाविहित प्रत्यय होते हैं।

क्रीतं द्विकम्, त्रिकम्, पञ्चकम्। तथा-मुद्गैः क्रीतं मौद्गिकम्, माषिकम्। न ह्येकेन मुद्गेन क्रयः संभवति॥

## तस्य निमित्तं संयोगोत्पातौ ॥ ३८ ॥

तस्येति षष्ठीसमर्थान्निमित्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तन्निमित्तं संयोगश्चेत् स भवति उत्पातो वा। संयोगः संबन्धः, प्राणिनां शुभाशुभसूचकः महाभूतपरिणामः उत्पातः। शतस्य निमित्तं धनपतिना संयोगः शत्यः। शतिकः। साहस्रः। उत्पातः खल्वपि-शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनम् शत्यम्। शतिकम्। साहस्रम्। ॐतस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्ॐ। वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्। ॐसन्निपाताच्चेति वक्तव्यम्ॐ। सान्निपातिकम्॥

## गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ ३९ ॥

गोशब्दाद् द्व्यचश्च प्रातिपदिकात् संख्यापरिमाणाश्वादिविवर्जिताद्यत् प्रत्ययो भवति तस्य निमित्तं संयोगोत्पाताविित्येतस्मिन्नर्थे। ठञादीनामपवादः। गोर्निमित्तं संयोग उत्पातो वा गव्यः। द्व्यचः खल्वपि-धन्यम्, स्वर्ग्यम्, यशस्यम्, आयुष्यम्। असंख्यापरिमाणाश्वादेरिति किम्? पञ्चानां निमित्तं पञ्चकम्। सप्तकम्। अष्टकम्। परिमाण-प्रास्थिकम्। खारीकम्। अश्वादिः-आश्विकः। ॐब्रह्मवर्चसादुपसंख्यानम्ॐ। ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः ब्रह्मवर्चस्यः। अश्व। अश्मन्। गण। ऊर्णा। उमा। वसु। वर्ष। भङ्ग। अश्वादिः॥

## पुत्राच्छ च ॥ ४० ॥

पुत्रशब्दाच्छः प्रत्ययो भवति, चकाराद्यच्च, तस्य निमित्तं संयोगोत्पाताविित्येतस्मिन् विषये। द्व्यच इति नित्ये यति प्राप्ते वचनम्। पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयः। पुत्र्यः॥

## सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥

सर्वभूमिपृथिवीशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः तस्य निमित्तं संयोगोत्पाताविित्येतस्मिन् विषये। ठकोऽपवादः। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः। पार्थिवः। सर्वभूमेरनुशतिकादिपाठादुभयपदवृद्धिः॥

---

**तस्य निमित्तम्**—षष्ठीसमर्थ प्रातिपदिक से सम्बन्धात्मक अथवा उत्पातात्मक निमित्त अर्थ (तस्य निमित्तम्) में यथाविहित प्रत्यय होते हैं।

**तस्य**—'तस्य निमित्तम्' सूत्र के प्रसङ्ग में यह समझना चाहिए कि षष्ठ्यन्त वात, पित्त तथा श्लेष्मन् शब्दों से शमनात्मक तथा कोपनात्मक निमित्त अर्थ में प्रत्यय का विधान होता है।

**सन्निपाताच्चेति**—षष्ठीसमर्थ सन्निपात शब्द से भी शमनात्मक तथा कोपनात्मक निमित्त अर्थ में प्रत्यय का विधान समझना चाहिए।

**गोद्व्यचो**—संयोगात्मक अथवा उत्पातात्मक निमित्त अर्थ में षष्ठी-समर्थ गो शब्द तथा संख्यावाचकभिन्न, परिमाणवाचकभिन्न एवम् अश्वादिभिन्न द्व्यच् प्रातिपदिकों से यत् प्रत्यय होता है।

**ब्रह्म**—ब्रह्मवर्चस् शब्द से भी यत् प्रत्यय का प्रतिपादन करना चाहिए।

**पुत्रात्**—संयोगात्मक अथवा उत्पातात्मक निमित्त अर्थ में षष्ठीसमर्थ पुत्र शब्द से विकल्प से छ प्रत्यय तथा यत् प्रत्यय होते हैं।

**सर्वभूमि**—संयोगात्मक अथवा उत्पातात्मक निमित्त अर्थ में षष्ठीसमर्थ सर्वभूमि तथा पृथिवी शब्दों से क्रमशः अण् तथा अञ् प्रत्यय होते हैं।

## तस्येश्वरः ॥ ४२ ॥

तस्येति षष्ठीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यामणञौ प्रत्ययौ भवत ईश्वर इत्येतस्मिन् विषये । सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः । षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देशः प्रत्ययार्थस्य निवृत्तये । अन्यथा संयोगोत्पाताविव ईश्वरोऽपि प्रत्ययार्थस्य निमित्तस्य विशेषणं संभाव्येत ॥

## तत्र विदित इति च ॥ ४३ ॥

तत्रेति सप्तमीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतो विदित इत्येतस्मिन्नर्थे । विदितो ज्ञातः, प्रकाशित इत्यर्थः । सर्वभूमौ विदितः सार्वभौमः । पार्थिवः ॥

## लोकसर्वलोकाट्ठञ् ॥ ४४ ॥

लोकसर्वलोकशब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्यां विदित इत्येतस्मिन् विषये ठञ् प्रत्ययो भवति । लोके विदितः लौकिकः । सार्वलौकिकः । अनुशतिकादित्वादुभयपदवृद्धिः ॥

## तस्य वापः ॥ ४५ ॥

तस्येति षष्ठीसमर्थाद्वाप इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । उप्यतेऽस्मिन्निति वापः, क्षेत्रमुच्यते । प्रस्थस्य वापः क्षेत्रं प्रास्थिकम् । द्रौणिकम् । खारीकम् ॥

## पात्रात् ष्ठन् ॥ ४६ ॥

पात्रशब्दात् ष्ठन्प्रत्ययो भवति, तस्य वाप इत्येतस्मिन् विषये । ठञोऽपवादः । नकारः स्वरार्थः । षकारो ङीषर्थः । पात्रशब्दः परिमाणवाची । पात्रस्य वापः पात्रिकं क्षेत्रम् । पात्रिकी क्षेत्रभक्तिः ॥

## तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति यत्तत्प्रथमासमर्थं वृद्ध्यादि दीयते चेत्तद्भवति । दीयते इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसंबध्यते । तत्र यदधमर्णेन उत्तमर्णाय मूलधनातिरिक्तं देयं तद्वृद्धिः । ग्रामादिषु स्वामिग्राह्यो भाग आयः । पटादीनामुपादानमूलादतिरिक्तं द्रव्यं लाभः । रक्षानिर्देशो राजभागः शुल्कः । उत्कोच उपदा । पञ्चास्मिन् वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः । सप्तकः । शत्यः । शतिकः । साहस्रः । ॐचतुर्थ्यर्थं उपसंख्यानम्ॐ । पञ्चास्मै वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चको देवदत्तः । सिद्धं त्वधिकरणत्वेन विवक्षितत्वात् । सममब्राह्मणे दानमिति यथा ॥

---

तस्येश्वरः—षष्ठीसमर्थं सर्वभूमि तथा पृथिवी शब्दों से ईश्वर अर्थ में भी क्रमशः अण् तथा अञ् प्रत्यय होते हैं ।

तत्र—सप्तमीसमर्थं सर्वभूमि तथा पृथिवी शब्दों से विदित ( प्रसिद्ध ) अर्थ में क्रमशः अण् तथा अञ् प्रत्यय होते हैं ।

लोक—सप्तमीसमर्थ लोक तथा सर्वलोक शब्दों से विदित अर्थ मे ठञ् प्रत्यय होता है ।

तस्य—षष्ठीसमर्थ प्रातिपदिक से वाप ( क्षेत्र ) अर्थ में यथाविहित प्रत्यय होते हैं ।

पात्रात—षष्ठीसमर्थ पात्र शब्द से वाप अर्थ में ष्ठन् प्रत्यय होता है ।

तदस्मिन्—वृद्धि, आय, लाभ, शुल्क एवम् उपदा ( घूस ) के रूप में दीयमान पदार्थ के वाचक प्रथमासमर्थ प्रातिपदिक से सप्तम्यर्थ में यथाविहित प्रत्यय होते हैं ।

चतुर्थ्यर्थे—चतुर्थ्यर्थ में भी उक्त प्रत्यय का प्रतिपादन करना चाहिए ।

## पूरणार्द्धाट्ठन् ॥ ४८ ॥

पूरणवाचिनः शब्दादर्द्धशब्दाच्च ठन् प्रत्ययो भवति तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयत इत्येतस्मिन्नर्थे। यथायथं ठक्ठिठनोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वीतीयिकः। तृतीयिकः। पञ्चमिकः। सप्तमिकः। अर्द्धिकः। अर्द्धशब्दो रूपकार्द्धस्य रूढिः ॥

## भागाद्यच्च ॥ ४९ ॥

भागशब्दाद्यत् प्रत्ययो भवति, चकाराट्ठंश्च, तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयत इत्येतस्मिन्नर्थे। ठञोऽपवादः। भागो वृद्ध्यादिरस्मिन् दीयते भाग्यम्, भागिकं शतम्। भाग्या, भागिका विंशतिः। भागशब्दोऽपि रूपकार्द्धस्य वाचकः ॥

## तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ॥ ५० ॥

तदिति द्वितीयासमर्थाद्धरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। प्रकृतिविशेषणं भाराद्वंशादिभ्य इति–वंशादिभ्यः परो यो भारशब्दस्तदन्तात्प्रातिपदिकादिति। वंशभारं हरति वहत्यावहति वा वांशभारिकः। कौटजभारिकः। बाल्वजभारिकः। भारादिति किम्? वंशं हरति। वंशादिभ्य इति किम्? व्रीहिभारं हरति। अपरा वृत्तिः–भाराद्वंशादिभ्य इति, भारभूतेभ्यो वंशादिभ्य इत्यर्थः। भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणम्। भारभूतान् वंशान् हरति वांशिकः। कौटजिकः। बाल्वजिकः। भारादिति किम्? वंशं हरति। वंशादिभ्य इति किम्? भारभूतान् व्रीहीन् वहति। सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः, तदुभयमपि ग्राह्यम्। हरति देशान्तरं प्रापयति चोरयति वा। वहत्युत्क्षिप्य धारयतीत्यर्थः। आवहति उत्पादयतीत्यर्थः। वंश। कुटज। बल्वज। मूल। अक्ष। स्थूणा। अश्मन्। अश्व। इक्षु। खट्वा। वंशादिः ॥

## वस्नद्रव्याभ्यां ठन्कनौ ॥ ५१ ॥

वस्नद्रव्यशब्दाभ्यां द्वितीयासमर्थाभ्यां यथासंख्यं ठन् कन् इत्येतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु। वस्नं हरति वहति वा वस्निकः। द्रव्यकः ॥

## संभवत्यवहरति पचति ॥ ५२ ॥

तदिति द्वितीया समर्थविभक्तिरनुवर्त्तते। तदिति द्वितीयासमर्थात्संभवत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। तत्राधेयस्य प्रमाणानतिरेकः संभवः। उपसंहरणमवहारः। विक्लेदनं पाकः। प्रस्थं संभवति अवहरति पचति वा प्रास्थिकः। कौडविकः। खारीकः। ननु च पाके च संभवोऽस्ति? नास्त्यत्र नियोगः–प्रस्थं पचति ब्राह्मणी प्रास्थिकी।

---

पूरणार्धात्—वृद्धि, आय, लाभ, शुल्क एवम् उपदा के रूप में दीयमान पदार्थ के वाचक प्रथमासमर्थ पूरणप्रत्ययान्त शब्द तथा अर्द्ध शब्दों से सप्तम्यर्थ में ठन् प्रत्यय होता है।

भागात्—वृद्धि, आय, लाभ, शुल्क एवम् उपदा के रूप में दीयमान पदार्थ के वाचक प्रथमासमर्थ भाग शब्द से यत् तथा पाक्षिक ठन् प्रत्यय भी होते हैं।

तद्धरति—हरति, वहति एवम् आवहति अर्थों में द्वितीयासमर्थ भारशब्दोत्तरपदक वंश, कुटज आदि शब्दों से अथवा भारस्वरूप वंश आदि शब्दों से यथाविहित प्रत्यय होते हैं।

वस्न—द्वितीयासमर्थ वस्न तथा द्रव्य शब्दों से यथाक्रम ठन् तथा कन् प्रत्यय होते हैं हरति, वहति तथा आवहति अर्थों में।

सम्भवत्यव—द्वितीयासमर्थ प्रातिपदिक से सम्भवति, अवहरति ( उपसंहरण करता है ) तथा पचति अर्थों में यथाविहित प्रत्यय होते हैं।

छतत्पचतीति द्रोणादण्चछ । द्रोणं पचति द्रौणी । द्रौणिकी ॥

## आढकाचितपात्रात् खोऽन्यतरस्याम् ॥ ५३ ॥

आढकाचितपात्रशब्देभ्यो द्वितीयासमर्थेभ्योऽन्यतरस्यां संभवादिष्वर्थेषु खः प्रत्ययो भवति । ठञोऽपवादः, पक्षे सोऽपि भवति । आढकं संभवत्यवहरति पचति वा आढकीना । आढकिकी । आचितीना । आचितिकी । पात्रीणा । पात्रिकी ॥

## द्विगोष्ठंश्च ॥ ५४ ॥

आढकाचितपात्रादित्येव । आढकाचितपात्रान्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् प्रत्ययो भवति, चकारात्खः, अन्यतरस्याम् । विधानसामर्थ्यादेवानयोर्लुङ्न भवति । ठञस्तु पक्षेऽलुग्ज्ञातस्याध्यर्द्धपूर्वद्विगोरिति लुग् भवत्येव । नकारः स्वरार्थः । षकारो ङीषर्थः । द्व्याढकिकी । द्व्याढकीना । द्व्याढकी । द्व्याचितिकी । द्व्याचितीना । द्व्याचिता । अपरिमाणबिस्ताचितेति ङीपः प्रतिषेधः । द्विपात्रिकी । द्विपात्रीणा । द्विपात्री ॥

## कुलिजाल्लुक्खौ च ॥ ५५ ॥

द्विगोरित्येव । कुलिजशब्दान्ताद् द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ भवतः, चकारात्ष्ठंश्च । अन्यतरस्यांग्रहणानुवृत्त्या लुगपि विकल्प्यते, ठञः पक्षे श्रवणं भवति । तेन चातूरूप्यं संपद्यते—द्वे कुलिजे संभवत्यवहरति पचति वा द्विकुलिजिकी, द्विकुलिजीना, द्विकुलिजा, द्वैकुलिजिकी । परिमाणान्तस्यासंज्ञाशाणयोरित्यत्र कुलिजग्रहणमपीष्यते, तेहोत्तरपदवृद्धिरपि न भवति ॥

## सोऽस्यांशवस्नभृतयः ॥ ५६ ॥

स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमासमर्थमंशवस्नभृतयश्चेत्ता भवन्ति । अंशो भागः । वस्नं मूल्यम् । भृतिर्वेतनम् । पञ्च अंशो वस्नो वा भृतिर्वास्य पंचकः । सप्तकः । साहस्रः ॥

## तदस्य परिमाणम् ॥ ५७ ॥

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमासमर्थ परिमाणं चेत्तद्भवति । प्रस्थः परिमाणमस्य प्रास्थिको राशिः । खारीकः । शत्यः । शतिकः । साहस्रः । द्रौणिकः । कौडविकः । वर्षशतं परिमाणमस्य वार्षशतिकः । वार्षसाहस्रिकः । षष्टिर्जीवितपरिमाणमस्येति षाष्टिकः । साप्ततिकः । समर्थविभक्तिः प्रत्ययार्थश्च पूर्वसूत्रा-

---

तत्पचतीति—द्वितीयासमर्थ द्रोण शब्द से पचति अर्थ में अण् प्रत्यय भी अवगन्तव्य है ।

आढकाचित—सम्भवति आदि अर्थों में द्वितीयासमर्थ आढक, आचित तथा पात्र शब्दों से विकल्प से ख प्रत्यय होता है ।

द्विगोः—आढकशब्दान्त, आचितशब्दान्त तथा पात्रशब्दान्त द्विगु से सम्भवति आदि अर्थों में ठन् प्रत्यय भी ( और विकल्प से ख प्रत्यय भी ) होता है ।

कुलिजात्—कुलिजशब्दान्त द्विगु से सम्भवति आदि अर्थों में विकल्प से ठन्, ख तथा इनका लुक् भी हो जाता है ।

सोऽस्यांश—अंशवाचक, मूल्यवाचक तथा वेतनवाचक प्रथमासमर्थ शब्दों से षष्ठ्यर्थ मे यथाविहित प्रत्यय होते हैं ।

तदस्य—पारिमाणार्थक प्रथमासमर्थ प्रातिपदिक से षष्ठ्यर्थ में यथाविहित प्रत्यय होते हैं ।

देवानुवर्त्तिष्यते, किमर्थं पुनरनयोरुपादानम् ? पुनर्विधानार्थम्। द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिकः। द्विसाप्ततिकः। पुनर्विधानसामर्थ्याद्द्वयद्द पूर्वद्विगोर्लुङ् न भवति ॥

## संख्यायाः संज्ञासंघसूत्राध्ययनेषु ॥ ५८ ॥

तदस्य परिमाणमिति वर्त्तते। संख्यावाचिनः प्रातिपादिकात्परिमाणोपाधिकात्प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति। संज्ञासंघसूत्राध्ययनेष्विति प्रत्ययार्थविशेषणम्। तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः—पंचैव पञ्चकाः शकुनयः। त्रिकाः शालङ्कायनाः। संघ—पंच परिमाणमस्य पंचकः संघः। अष्टकः। सूत्र—अष्टावध्यायाः परिमाणमस्य सूत्रस्य अष्टकं पाणिनीयम्। दशकं वैयाघ्रपदीयम्। त्रिकं काशकृत्स्नम्। ननु चाध्यायसमूहः सूत्रसंघ एव भवति ? नैतदस्ति। प्राणिसमूहे संघशब्दो रूढः। अध्ययन—पंचकोऽधीतः। सप्तकोऽधीतः। अष्टकः। नवकः। अधीतिरध्ययनम्, तस्य संख्यापरिमाणं—पंचावृत्तयः पंचवाराः पंचरूपाण्यस्याध्ययनस्य पंचकमध्ययनम्। ॐस्तोमे डविधिः पंचदशाद्यर्थःॐ। पंचदश मन्त्राः परिमाणमस्य पंचदशः स्तोमः। सप्तदशः। एकविंशः। ॐशन्शतोर्डिनिश्छन्दसिॐ। पंचदशिनोऽर्द्धमासाः। त्रिंशिनो मासाः। ॐविंशतेश्चेति वक्तव्यम्ॐ। विंशिनोऽङ्गिरसः ॥

## पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ५९ ॥

तदस्य परिमाणमिति वर्त्तते। पङ्क्त्यादयः शब्दा निपात्यन्ते। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्। पंचानां टिलोपः तिः प्रत्ययश्च—पंच परिमाणमस्य पङ्क्तिश्छन्दः। द्वयोर्दशतोर्विन्भावः शतिश्च प्रत्ययः—द्वौ दशतौ परिमाणमस्य संघस्य विंशतिः। त्रयाणां दशतां त्रिन् भावः शच प्रत्ययः—त्रयो दशतः परिमाणमस्य त्रिंशत्। चतुर्णां दशतां चत्वारिन् भावः शच प्रत्ययः—चत्वारो दशतः परिमाणमस्य चत्वारिंशत्। पञ्चानां दशतां पञ्चाभावः शच प्रत्ययः—पञ्च दशतः परिमाणमस्य पञ्चाशत्। षण्णां दशतां षड् भावस्तिः प्रत्ययोऽपदत्वं च—षड् दशतः परिमाणमस्य षष्टिः। सप्तानां दशतां सप्तभावः तिः प्रत्ययश्च—सप्त दशतः परिमाणमस्य सप्ततिः। अष्टानां दशतामशीभावस्तिः प्रत्ययश्च—अष्टौ दशतः परिणामस्य अशीतिः। नवानां दशतां नवभावस्तिः प्रत्ययश्च—नवदशतः परिमाणमस्य नवतिः। दशानां दशतां शभावः तश्च प्रत्ययश्चः—दश दशतः परिमाणमस्य संघस्य शतम्। विंशत्यादयो गुणशब्दास्ते यथाकथञ्चिद् व्युत्पाद्याः। नात्रावयवार्थेऽभिनिवेष्टव्यम्, तथाहि पङ्क्तिरिति क्रमसन्निवेशेऽपि वर्तते—ब्राह्मणपङ्क्तिः, पिपीलिकापङ्क्तिरिति। न चात्रावयवार्थः कश्चिदस्ति। या चैषां विषय-

---

संख्यायाः—परिमाणोपाधिक संख्यावाचक प्रथमासमर्थ प्रातिपदिक से संज्ञास्वरूप, संघात्मक, सूत्रात्मक तथा अध्ययनात्मक षष्ठ्यर्थ में यथाविहित प्रत्यय होते हैं।

स्तोमे—परिमाणोपाधिक संख्यावाचक प्रथमासमर्थ प्रातिपदिक से स्तोम-स्वरूप षष्ठ्यर्थ में ड प्रत्यय समझना चाहिए जिससे स्तोमार्थक पञ्चदश आदि शब्दों की उपपत्ति हो सके।

शन्शतोः—शन्नन्त तथा शदन्त परिमाणोपाधिक संख्यावाचक प्रथमासमर्थ प्रातिपदिक से षष्ठ्यर्थ में डिनि प्रत्यय होता है छन्दोविषय में।

विंशतेः—विंशति शब्द से भी छन्दोविषय में डिनि प्रत्यय अवगन्तव्य है।

पंक्ति—प्रथमासमर्थ परिमाणोपाधिक संख्यावाचक पञ्चन् आदि शब्दों से षष्ठ्यर्थ में पंक्ति, विंशति, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टि, सप्तति, अशीति, नवति तथा शत शब्दों का निपातन होता है।

भेदेन गुणिनि च वृत्तिस्स्वलिङ्गसंख्यानुविधानं च, एतदपि सर्वं स्वाभाविकमेव। सहस्रादयोऽप्येवं जातीयकास्तद्वदेव द्रष्टव्याः। उदाहरणमात्रमेतदिति॥

## पञ्चद्दशतौ वर्गे वा॥ ६०॥

पञ्चत् दशत् इत्येतौ वा निपात्येते तदस्य परिमाणमित्येतस्मिन् विषये वर्गेऽभिधेये। संख्याया इति कनि प्राप्ते डतिर्निपात्यते, वावचनात्पक्षे सोऽपि भवति—पञ्च परिमाणमस्य पञ्चद्वर्गः, दशद्वर्गः। पञ्चको वर्गः, दशको वर्गः॥

## सप्तनोऽञ् छन्दसि॥ ६१॥

वर्ग इति वर्त्तते, तदस्य परिमाणमिति च। सप्तन् शब्दाच्छन्दसि विषयेऽञ् प्रत्ययो भवति वर्गेऽभिधेये। सप्त साप्तान्यसृजन्॥

## त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्॥ ६२॥

तदस्य परिमाणमित्येव। वर्ग इति निवृत्तम्। त्रिंशच्चत्वारिंशच्छब्दाभ्यां संज्ञायां विषये डण् प्रत्ययो भवति तदस्य परिमाणमित्येतस्मिन् विषये ब्राह्मणेऽभिधेये। अभिधेये सप्तम्येषा न विषयसप्तमी, तेन मन्त्रभापयोरपि भवति। त्रिंशदध्यायाः परिभाणमेषां ब्राह्मणानां त्रैंशानि ब्राह्मणानि। चात्वारिंशानि ब्राह्मणानि। कानिचिदेव ब्राह्मणान्युच्यन्ते॥

## तदर्हति॥ ६३॥

तदिति द्वितीयासमर्थादर्हति इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः। वास्त्रयुग्मिकः। शत्यः। शतिकः। साहस्रः॥

## छेदादिभ्यो नित्यम्॥ ६४॥

नित्यग्रहणं प्रत्ययार्थविशेषणम्। छेदादिभ्यो द्वितीयासमर्थेभ्यो नित्यमर्हतीत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। छेदं नित्यमर्हति छैदिकः। भैदिकः। छेद। भेद। द्रोह। वर्त्त। कर्ष। संप्रयोग। विप्रयोग। प्रेषण। सम्प्रश्न। विप्रकर्ष। विराग। विरङ्ग। (वैरङ्गिकः)। छेदादिः।

## शीर्षच्छेदाद्यच्च॥ ६५॥

शीर्षच्छेदशब्दाद् द्वितीयासमर्थान्नित्यमर्हतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, चका-

---

पञ्चद्दशतौ—वर्गात्मक षष्ठयर्थ में परिमाणोपाधिक संख्यावाचक प्रथमासमर्थ पञ्चन् तथा दशन् शब्दों से पञ्चत् तथा दशत् शब्दों का निपातन किया जाता है।

सप्तनः—वर्गात्मक षष्ठयर्थ में परिमाणोपाधिक संख्यावाचक सप्तन् शब्द से छन्दोविषय में अञ् प्रत्यय होता है।

त्रिंशत्—वेदभागात्मकब्राह्मणस्वरूपसंज्ञाऽभिन्न षष्ठयर्थ में प्रथमासमर्थ परिमाणोपाधिक त्रिंशत् तथा चत्वारिंशत् शब्दों से डण् प्रत्यय होता है।

तदर्हति—द्वितीयासमर्थ प्रातिपदिक से 'अर्हति' (योग्य है) अर्थ में यथाविहित प्रत्यय होते हैं।

छेदादिभ्यः—द्वितीयासमर्थ छेद आदि शब्दों से 'नित्यमर्हति' (सर्वदा योग्य है) अर्थ में यथाविहित प्रत्यय होते हैं।

शीर्ष—द्वितीयासमर्थ शीर्षच्छेद शब्द से 'नित्यमर्हति' अर्थ में यत् प्रत्यय भी होता है और यथाविहित प्रत्यय भी।

राद्यथाविहितश्च । शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः । शैर्षच्छेदिकः । प्रत्ययसन्नियोगेन शिरसः शीर्षभावो निपात्यते ॥

## (१)दण्डादिभ्यः ॥ ६६ ॥

नित्यमिति निवृत्तम् । यदित्यनुवर्त्तते । दण्डादिभ्यो द्वितीयासमर्थेभ्योऽर्हतीत्यस्मिन्नर्थे यत् प्रत्ययो भवति । ठकोऽपवादः । दण्डमर्हति दण्ड्यः । मुसल्यः । दण्ड । मुसल । मधुपर्क । कशा । अर्घ । मेधा । मेघ । युग । उदक । वध । गुहा । भाग । इभ । दण्डादिः ॥

## छन्दसि च ॥ ६७ ॥

प्रातिपदिकमात्राच्छन्दसि विषये तदर्हतीत्यस्मिन्नर्थे यत् प्रत्ययो भवति । ठञादीनामपवादः । उदक्या वृत्तयः । यूप्यः पलाशः । गर्त्यो देशः ॥

## पात्राद् घंश्च ॥ ६८ ॥

पात्रशब्दाद् घन् प्रत्ययो भवति चकाराद्यच्च तदर्हतीत्यस्मिन्नर्थे । ठक्ठञोरपवादः । पात्रं परिमाणमप्यस्ति । पात्रमर्हति पात्रियः । पात्र्यः ॥

## कडङ्करदक्षिणाच्छ च ॥ ६९ ॥

कडङ्करदक्षिणाशब्दाभ्यां छः प्रत्ययो भवति चकाराद्यच्च तदर्हतीत्यस्मिन् विषये । ठकोपवादः । कडङ्करमर्हति कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हति दक्षिणीयो भिक्षुः । दक्षिण्यो ब्राह्मणः । दक्षिणाशब्दस्याल्पाच्तरस्य अपूर्वनिपातेन लक्षणव्यभिचारचिह्नेन यथासंख्याभावं सूचयति ॥

## स्थालीबिलात् ॥ ७० ॥

छयतावनुवर्त्तेते । स्थालीबिलशब्दाच्छयतौ प्रत्ययौ भवतः तदर्हतीत्यस्मिन्नर्थे । ठकोऽपवादः । स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः पाकयोग्या इत्यर्थः ॥

## यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥

---

दण्डादिभ्यः—द्वितीयासमर्थ दण्ड आदि शब्दों से 'अर्हति' अर्थ में यत् प्रत्यय होता है ।

छन्दसि—द्वितीयासमर्थ प्रातिपदिक मात्र से 'अर्हति' अर्थ में छन्दोविषय में यत् प्रत्यय होता है ।

पात्राद्—द्वितीयासमर्थ पात्र शब्द से 'अर्हति' अर्थ में विकल्प से घन् तथा यत् प्रत्यय होते हैं ।

कडङ्कर—द्वितीयासमर्थ कडङ्कर तथा दक्षिणा शब्दों से 'अर्हति' अर्थ में छ प्रत्यय तथा विकल्प से यत् प्रत्यय होते हैं ।

स्थाली—द्वितीयासमर्थ स्थालीबिल शब्द से 'अर्हति' अर्थ में विकल्प से छ प्रत्यत तथा यत् प्रत्यय होते हैं ।

यज्ञ—द्वितीयासमर्थ यज्ञ शब्द तथा ऋत्विक् शब्द से 'अर्हति' अर्थ में क्रमशः घ तथा खञ् प्रत्यय होते हैं ।

---

(१) अत्र दण्डादिभ्यो यः इति पाठस्त्वपपाठः । तथाहि वध्यशब्दव्युत्पादनाय अचो यदिति सूत्रे भाष्ये उक्तम्—क्यब्विधौ हनो वा वधस्तद्धितो वेति । यदि चात्र तद्धितो यद्विधीयते तत एवैतदुपपद्यते । तथाहि क्यप्यस्याद्युदात्तत्वं यत्यपि यतोऽनावः इत्याद्युदात्तत्वम् । यदि त्वत्र यो विधीयेत ततः स्वरे विशेषादनुपपन्नमेतत्स्यादिति ।

यज्ञशब्दादृत्विक्शब्दाच्च यथासंख्यं घखञौ प्रत्ययौ भवतः तदर्हतीत्यस्मिन् विषये। ठकोऽपवादः। यज्ञियो ब्राह्मणः। आर्त्विजीनो ब्राह्मणः। ❀यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम्❀। यज्ञकर्मार्हति यज्ञियो देशः। ऋत्विक्कर्मार्हति आर्त्विजीनं ब्राह्मणकुलम्। आर्हीयठगादीनां पूर्णोऽवधिः, अतः परं प्राग्वतीयष्ठञेव भवति॥

## पारायणतुरायणचान्द्रायणं वर्त्तयति॥ ७२॥

समर्थविभक्तिरनुवर्त्तते। अर्हतीति निवृत्तम्। पारायणादिभ्यो द्वितीयासमर्थेभ्यो वर्त्तयतीत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। पारायणं वर्तयत्यधीते पारायणिकश्छात्रः। तौरायणिको यजमानः। चान्द्रायणिकस्तपस्वी॥

## संशयमापन्नः॥ ७३॥

संशयशब्दात् द्वितीयासमर्थादापन्न इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। संशयमापन्नः प्राप्तः सांशयिकः स्थाणुः॥

## योजनं गच्छति॥ ७४॥

योजनशब्दाद् द्वितीयासमर्थाद्गच्छतीत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। योजनं गच्छति यौजनिकः। ❀क्रोशशतयोजनशतयोरुपसंख्यानम्❀। क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः। ❀ततोऽभिगमनमर्हतीति च क्रोशशतयोजनशतयोरुपसंख्यानम्❀। क्रोशशतादभिगमनमर्हति क्रौशशतिको भिक्षुः। यौजनशतिक आचार्यः॥

## पथः ष्कन्॥ ७५॥

पथिन्शब्दाद् द्वितीयासमर्थाद्गच्छतीत्यस्मिन्नर्थे ष्कन् प्रत्ययो भवति। नकारः ञ्नित्स्वरार्थः। षकारो ङीपर्थः। पन्थानं गच्छति पथिकः। पथिकी॥

## पन्थो ण नित्यम्॥ ७६॥

नित्यग्रहणं प्रत्ययार्थविशेषणम्। पथः पन्थ इत्ययमादेशो भवति णश्च प्रत्ययो नित्यं गच्छतीत्यस्मिन् विषये। पन्थानं नित्यं गच्छति इति पान्थो भिक्षां याचते। नित्यमिति किम्? पथिकः॥

---

यज्ञर्त्विग्भ्याम्—यज्ञ तथा ऋत्विक् शब्दों से 'यज्ञकर्म की योग्यता रखता है' तथा 'ऋत्विक्कर्म की योग्यता रखता है' अर्थ में भी क्रमशः घ तथा खञ् प्रत्यय अवगन्तव्य हैं।

पारायण—द्वितीयासमर्थ पारायण, तुरायण तथा चान्द्रायण शब्दों से 'वर्त्तयति' (सम्पादन करता है) अर्थ में ठञ् प्रत्यय होता है।

संशयम्—द्वितीयासमर्थ संशय शब्द से 'आपन्नः' (प्राप्त हुआ है) अर्थ में ठञ् प्रत्यय होता है।

योजनम्—द्वितीयासमर्थ योजन शब्द से 'गच्छति' अर्थ में ठञ् प्रत्यय होता है।

क्रोश—द्वितीयासमर्थ क्रोशशत तथा योजनशत शब्दों से भी 'गच्छति' अर्थ में ठञ् प्रत्यय अवगन्तव्य है।

ततोभिगमनम्—पञ्चमीसमर्थ क्रोशशत तथा योजनशत शब्दों से भी 'अभिगमन करने योग्य है' अर्थ में ठञ् प्रत्यय समझना चाहिए।

पथः—द्वितीयासमर्थ पथिन् शब्द से 'गच्छति' अर्थ में ष्कन् प्रत्यय होता है।

पन्थो—द्वितीयासमर्थ पथिन् शब्द से 'नित्यं गच्छति' अर्थ में ण प्रत्यय तथा पथिन् को पन्थ आदेश भी हो जाता है।

## उत्तरपथेनाहृतं च ॥ ७७ ॥

निर्देशादेव समर्थविभक्तिः। उत्तरपथशब्दात्तृतीयासमर्थादाहृतमित्येतस्मिन् विषये ठञ् प्रत्ययो भवति। चकारः प्रत्ययार्थसमुच्चये, गच्छतीति च। अत्रापि तृतीयैव समर्थविभक्तिः। उत्तरपथेनाहृतमौत्तरपथिकम्। उत्तरपथेन गच्छति औत्तरपथिकः। ॐआहृतप्रकरणे वारिजङ्गलस्थलकांतारपूर्वपदादुपसंख्यानम्ॐ। वारिपथेनाहृतं वारिपथिकम्। वारिपथेन गच्छति वारिपथिकः। जङ्गलपथेनाहृतं जाङ्गलपथिकम्। जङ्गलपथेन गच्छति जाङ्गलपथिकः। स्थलपथेनाहृतं स्थालपथिकम्। स्थलपथेन गच्छति स्थालपथिकः। कान्तारपथेनाहृतं कान्तारपथिकम्। कान्तारपथेन गच्छति कान्तारपथिकः। ॐअजपथशङ्कुपथां चोपसंख्यानम्ॐ। अजपथेनाहृतं गच्छति वा आजपथिकः। शङ्कुपथेनाहृतं गच्छति वा शाङ्कुपथिकः। ॐमधुकमरिचयोरण् स्थलात्ॐ। स्थलपथेनाहृतं स्थालपथं मधुकम्। स्थालपथं मरिचम् ॥

## कालात् ॥ ७८ ॥

कालादित्यधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः कालादित्येवं तद्वेदितव्यम्। वक्ष्यति-तेन निर्वृत्तम्। मासेन निर्वृत्तं मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्। कालादित्यधिकारो व्युष्टादिभ्योऽण् इति यावत् ॥

## तेन निर्वृत्तम् ॥ ७९ ॥

तेनेति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकान्निर्वृत्तमित्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। अह्ना निर्वृत्तमाह्निकम्। आर्द्धमासिकम्। सांवत्सरिकम् ॥

## तमधीष्टो भृतो भूतो भावी ॥ ८० ॥

तमिति द्वितीयासमर्थात् कालवाचिनः प्रातिपदिकादधीष्टो भृतो भूतो भावी वेत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। अधीष्टः=सत्कृत्य व्यापारितः। भृतः=वेतनेन क्रीतः। भूतः=स्वसत्तया व्याप्तकालः। भावी=तादृश एवानागतः। कालाध्वनोः इति द्वितीया। मासमधीष्टो मासिकोऽध्यापकः। मासं भृतो मासिकः कर्मकरः। मासं भूतो मासिको व्याधिः। मासं भावी मासिक उत्सवः। ननु चाध्येषणं भरणं च मुहूर्त्तं क्रियते, तेन कथं मासो व्याप्यते? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामेव व्याप्त इत्युच्यते ॥

---

उत्तर—तृतीयासमर्थ उत्तरपथशब्द से 'आहृतम्' (लाया गया है) तथा 'गच्छति' अर्थों में ठञ् प्रत्यय होता है।

आहृत—तृतीयासमर्थ वारिपथ, जङ्गलपथ, स्थलपथ, एवम् कान्तारपथ शब्दों से भी 'आहृतम्' तथा 'गच्छति' अर्थों में ठञ् प्रत्यय का विधान समझना चाहिए।

अजपथ—तृतीयासमर्थ अजपथ तथा शङ्कुपथ शब्दों से भी 'आहृतम्' और 'गच्छति' अर्थों में ठञ् प्रत्यय अवगन्तव्य है।

मधुक—तृतीयासमर्थ स्थलपथ शब्द से 'आहृतम्' अर्थ में ठञ् प्रत्यय होता है यदि प्रत्ययान्त का वाच्य मधुक अथवा मरिच हो।

कालात्—यहां से आगे विधीयमान प्रत्यय कालवाचक शब्दों से विहित अवगन्तव्य है।

तेन—तृतीयासमर्थ कालवाचक शब्द से 'निर्वृत्तम्' (सम्पन्न हुआ) अर्थ में ठञ् प्रत्यय होता है।

तमधीष्टः—द्वितीयासमर्थ कालवाचक शब्दों से अधीष्ट (सत्कारपूर्वक नियुक्त), वेतनक्रीत, भूत तथा भावी अर्थों में यथाविहित प्रत्यय होते हैं।

## मासाद्वयसि यत्खञौ ॥ ८१ ॥

मासशब्दाद्वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः। ठञोऽपवादः। अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद् भूत इत्येवाभिसंबध्यते। मासं भूतो मास्यः, मासीनः। वयसीति किम् ? मासिकम् ॥

## द्विगोर्यप् ॥ ८२ ॥

मासाद्वयसीति वर्तते। मासान्ताद् द्विगोर्यप् प्रत्ययो भवति वयस्यभिधेये। द्वौ मासौ भूतो द्विमास्यः। त्रिमास्यः ॥

## षण्मासाण्ण्यच्च ॥ ८३ ॥

वयसीत्येव। षण्मासशब्दाद्वयस्यभिधेये ण्यत् प्रत्ययो भवति, यप् च। औत्सर्गिकष्ठञपीष्यते, स चकारेण समुच्चेतव्यः। स्वरितत्वाच्चानन्तरोऽनुवर्त्तिष्यते। तेन त्रैरूप्यं भवति-षाण्मास्यः, षण्मास्यः, षाण्मासिकः ॥

## अवयसि ठंश्च ॥ ८४ ॥

षण्मासशब्दादवयस्यभिधेये ठन् प्रत्ययो भवति। चकारेणानन्तरस्य ण्यस्य समुच्चयः(१) क्रियते। षण्मासिको रोगः। षाण्मास्यः ॥

## समायाः खः ॥ ८५ ॥

अधीष्टादयश्चत्वारोऽर्था अनुवर्त्तन्ते। समाशब्दाद् द्वितीयासमर्थाद् अधीष्टादिष्वर्थेषु खः प्रत्ययो भवति। ठञोऽपवादः। समामधीष्टो भृतो भूतो भावी वा समीनः। केचित्तु तेन निर्वृत्तमिति सर्वत्रानुवर्त्तयन्ति-समया निर्वृत्तः समीनः ॥

## द्विगोर्वा ॥ ८६ ॥

समायाः ख इत्येव। समाशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु पञ्चसु वा खः प्रत्ययो भवति। पूर्वेण नित्यः प्राप्तो विकल्प्यते। प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति प्राप्तिरस्त्येव। खेन मुक्ते पक्षे ठञपि भवति-द्विसमीनः, द्वैसमिकः; त्रिसमीनः, त्रैसमिकः ॥

## रात्र्यहस्संवत्सराच्च ॥ ८७ ॥

---

मासात्—द्वितीयासमर्थ मास शब्द से वयस् अर्थ में विकल्प से यत् तथा खञ् प्रत्यय होते हैं।

द्विगोः—मासान्तद्विगु से भूत (=अतीत) वयस् अर्थ में यप् प्रत्यय होता है।

षण्मासात्—षण्मास शब्द से वयस् अर्थ में ण्यत् तथा यप् प्रत्यय विकल्प से होते हैं।

अवयसि—वयस्-भिन्न अर्थ में षण्मास शब्द से ठन् प्रत्यय तथा पाक्षिक ण्यत् प्रत्यय भी होते हैं।

समायाः—द्वितीयासमर्थ समा शब्द से अधीष्ट आदि पूर्वोक्त चार अर्थों में ख प्रत्यय होता है।

द्विगोः—समाशब्दान्त द्वितीयासमर्थ द्विगु से निर्वृत्त, अधीष्ट आदि पाँच अर्थों में विकल्प से ख प्रत्यय होता है।

रात्र्यहः—रात्रिशब्दान्त, अहन्शब्दान्त तथा संवत्सरशब्दान्त द्विगु से निर्वृत्त आदि पाँच अर्थों में विकल्प से ख प्रत्यय होता है।

---

(१) चकारोऽनन्तरस्य ण्यतः समुच्चयार्थ इति पाठान्तरम्।

(१)रात्रि अहः संवत्सर इत्येवमन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। खेन मुक्ते पक्षे ठञपि भवति। द्विरात्रीणः। द्वैरात्रिकः। त्रिरात्रीणः। त्रैरात्रिकः। द्व्यहीनः। द्वैयह्निकः। त्र्यहीणः। त्रयह्निकः। द्विसंवत्सरीणः। द्विसांवत्सरिकः। त्रिसंवत्सरीणः। त्रिसांवत्सरिकः। संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः॥

## वर्षाल्लुक् च ॥ ८८ ॥

द्विगोरित्येव। वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति, पक्षे ठञ्, तयोश्च वा लुग् भवति। एवं त्रीणि रूपाणि भवन्ति—द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः। त्रिवर्षीणः, त्रिवार्षिकः, त्रिवर्षः। वर्षस्याभविष्यतीत्युत्तरपदवृद्धिः। भाविनि तु—त्रैवर्षिकः॥

## चित्तवति नित्यम् ॥ ८९ ॥

चित्तवति प्रत्ययार्थेऽभिधेये वर्षशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषूत्पन्नस्य (२)प्रत्ययस्य नित्यं लुग् भवति। पूर्वेण विकल्पे प्राप्ते वचनम्। द्विवर्षो दारकः। चित्तवतीति किम्? द्विवर्षीणो व्याधिः॥

## षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ९० ॥

षष्टिकशब्दो निपात्यते। बहुवचनमतन्त्रम्। षष्टिरात्रशब्दात्तृतीयासमर्थात् कन् प्रत्ययो निपात्यते पच्यन्त इत्येतस्मिन्नर्थे रात्रशब्दस्य च लोपः। षष्टिरात्रेण पच्यन्ते षष्टिकाः। संज्ञैषा धान्यविशेषस्य, तेन मुद्गादिष्वतिप्रसङ्गो न भवति॥

## वत्सरान्ताच्छश्छन्दसि ॥ ९१ ॥

वत्सरान्तात्प्रातिपदिकान्निर्वृत्तादिष्वर्थेषु छन्दसि विषये छः प्रत्ययो भवति। ठञोऽपवादः। इद्वत्सरीयः। इदावत्सरीयः॥

## संपरिपूर्वात् ख च ॥ ९२ ॥

संपरिपूर्वाद्वत्सरान्तात् प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो भवति चकाराच्छश्च। संवत्सरीणः। परिवत्सरीणः। संवत्सरीयः। परिवत्सरीयः॥

## तेन परिजय्यलभ्यकार्यसुकरम् ॥ ९३ ॥

तेनेति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकात् परिजय्य लभ्य कार्य्यं सुकर

---

वर्षाल्लुक्—वर्षान्त द्विगु से निर्वृत्त आदि पाँच अर्थों में विकल्प से ख प्रत्यय तथा ठञ् प्रत्यय होते हैं और दोनों ही प्रत्ययों का विकल्प से लुक् भी हो जाता है।

चित्तवति—वर्षशब्दान्त द्विगु से निर्वृत्त आदि अर्थों में विहित प्रत्यय का नित्य लुक् हो जाता है यदि प्रत्ययान्त चित्तवत् ( प्राणिमात्र ) पदार्थ का प्रतिपादक हो।

षष्टिकाः—तृतीयासमर्थ षष्टिरात्र शब्द से 'पच्यन्ते' ( पकाये जाते हैं ) अर्थ में कन् प्रत्यय तथा रात्रशब्द का लोप निपातित होता है।

वत्सरान्तात्—वत्सरशब्दान्त प्रातिपादिकों से निर्वृत्त आदि पाँच अर्थों में छ प्रत्यय होता है छन्दो-विषय में।

सम्परिपूर्वात्—सम्पूर्वक तथा परिपूर्वक वत्सरशब्दान्त प्रातिपदिकों से निर्वृत्त आदि अर्थों में विकल्प से ख प्रत्यय तथा छ प्रत्यय होते हैं छन्दो-विषय में।

तेन—तृतीयासमर्थ कालवाचक शब्दों से परिजय्य ( जीतने योग्य ), लभ्य, कार्य्य तथा सुकर अर्थों में ठञ् प्रत्यय होता है।

---

( १ ) द्विगोरित्येवेत्यधिकं बहुषु पुस्तकेषु।

( २ ) निर्वृत्तादिष्वर्थेषु उत्पन्नस्य प्रत्ययस्येति बहुषु पुस्तकेषु नास्ति।

इत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति। मासेन परिजय्यः—शक्यते जेतुं मासिको व्याधिः। सांवत्सरिकः। मासेन लभ्यो मासिकः पटः। मासेन कार्यं मासिकं चान्द्रायणम्। मासेन सुकरो मासिकः प्रासादः॥

## तदस्य ब्रह्मचर्यम् ॥ ९४ ॥

तदिति द्वितीया समर्थविभक्तिः, सा चात्यन्तसंयोगे। अस्येति प्रत्ययार्थः। ब्रह्मचर्यमिति द्वाभ्यामपि सम्बध्यते—कालस्य व्यापकं प्रत्ययार्थस्य च स्वमिति। तदिति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति ब्रह्मचर्यं चेत् गम्यते। मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी। आर्द्धमासिकः। सांवत्सरिकः। अपरा वृत्तिः—तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तदस्येति निर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति। मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम्। आर्द्धमासिकम्। सांवत्सरिकम्। पूर्वत्र ब्रह्मचारी प्रत्ययार्थः, उत्तरत्र ब्रह्मचर्यमेव। उभयमपि प्रमाणमुभयथा सूत्रप्रणयनात्। ॐमहानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसंख्यानम्ॐ। माहानामिकम्। गौदानिकम्। आदित्यव्रतिकम्। ॐतच्चरतीति च(१)ॐ। महानाम्न्य ऋचः, तत्सहचरितं व्रतं तच्छब्देनोच्यते। महानाम्नीश्चरति माहानामिकः। आदित्यव्रतिकः। गौदानिकः। ॐअवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यःॐ। अवान्तरदीक्षां चरति अवान्तरदीक्षी। तिलव्रती। ॐअष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यःॐ। अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः। अष्टाचत्वारिंशी। ॐचातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यःॐ। चातुर्मास्यानि चरति चातुर्मासकः। चातुर्मासी। ॐचतुर्मासाण्ण्यो यज्ञे तत्र भवेॐ। चतुर्षु मासेषु भवानि चातुर्मास्यानि। ॐसंज्ञायामण्वक्तव्यःॐ। चतुर्षु मासेषु भवा चातुर्मासी। पौर्णमासी। आषाढी। कार्तिकी। फाल्गुनी॥

## तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ९५ ॥

तस्येति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो दक्षिणेत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति।

---

तदस्य—द्वितीयासमर्थ कालवाचक शब्दों से षष्ठ्यर्थ में ठञ् प्रत्यय होता है ब्रह्मचर्य के गम्यमान होने पर ( अथवा प्रथमासमर्थ कालवाचक शब्दों से ब्रह्मचर्यात्मक षष्ठ्यर्थ मे ठञ् प्रत्यय होता है )।

महा—षष्ठीसमर्थ महानाम्नी आदि शब्दों से भी ठञ् प्रत्यय का विधान समझना चाहिए।

तच्चरतीति—द्वितीयासमर्थ महानाम्नी आदि शब्दों से 'चरति' ( आचरण करता है अथवा अनुष्ठान करता है ) अर्थ में भी ठञ् प्रत्यय अवगन्तव्य है।

अवान्तर—द्वितीयासमर्थ अवान्तरदीक्षा आदि शब्दों से 'चरति' अर्थ में डिनि प्रत्यय समझना चाहिए।

अष्टा—द्वितीयासमर्थ अष्टाचत्वारिंशत् शब्द से 'चरति' अर्थ में ड्वुन् तथा डिनि प्रत्यय अवगन्तव्य हैं।

चातुर्मास्यानाम्—द्वितीयासमर्थ चातुर्मास्य शब्द से 'चरति' अर्थ में विकल्प से ड्वुन् तथा डिनि प्रत्यय और प्रकृति के यकार का लोप भी अवगन्तव्य है।

चतुर्मासात्—'होनेवाले यज्ञ' के अर्थ मे सप्तमीसमर्थ चतुर्मास शब्द से ण्य प्रत्यय समझना चाहिए।

संज्ञायाम्—प्रत्ययान्त से संज्ञा की यदि प्रतीति हो तो सप्तमीसमर्थ चतुर्मास शब्द से भव अर्थ में अण् प्रत्यय का विधान होता है।

तस्य च—यज्ञवाचक षष्ठीसमर्थ शब्दों से दक्षिणा अर्थ में ठञ् प्रत्यय होता है।

---

( १ ) तच्चरतीति महानाम्न्यादिभ्य उपसंख्यानमिति पाठान्तरम्।

अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी। वाजपेयिकी। राजसूयिकी। आख्याग्रहणमकालादपि यज्ञवाचिनो यथा स्यादिति। इतरथा हि कालाधिकारादेकाहद्वादशाहप्रभृतय एव यज्ञा गृह्येरन्। प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति कालाधिकारेऽपि द्वादशाहादिष्वस्ति प्राप्तिः॥

## तत्र च दीयते कार्यं भववत्॥ ९६॥

तत्रेति सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकाद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययो भवति। यथा—मासे भवं मासिकम्। सांवत्सरिकम्। प्रावृषेण्यम्। वासन्तिकम्। वासन्तम्। हैमनम्। हैमन्तम्। हैमन्तिकम्। शारदम्। तथा मासे दीयते कार्यं वा मासिकम्। सांवत्सरिकम्। प्रावृषि दीयते कार्यं वा प्रावृषेण्यमित्यादि। वतिः सर्वसादृश्यार्थः। योगविभागश्चात्र कर्त्तव्यः—तत्र च दीयते, यज्ञाख्येभ्य इति। अग्निष्टोमे दीयते आग्निष्टोमिकं भक्तम्। राजसूयिकम्। वाजपेयिकम्। कालाधिकारस्य पूर्णोऽवधिः, अतः परं सामान्येन प्रत्ययविधानम्॥

## व्युष्टादिभ्योऽण्॥ ९७॥

तत्रेति सप्तमीसमर्थेभ्यो व्युष्टादिभ्यो दीयते कार्यमित्येतयोरण् प्रत्ययो भवति। व्युष्टे दीयते कार्यं वा वैयुष्टम्। नैत्यम्। ॥अणूप्रकरणे अग्निपदादिभ्य उपसंख्यानम्॥(१)। अत्रैव ते पठितव्याः। व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। तीर्थ। संभ्रम। आस्तरण। संग्राम। संघात। अग्निपद। पीलुमूल। प्रवास। उपसंक्रमण। व्युष्टादिः(२)॥

## तेन यथाकथाचहस्ताभ्यां णयतौ॥ ९८॥

दीयते कार्यमिति वर्त्तते। तेनेति तृतीयासमर्थाभ्यां यथाकथाचहस्तशब्दाभ्यां यथासंख्यं णयतौ प्रत्ययौ भवतः। दीयते कार्यमित्येतयोरर्थयोः प्रत्येकमभिसंबन्धः, यथासंख्यं नेष्यते। यथाकथाचशब्दोऽव्ययसमुदायोऽनादरे वर्त्तते। तृतीयाऽर्थमात्रं चाऽत्र संभवति, न तु तृतीया समर्थविभक्तिः। यथाकथाच दीयते कार्यं वा याथाकथाचम्। हस्तेन दीयते कार्यं वा हस्त्यम्॥

## संपादिनि॥ ९९॥

तेनेत्येव। तृतीयासमर्थात्संपादिन्यभिधेये ठञ् प्रत्ययो भवति। गुणोत्कर्षः संपत्तिः।

---

तत्र च—सप्तमीसमर्थ प्रातिपदिक से 'दीयते' (दिया जाता है) तथा 'कार्यम्' (करना है) अर्थों में भवार्थ के समान प्रत्यय होते हैं।

व्युष्टादिभ्यः—सप्तमीसमर्थ व्युष्ट आदि शब्दों से 'दीयते' तथा 'कार्यम्' अर्थों में अण् प्रत्यय होता है।

अण्-प्रकरणे—अग्निपद आदि शब्दों से भी उक्तार्थद्वय में अण् प्रत्यय का विधान समझना चाहिए।

तेन—तृतीयासमर्थ यथाकथाच तथा हस्त शब्दों से 'दीयते' और 'कार्यम्' अर्थों में क्रमशः ण एवम् यत् प्रत्यय होते हैं।

सम्पादिनि—तृतीयासमर्थ प्रातिपदिक से 'गुणोत्कर्ष' सम्पादक अर्थ में ठञ् प्रत्यय होता है।

---

(१) उपसंख्यानमित्यस्याग्रे-आग्निपदम्, पैलुमूलम्-किम्वक्तव्यम्, न वक्तव्यम् इत्यधिकं बहुषु पुस्तकेषु।

(२) दीर्घ, उपवास इत्येतौ शब्दौ अत्र गणे अधिकौ कुत्रचित्।

आवश्यके णिनिः। कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकं मुखम्। वास्त्रयुगिकम् शरीरम्। वस्त्रयुगेन विशेषतः शोभत इत्यर्थः॥

## कर्मवेषाद्यत् ॥ १०० ॥

कर्मन्वेषशब्दाभ्यां तृतीयासमर्थाभ्यां यत्प्रत्ययो भवति संपादिनीत्येतस्मिन् विषये। ठञोऽपवादः। कर्मणा संपद्यते कर्मण्यं शरीरम्। वेषेण संपद्यते वेष्यो नटः॥

## तस्मै प्रभवति संतापादिभ्यः॥ १०१ ॥

तस्मा इति चतुर्थीसमर्थेभ्यः संतापादिभ्यः प्रभवतीत्यस्मिन् विषये ठञ् प्रत्ययो भवति। समर्थः शक्तः प्रभवतीत्युच्यते। अलमर्थे चतुर्थी। संतापाय प्रभवति सांतापिकः। सान्नाहिकः। संताप। संनाह। संग्राम। संयोग। संपराय। संपेष। निष्पेष। निसर्ग। असर्ग। विसर्ग। उपसर्ग। उपवास। प्रवास। संघात। संमोदन। सक्तु। मांसौदनाद्विगृहीतादपि(१)। सन्तापादिः॥

## योगाद्यच्च ॥ १०२ ॥

योगशब्दाद्यत्प्रत्ययो भवति चकाराट्ठञ् तस्मै प्रभवतीत्यस्मिन् विषये। योगाय प्रभवति योग्यः। यौगिकः॥

## कर्मण उकञ् ॥ १०३ ॥

कर्मन् शब्दादुकञ् प्रत्ययो भवति तस्मै प्रभवतीत्येतस्मिन्नर्थे। ठञोऽपवादः। कर्मणे प्रभवति कार्मुकं धनुः॥

## समयस्तदस्य प्राप्तम् ॥ १०४ ॥

समयशब्दात् तदिति प्रथमासमर्थात् अस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्राप्तं चेत्तद्भवति। समयः प्राप्तोऽस्य सामयिकं कार्यम्। उपनतकालमित्यर्थः। समर्थविभक्तिनिर्देश उत्तरार्थः॥

## ऋतोरण् ॥ १०५ ॥

तदस्य प्राप्तमित्यनुवर्त्तते। ऋतुशब्दात्तदिति प्रथमासमर्थात् अस्येति षष्ठ्यर्थेऽण् प्रत्ययो भवति तदस्य प्राप्तमित्येतस्मिन् विषये(२)। ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पम्। छतदस्य

---

कर्म—तृतीयासमर्थ कर्मन् तथा वेष शब्दों से गुणोत्कर्ष-सम्पादक अर्थ में यत् प्रत्यय होता है।

तस्मै—चतुर्थीसमर्थ सन्ताप आदि शब्दों से 'तस्मै प्रभवति' (उसके लिए समर्थ है) अर्थ में ठञ् प्रत्यय होता है।

योगात्—चतुर्थीसमर्थ योग शब्द से 'तस्मै प्रभवति' अर्थ में यत् प्रत्यय और ठञ् प्रत्यय भी होते हैं।

कर्मणः—चतुर्थीसमर्थ कर्मन् शब्द से 'तस्मै प्रभवति' अर्थ में उकञ् प्रत्यय होता है।

समयः—सम्प्राप्तकालवाचक प्रथमासमर्थ समय शब्द से षष्ठ्यर्थ में ठञ् प्रत्यय होता है।

ऋतोः—प्रथमासमर्थ सम्प्राप्तकालार्थक ऋतु शब्द से षष्ठ्यर्थ में अण् प्रत्यय होता है।

तदस्य—'तदस्य प्राप्तम्' अर्थ में प्रत्यय विधान के प्रकरण में उपवस्त्र आदि शब्दों से भी अण् प्रत्यय का विधान अवगन्तव्य है।

---

(१) निर्घोष, सर्ग, सम्पात, संवाद, संवेशन, इत्येते शब्दा अत्र गणे अधिकाः बहुषु पुस्तकेषु, तत्रैकस्मिन् पुस्तके संवेशनेत्यत्र संवेशेति पाठान्तरम्।

(२) ऋतुशब्दात्प्रथमासमर्थात् प्राप्तोपाधिकादस्येतिषष्ठ्यर्थेऽणप्रत्ययो भवति इति पाठान्तरम्।

प्रकरणे उपवस्त्रादिभ्य उपसंख्यानम्॥ । उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् ॥

## छन्दसि घस् ॥ १०६ ॥

ऋतुशब्दाच्छन्दसि विषये घस् प्रत्ययो भवति तदस्य प्राप्तमित्यस्मिन् विषये । अणोऽपवादः । अयं ते योनिर्ऋत्वियः ॥

## कालाद्यत् ॥ १०७ ॥

कालशब्दाद्यत्प्रत्ययो भवति तदस्य प्राप्तमित्यस्मिन् विषये । कालः प्राप्तोऽस्य काल्यस्तापः । काल्यं शीतम्(१) ॥

## प्रकृष्टे ठञ् ॥ १०८ ॥

कालादिति वर्तते, तदस्येति च । प्राप्तमिति निवृत्तम् । प्रकर्षेण कालो विशेष्यते । प्रकर्षे वर्तमानात्कालात्तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति । प्रकृष्टो दीर्घः कालोऽस्य कालिकमृणम् । कालिकं वैरम् । ठञ्ग्रहणं विस्पष्टार्थम् ॥

## प्रयोजनम् ॥ १०९ ॥

तदस्येत्येव । तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति यत्तत्प्रथमासमर्थं प्रयोजनं चेत्तद्भवति । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । गाङ्गामहिकम् ॥

## विशाखाषाढादण्मन्थदण्डयोः ॥ ११० ॥

विशाखाषाढाशब्दाभ्यामण् प्रत्ययो भवति तदस्य प्रयोजनमित्येतस्मिन् विषये यथासंख्यं मन्थदण्डयोरभिधेययोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः । ॥चूडादिभ्य उपसंख्यानम्॥ । चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् ॥

## अनुप्रवचनादिभ्यश्छः ॥ १११ ॥

अनुप्रवचनादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति तदस्य प्रयोजनमित्यस्मिन् विषये । ठञोऽपवादः । अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम् । उत्थापनीयम् । ॥विशिपूरिपतिरुहि(२)प्रकृतेरनात्सपूर्वपदादुपसंख्यानम्॥ । गृहप्रवेशनं प्रयोजनमस्य

छन्दसि—परन्तु छन्दो-विषय में ऋतु शब्द से उक्तार्थ में घस् प्रत्यय हो जाता है ।

कालात्—सम्प्राप्तकालवाचक प्रथमासमर्थ काल शब्द से षष्ठ्यर्थ में यत् प्रत्यय होता है ।

प्रकृष्टे—प्रकर्षार्थ में वर्त्तमान प्रथमासमर्थ काल शब्द से षष्ठ्यर्थ में ठञ् प्रत्यय होता है ।

प्रयोजनम्—प्रयोजनस्थानीय प्रथमासमर्थ प्रातिपदिक से षष्ठ्यर्थ में ठञ् प्रत्यय होता है ।

विशाखा—प्रयोजनस्थानीय प्रथमासमर्थ विशाखा तथा आषाढ़ा शब्दों से अण् प्रत्यय होता है यदि क्रमशः प्रत्ययान्त के वाच्य मन्थ तथा दण्ड हों ।

चूडादिभ्यः—चूड़ा आदि शब्दों से भी अण् प्रत्यय समझना चाहिए ।

अनु—प्रयोजनस्थानीय प्रथमासमर्थ अनुप्रवचन आदि शब्दों से षष्ठ्यर्थ में छ प्रत्यय होता है ।

विशि—विश, पूर, पत तथा रुह धातुओं से विहित ( ल्युट्स्थानिक ) अन्-प्रत्ययान्त शब्दों से भी षष्ठ्यर्थ में छ प्रत्यय समझना चाहिए यदि अन्-प्रत्ययान्त शब्द सपूर्वक हो ।

( १ ) गीतमिति पाठान्तरम् ।

( २ ) रुहीत्यस्याग्रे पदीत्यधिकं प्रपदनीयमित्युदाहरणं चाधिकमेकस्मिन्पुस्तके । परन्तु पदमञ्जर्यसम्मतस्तस्य पाठः । भाष्यपुस्तकेषु तु विशिपूरिपदीत्येव पाठ उपलभ्यते ।

गृहप्रवेशनीयम् । प्रपापूरणीयम् । अश्वप्रपतनीयम् । प्रासादारोहणीयम् । ॐस्वर्गादिभ्यो यद्वक्तव्यःॐ । स्वर्गः प्रयोजनमस्य स्वर्ग्यम् । यशस्यम् । आयुष्यम् । काम्यम् । धन्यम् । ॐपुण्याहवाचनादिभ्यो लुग्वक्तव्यःॐ । पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् । स्वस्तिवाचनम् । शान्तिवाचनम् । अनुप्रवचन । उत्थापन । प्रवेशन । अनुप्रवेशन । उपस्थापन । संवेशन । अनुवेशन । 'अनुवचन । अनुवादन । अनुवासन । आरम्भण । आरोहण । अन्वारोहण । प्ररोहण । अनुप्रवचनादिः ॥

## समापनात् सपूर्वपदात् ॥ ११२ ॥

समापनशब्दात्सपूर्वपदाद्विद्यमानपूर्वपदाच्छः प्रत्ययो भवति तदस्य प्रयोजनमित्येतस्मिन् विषये । ठञोऽपवादः । छन्दस्समापनं प्रयोजनमस्य छन्दःसमापनीयम् । व्याकरणसमापनीयम् । पदग्रहणं बहुच्पूर्वनिरासार्थम् ॥

## ऐकागारिकट् चौरे ॥ ११३ ॥

ऐकागारिकट् इति निपात्यते चौरेऽभिधेये । एकागारं प्रयोजनमस्य ऐकागारिकः चौरः । ऐकागारिकी । किमर्थमिदं निपात्यते, यावता प्रयोजनमित्येव सिद्धञ्? चौरे नियमार्थं वचनम्, इह माभूत्—एकागारं प्रयोजनमस्य भिक्षोरिति । टकारः कार्यावधारणार्थः—ङीबेव भवति, न ञित्स्वर इति । अपरे पुनरिकट् प्रत्ययं वृद्धिं च निपातयन्ति ॥

## आकालिकडाद्यन्तवचने ॥ ११४ ॥

आकालिकट् इति निपात्यते आद्यन्तवचने । समानकालशब्दस्याकालशब्द आदेशः, आद्यन्तयोश्चेत्तद्विशेषणम्, इकट् प्रत्ययश्च निपात्यते । समानकालावाद्यन्तावस्य आकालिकः स्तनयित्नुः । आकालिकी विद्युत्, जन्मना तुल्यकालविनाशा, उत्पन्नानन्तरं विनाशिनीत्यर्थः । ॐआकालाट् ठंश्चॐ । चात् ठञ् च । आकालिका विद्युत् । ठञः पूर्णोऽवधिः ॥

## तेन तुल्यं क्रिया चेद्वतिः ॥ ११५ ॥

तेनेति तृतीयासमर्थात्तुल्यमित्यर्थे वतिः प्रत्ययो भवति यत्तुल्यं क्रिया चेत्सा भवति । ब्राह्मणेन तुल्यं वर्त्तते ब्राह्मणवत् । राजवत् । क्रियाग्रहणं किम्? गुण(१)

---

स्वर्गादिभ्यः—प्रयोजनीभूत स्वर्गादि शब्दों से षष्ठ्यर्थ में यत् प्रत्यय समझना चाहिए ।

पुण्याह—प्रयोजन-स्थानीय पुण्याहवाचन आदि शब्दों से विहित प्रत्यय का लुक् अवगन्तव्य है ।

समापनात्—पूर्वपदविशिष्ट प्रयोजनस्थानीय समापन शब्द से षष्ठ्यर्थ में छ प्रत्यय होता है ।

ऐकागारिकट्—चौर के वाच्य होने पर षष्ठ्यर्थ में प्रयोजनस्थानीय एकागार शब्द के स्थान में ऐकागारिकट् शब्द का निपातन है । ( एकागार शब्द से इकट् प्रत्यय का निपातन है ) ।

आकालिकट्—उत्पत्तिविनाशोभयप्रतिपादक समानकाल शब्द के स्थान में आकाल आदेश और उससे इकट् प्रत्यय का निपातन है ।

आकालात्—आदेशस्वरूप आकाल शब्द से ठन् तथा ठञ् प्रत्ययों का विधान भी समझना चाहिए ।

तेन तुल्यम्—तृतीयासमर्थ प्रातिपदिक से क्रियागत तुल्यता के प्रतिपादन में वति प्रत्यय होता है ।

---

(१) द्रव्येति बहुषु पुस्तकेषु नास्ति ।

द्रव्यतुल्ये मा भूत्-पुत्रेण सह स्थूलः, पुत्रेण तुल्यः पिङ्गलः, पुत्रेण तुल्यो गोमान्(१)॥

## तत्र तस्येव ॥ ११६ ॥

तत्रेति सप्तमीसमर्थात्तस्येति षष्ठीसमर्थाच्च इवार्थे वतिः प्रत्ययो भवति । मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः(२) । पाटलिपुत्रवत् साकेते परिखा । षष्ठीसमर्थात्-देवदत्तस्येव देवदत्तवद् यज्ञदत्तस्य गावः । यज्ञदत्तस्येव देवदत्तस्य दन्ताः यज्ञदत्तवत्(३)॥

## तदर्हम् ॥ ११७ ॥

तदिति द्वितीयासमर्थादर्हमित्येतस्मिन्नर्थे वतिः प्रत्ययो भवति । राजानमर्हति राजवत्पालनम् । ब्राह्मणवत् । ऋषिवत् । क्षत्रियवत् ॥

## उपसर्गाच्छन्दसि धात्वर्थे ॥ ११८ ॥

उपसर्गात्साधने धात्वर्थे वतिः प्रत्ययो भवति छन्दसि विषये । यदुद्वतो निवतो यासि बप्सद्, उद्गतानि निगतानि च ॥

## तस्य भावस्त्वतलौ ॥ ११९ ॥

तस्येति षष्ठीसमर्थाद् भाव इत्येतस्मिन्नर्थे त्वतलौ प्रत्ययौ भवतः । भवतोऽस्मादभिधानप्रत्ययाविति भावः । शब्दस्य प्रवृत्तिनिमित्तं भावशब्देनोच्यते । अश्वस्य भावः अश्वत्वम् । अश्वता । गोत्वम् । गोता ॥

## आ च त्वात् ॥ १२० ॥

ब्रह्मणस्त्व इति वक्ष्यति । आ एतस्मात्त्वसंशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामस्तत्र त्वतलौ प्रत्ययावधिकृतौ वेदितव्यौ । वक्ष्यति-पृथ्वादिभ्य इमनिज्वेति । प्रथिमा । पार्थवम् । पृथुत्वम् । पृथुता । म्रदिमा । मार्दवम् । मृदुत्वम् । मृदुता । अपवादैः सह समावेशार्थं वचनम् , कर्मणि च विधानार्थम्-गुणवचनब्राह्मणादिभ्यः कर्मणि चेति । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पुंसो भावः पुंस्त्वम् । पुंस्ता । पौंस्नम् ।

## न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवट(४)युधकतरसलसेभ्यः॥१२१॥

तत्र—सप्तमीसमर्थ तथा षष्ठीसमर्थ प्रातिपदिकों से 'इव' के अर्थ में वति प्रत्यय होता है ।

तदर्हम्—द्वितीयासमर्थ प्रातिपदिक से 'अर्हम्' ( योग्य ) अर्थ में वति प्रत्यय होता है ।

उपसर्गाद्—धात्वर्थविशिष्ट साधनार्थक उपसर्ग ( जहाँ क्रियापद का प्रयोग नहीं हुआ रहता है वहाँ उपसर्ग धात्वर्थविशिष्ट साधन का प्रतिपादन करता है ) से स्वार्थ में वति प्रत्यय होता है वेद में ।

तस्य—षष्ठीसमर्थ प्रातिपदिक से भावार्थ में त्व तथा तल् प्रत्यय होते हैं ।

आ च—यहाँ से आगे 'ब्रह्मणस्त्वः' सूत्र तक त्व तथा तल् प्रत्ययों का अधिकार समझना चाहिए ।

न नञ्—अचतुर, असङ्गत, अलवण, अवट, अयुध, अकत, अरस तथा अलस शब्दों से भिन्न नञ्पूर्वक तत्पुरुषसमस्त षष्ठीसमर्थ प्रातिपदिकों से विधास्यमान भाव प्रत्यय नहीं होते हैं ।

( १ ) पुत्रेण तुल्यो गोमान् इति बहुषु पुस्तकेषु नास्ति ।
( २ ) प्रासाद इति पाठान्तरम् ।
( ३ ) देवदत्तवत् यज्ञदत्तस्य दन्ता इति पाठान्तरम् ।
( ४ ) बुध इति पण्डितपत्रे पाठान्तरम् ।

इत उत्तरे ये भावप्रत्ययास्ते नञ्पूर्वात्तत्पुरुषाच्च भवन्ति चतुरादीन् वर्जयित्वा। वक्ष्यति-पत्यन्तपुरोहितादिभ्यो यगिति। अपतित्वम्। अपतिता। अपटुत्वम्। अपटुता। अरमणीयत्वम्। अरमणीयता। नञ्पूर्वादिति किम्? बार्हस्पत्यम्, प्राजापत्यम्। तत्पुरुषादिति किम्? नास्य पटवः सन्तीत्यपटुः, तस्य भाव आपटवम्, आलघवम्। अचतुरादिभ्य इति किम्? आचतुर्यम्, आसंगत्यम्, आलवण्यम्, आवत्यम्, आयुध्यम्(१), आकत्यम्, आरस्यम्; आलस्यम्॥

## पृथ्वादिभ्य इमनिज्वा॥ १२२॥

पृथु इत्येवमादिभ्यः प्रातिपदिकेभ्य इमनिच्प्रत्ययो भवति वा तस्य भाव इत्येतस्मिन्नर्थे। वावचनमणादेः समावेशार्थम्। पृथोर्भावः प्रथिमा। पार्थवम्। म्रदिमा। मार्दवम्। तुरिष्ठेमेयस्सु, टेः इति टिलोपः। र ऋतो हलादेर्लघोः इतिः रेफादेशः(२)। त्वतलौ सर्वत्र भवत एव। पृथुत्वम्। पृथुता। मृदुत्वम्। मृदुता। पृथु। मृदु। महत्। पटु। तनु। लघु। बहु। साधु। वेणु। आसु। बहुल। गुरु। दण्ड। ऊरु। खण्ड। बाल। अकिंचन। होड। पान(३)। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। वृप। ऋजु। क्षिप्र। क्षुप्र। क्षुद्र। पृथ्वादिः॥

## वर्णदृढादिभ्यः ष्यञ् च॥ १२३॥

वर्णविशेषवाचिभ्यः प्रातिपदिकेभ्यो दृढादिभ्यश्च ष्यञ् प्रत्ययो भवति चकारादिमनिच्च तस्य भाव इत्येतस्मिन् विषये। शुक्लस्य भावः शौक्ल्यम्। शुक्लिमा। शुक्लत्वम्। शुक्लता। कार्ष्ण्यम्। कृष्णिमा। कृष्णत्वम्। कृष्णता। दृढादिभ्यः-दार्ढ्यम्। द्रढिमा। दृढत्वम्। दृढता। षकारो ङीषर्थः-औचिती। याथाकामी। दृढ। परिवृढ। भृश। चक्र। आम्र। लवण। ताम्र। अम्ल। शीत। उष्ण। जड। बधिर। पण्डित। मधुर। मूर्ख। मूक। वेर्यातलाभमतिमनः शारदानाम्। समो मतिमनसोः(४) जवने(५)।

## गुणवचनब्राह्मणादिभ्यः कर्मणि च॥ १२४॥

गुणमुक्तवन्तो गुणवचनाः। गुणवचनेभ्यो ब्राह्मणादिभ्यश्च तस्येति षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ्प्रत्ययो भवति चकाराद् भावे च। कर्मन्शब्दः क्रियावचनः। जडस्य भावः कर्म वा जाड्यम्। ब्राह्मणादिभ्यः खल्वपि-ब्राह्मण्यम्। माणव्यम्। आ पादपरिसमाप्तेर्भावकर्माधिकारः। ब्राह्मणादिराकृतिगणः। आदिशब्दः प्रकारवचनः। ॐचातुर्वर्ण्या-

---

पृथ्वादिभ्यः—षष्ठीसमर्थ पृथु आदि शब्दों से भावार्थ में विकल्प से इमनिच् प्रत्यय होता है।

वर्ण—षष्ठीसमर्थ रूप-विशेषवाचक शब्द तथा दृढ आदि शब्दों से भावार्थ में विकल्प से ष्यञ् तथा इमनिच् प्रत्यय होते हैं।

गुणवचन—षष्ठीसमर्थ गुणवाचक तथा ब्राह्मण आदि शब्दों से 'क्रिया' अर्थ में तथा भावार्थ में ष्यञ् प्रत्यय होता है।

चातुर्वर्ण्यादीनाम्—चतुर्वर्ण आदि शब्दों से स्वार्थ में ही ष्यञ् प्रत्यय अवगन्तव्य है।

---

(१) आयुध्यम् इति पाठान्तरम् पण्डितपत्रे।

(२) अत्र तुरिष्ठेमेयस्स्वित्यारभ्य रेफादेश इत्यन्तो ग्रन्थो बहुत्र नोपलभ्यते।

(३) पाक इति पाठान्तरं पण्डितपत्रे।

(४) जवन इति बहुषु पुस्तकेषु नोपलभ्य।

(५) बाल। तरुण। मन्द। स्थिर। बहुल। दीर्घ। मूढ। आकृष्ट। इत्यष्टौ शब्दाः क्वचित् अधिका उपलभ्यन्ते।

दीनां स्वार्थे उपसंख्यानम्॥। चत्वार एव वर्णाश्चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैलोक्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। सौख्यम्। ब्राह्मण। वाडव। माणव। चोर। मूक। आराधय। विराधय। अपराधय। उपराधय। एकभाव। द्विभाव। त्रिभाव। अन्यभाव। समस्थ। विषमस्थ। परमस्थ। मध्यमस्थ। अनीश्वर। कुशल। कपि। चपल। अक्षेत्रज्ञ। निपुण। ॥अर्हतो नुम् च॥। आर्हन्त्यम्। संवादिन्। संवेशिन्। बहुभाषिन्। बालिश। दुष्पुरुष। कापुरुष। दायाद। विशसि। धूर्त्त। राजन्। संभाषिन्। शीर्षपातिन्। अधिपति। अलस। पिशाच। पिशुन। विशाल। गणपति। धनपति। नरपति। गडुल। निव। निधान। विष। ॥सर्ववेदादिभ्यः स्वार्थे॥। ॥चतुर्वेदस्योभयपदवृद्धिश्च॥। चातुर्वैद्यम्। (१) ब्राह्मणादिः॥

## स्तेनाद्यन्नलोपश्च ॥ १२५ ॥

स्तेनशब्दात् षष्ठीसमर्थाद्भावकर्मणोरर्थयोः यत् प्रत्ययो भवति नशब्दस्य लोपश्च भवति। स्तेनस्य भावः कर्म वा स्तेयम्। स्तेनादिति केचिद् योगविभागं कुर्वन्ति—स्तेनात् ष्यञ् भवति—स्तैन्यम्। ततो यन्नलोपश्च—स्तेनादित्येव—स्तेयम्॥

## सख्युर्यः ॥ १२६ ॥

सखिशब्दाद् यः प्रत्ययो भवति भावकर्मणोरर्थयोः। सख्युर्भावः कर्म वा सख्यम्। ॥दूतवणिग्भ्यां चेति वक्तव्यम्॥। दूत्यम्। वणिज्यम्। कथं वाणिज्यम्? ब्राह्मणादित्वात्॥

## कपिज्ञात्योर्ढक् ॥ १२७ ॥

कपिज्ञातिशब्दाभ्यां ढक् प्रत्ययो भवति भावकर्मणोरर्थयोः। कपेर्भावः कर्म वा कापेयम्। ज्ञातेयम्। ॥यथासंख्यमर्थयोः सर्वत्रैवात्र प्रकरणे नेष्यते॥॥

## पत्यन्तपुरोहितादिभ्यो यक् ॥ १२८ ॥

---

अर्हतः—अर्हत् शब्द से स्वार्थ में ष्यञ् प्रत्यय भी होता है ओर प्रकृति को नुमागम भी।

सर्ववेदादिभ्यः—सर्ववेद आदि शब्दों से स्वार्थ में ही ष्यञ् प्रत्यय समझना चाहिए।

चतुर्वेदस्योभय—चतुर्वेद शब्द से स्वार्थ में ष्यञ् प्रत्यय तथा उभयपदवृद्धि अवगन्तव्य हैं।

स्तेनात्—षष्ठीसमर्थ स्तेन शब्द से भाव तथा कर्म (क्रिया) अर्थों में यन् प्रत्यय तथा प्रकृति के नकार का लोप भी हो जाता है।

सख्युर्यः—भाव तथा कर्म अर्थों में षष्ठीसमर्थ सखि शब्द से य प्रत्यय होता है।

दूत—षष्ठीसमर्थ दूत तथा वणिज् शब्दों से भी भाव तथा कर्म अर्थों में य प्रत्यय समझना चाहिए।

कपि—षष्ठीसमर्थ कपि तथा ज्ञाति शब्दों से भाव और कर्म अर्थों में ठक् प्रत्यय होता है।

यथा—इस प्रकरण में कहीं भी अर्थों में यथासंख्य मान्य नहीं है।

पत्यन्त—षष्ठीसमर्थ पतिशब्दान्त प्रातिपदिक से तथा पुरोहित आदि शब्दों से भाव और कर्म अर्थों में यक् प्रत्यय होता है।

---

(१) अस्मिन् गणे बहवः शब्दा उपलभ्यन्तेऽन्यत्र। ते च यथा—स्वभाव। निघातिन्। राजपुरुष। विशस्ति। विशाय। विशात। विजात। नयात। सुहित। दीन। विदग्ध। उचित। समग्र। शील। तत्पर। इदम्पर। यथा। तथा। पुरस्। पुनः। पुनर्। अभीक्ष्ण। तरतम। प्रकाम। यथाकाम। निष्कुल। स्वराज। महाराज। युवराज। सम्राज। अविदुर। अपिशुन। अनृशंस। अयथातथ। अयथापुर। स्वधर्म। अनुकूल। परिमण्डल। विश्वरूप। ऋत्विज्। उदासीन। ईश्वर। प्रतिभू। साक्षि। मानुष। आस्तिक। नास्तिक। युगपत्। पूर्वापर। उत्तराधर। इति।

पत्यन्तात् प्रातिपदिकात् पुरोहितादिभ्यश्च यक् प्रत्ययो भवति भावकर्मणोरर्थयोः। सेनापतेर्भावः कर्म वा सैनापत्यम्। गार्हपत्यम्। प्राजापत्यम्। पौरोहित्यम्। राज्यम्। पुरोहित। राजन्। संग्रामिक। एषिक। वर्मित। खण्डिक। दण्डिक। छत्रिक। मिलिक। पिण्डिक। बाल। मन्द। स्तनिक। चूडितिक। कृषिक। पूतिक। पत्रिक। प्रतिक। अजानिक। सलनिक। सूचिक। शाक्वर। सूचक। पत्तिक। सारथिक। जलिक। सूतिक। अञ्जलिक। सूचक। (१)पुरोहितादिः॥

## प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ १२९ ॥

प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्चाञ् प्रत्ययो भवति भावकर्मणोरर्थयोः। अश्वस्य भावः कर्म वा आश्वम्। औष्ट्रम्। वयोवचनेभ्यः- कौमारम्। कैशोरम्। उद्गात्रादिभ्यः—औद्गात्रम्। औन्नेत्रम्। उद्गातृ। उन्नेतृ। प्रतिहर्तृ। रथगणक। पक्षिगणक(२)। सुष्टु। दुष्टु। अध्वर्यु। वधू। सुभगमन्त्रे(३)। उद्गात्रादिः॥

## हायनान्तयुवादिभ्योऽण् ॥ १३० ॥

हायनान्तेभ्यः प्रातिपदिकेभ्यो युवादिभ्यश्चाण् प्रत्ययो भवति भावकर्मणोरर्थयोः। द्विहायनस्य भावः कर्म वा द्वैहायनम्। त्रैहायनम्। युवादिभ्यः यौवनम्। स्थाविरम्। *श्रोत्रियस्य यलोपश्च वाच्यः*। श्रोत्रियस्य भावः कर्म वा श्रौत्रम्। युवन्। स्थविर। होतृ। यजमान। कमण्डलु। पुरुपासे। सुहृत्। यातृ। श्रवण। कुस्त्री। सुस्त्री। सुहृदय। सुभ्रातृ। वृषल। दुर्भ्रातृ। हृदयासे। क्षेत्रज्ञ। कृतक। परिव्राजक। कुशल। चपल। निपुण। पिशुन। सब्रह्मचारिन्। कुतूहल। अनृशंस। (४)युवादिः॥

## इगन्ताच्च लघुपूर्वात् ॥ १३१ ॥

इगन्ताच्च लघुपूर्वादण् प्रत्ययो भवति भावकर्मणोः। लघुपूर्वग्रहणेन प्रातिपदिकसमुदायो विशेष्यते, लघुः पूर्वोऽवयवोऽस्येति लघुपूर्वः। कुतः पुनरसौ लघुः पूर्वः? इक्सं-निधानादिक इति विज्ञायते। लघुः पूर्वो यस्मादिकस्तदन्तात्प्रातिपदिकादित्ययमर्थो विवक्षितः। अपरे तत्पुरुषकर्मधारयं वर्णयन्ति-इक् चासावन्तश्चेतीगन्तः, लघुपूर्वग्रहणेन स

---

प्राण—षष्ठीसमर्थ प्राणिजातिवाचक वयोवाचक, तथा उद्गात्र आदि शब्दों से भाव और कर्म अर्थों में अञ् प्रत्यय होता है।

हायनान्त—षष्ठीसमर्थ हायनशब्दान्त तथा युवन् आदि शब्दों से भाव और कर्म अर्थों के अण् प्रत्यय होता है।

श्रोत्रियस्य—षष्ठीसमर्थ श्रोत्रिय शब्द से भाव-कर्म अर्थों में अण् प्रत्यय तथा प्रकृति के यकार का लोप भी अवगन्तव्य है।

इगन्ताच्च—लघु हो पूर्व में जिस इक् का तदन्त प्रातिपदिक से भाव-कर्म अर्थों में अण् प्रत्यय होता है।

---

(१) शमिक। चमिक। कमिक। शीलिक। मूलिक। तिलिका। तिश्विक। अज्ञातका। ऋषिक। पुत्रक। पथिका। प्रचिक। प्रविक। परिक्षक। पूजनिक। राजासे। मूचिक। स्वरिक। चूडिक। एते शब्दा अन्यत्राधिका उपलभ्यन्ते।

(२) पत्रिगणक इति पाठान्तरम्।

(३) प्रशास्तृ। होतृ। पोतृ। कर्तृ। एतेऽत्र गणेऽधिकाः कुत्रचित्।

(४) भ्रातृ। कुत्सुक। कन्दुक। दुःखी। दुर्हृदय। दुर्हृत। मिथुन। कुलली। महस्। कतक। कितव। पीत। एतेऽधिका अन्यत्र पुस्तकान्तरे।

एव विशेष्यते, पश्चात्तेन प्रातिपदिकस्य तदन्तविधिरिति। अस्मिन् व्याख्यानेऽन्तग्रहणमतिरिच्यते, लघुपूर्वादिक इत्येतावदेव वाच्यं स्यात्। शुचेर्भावः कर्म वा शौचम्। मौनम्। नागरम्। हारीतकम्। पाटवम्। लाघवम्। इगन्तादिति किम्? घटत्वम्, पटत्वम्। लघुपूर्वादिति किम्? कण्डूत्वम्, पाण्डुत्वम्। कथं काव्यमिति? ब्राह्मणादिषु कविशब्दो द्रष्टव्यः॥

## योपधाद् गुरूपोत्तमाद्वुञ् ॥ १३२ ॥

त्रिप्रभृतीनामन्तस्य समीपमुपोत्तमम्, गुरु उपोत्तमं यस्य तद् गुरूपोत्तमम्। यकारोपधाद् गुरूपोत्तमाद् वुञ् प्रत्ययो भवति भावकर्मणोः। रमणीयस्य भावः कर्म वा रामणीयकम्। वासनीयकम्। योपधादिति किम्? विमानत्वम्(१)। गुरूपोत्तमादिति किम्? क्षत्रियत्वम्। ॐसहायाद्वेति वक्तव्यम्ॐ। साहायकम्। साहाय्यम्॥

## द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३३ ॥

द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च वुञ् प्रत्ययो भवति भावकर्मणोः। गोपालपशुपालानां भावः कर्म वा गौपालपाशुपालिका। शैष्योपाध्यायिका। कौत्सकुशिकिका। मनोज्ञादिभ्यः—मानोज्ञकम्। काल्याणकम्। मनोज्ञ। कल्याण। प्रियरूप। छान्दस। छात्र। मेधाविन्। अभिरूप। आढ्य। कुलपुत्र। श्रोत्रिय। चौर। धूर्त। वैश्वदेव। युवन्। ग्रामपुत्र। ग्रामखण्ड। ग्रामकुमार। अमुष्यपुत्र। अमुष्यकुल। शतपुत्र। कुशल। मनोज्ञादिः(२)॥

## गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३४ ॥

गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु। तत्र श्लाघा विकत्थनम्। अत्याकारः पराधिक्षेपः। तदवेतस्तत्प्राप्तस्तज्ज्ञो वा। तदिति गोत्रचरणयोर्भावकर्मणी निर्दिश्येते, तत्प्राप्तस्तदवगतवान् तदवेत इत्युच्यते। श्लाघायां तावत्—गार्गिकया श्लाघते। काठिकया श्लाघते। गार्ग्यत्वेन कठत्वेन च विकत्थत इत्यर्थः। अत्याकारे—गार्गिकयात्याकुरुते। काठिकयात्याकुरुते। गार्ग्यत्वेन कठत्वेन च परानधिक्षिपतीत्यर्थः। तदवेते—गार्गिकामवेतः। काठिकामवेतः। गार्ग्यत्वं च प्राप्त इत्यर्थः। तद्वाऽवगतवानित्यर्थः। श्लाघादिष्विति किम्? गार्ग्यत्वम्, कठत्वम्॥

## होत्राभ्यश्छः ॥ १३५ ॥

होत्राशब्द ऋत्विग्विशेषवचनः। ऋत्विग्विशेषवाचिभ्यश्छः प्रत्ययो भवति भावकर्मणोः। अच्छावाकस्य भावः कर्म वाऽच्छावाकीयम्। मित्रावरुणीयम्। ब्राह्मणाच्छं-

---

योपधात्—यकारोपध तथा गुरूपोत्तम ( उपोत्तम = अन्तिम से पहला ) प्रातिपदिकों से भाव-कर्म अर्थों में वुञ् प्रत्यय होता है।

सहायात्—सहाय शब्द से विकल्प से वुञ् का विधान समझना चाहिए।

द्वन्द्व—द्वन्द्वसंज्ञक तथा मनोज्ञ आदि प्रातिपदिकों से भाव-कर्म अर्थों में वुञ् प्रत्यय होता है।

गोत्र—गोत्रवाचक तथा चरणवाचक प्रातिपदिकों से भाव-कर्म अर्थों में वुञ् प्रत्यय होता है श्लाघा, अत्याकार ( अधिक्षेप ) तथा अवेत ( प्राप्त ) अर्थों में।

होत्राभ्यः—ऋत्विग्विशेषवाचक शब्दों से भाव-कर्म अर्थों में छ प्रत्यय होता है।

---

( १ ) कुलीनत्वमिति पाठान्तरम्।

( २ ) बहुल। अवश्य। अहोपुरुष। एते अन्यत्राधिकाः।

सीयम्। आग्नीध्रीयम्। प्रतिप्रस्थात्रीयम्। त्वष्ट्रीयम्। पोत्रीयम्। बहुवचनं स्वरूपविधिनिरासार्थम्॥

### ब्रह्मणस्त्वः॥ १३६॥

होत्राभ्य इत्यनुवर्त्तते। ब्रह्मन्शब्दाद्धोत्रावाचिनस्त्वः प्रत्ययो भवति भावकर्मणोः। छस्यापवादः। ब्रह्मणो भावः कर्म वा ब्रह्मत्वम्। नेति वक्तव्ये त्ववचनं तलो बाधनार्थम्। यस्तु जातिशब्दो ब्राह्मणपर्यायो ब्रह्मन्शब्दस्ततस्त्वतलौ भवत एव-ब्रह्मत्वम्, ब्रह्मता। भवनावधिकयोर्नञ्स्नञोरधिकारः समाप्तः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य प्रथमः पादः॥ ५॥ १॥



---

ब्रह्मणस्त्वः—ऋत्विग्विशेषवाचक शब्दों से भाव-कर्म अर्थों में त्व प्रत्यय होता है।

पञ्चम अध्याय का प्रथम पाद समाप्त हुआ।



# अथ पञ्चमाध्यायस्य द्वितीयः पादः

## धान्यानां भवने क्षेत्रे खञ् ॥ १ ॥

निर्देशादेव समर्थविभक्तिः। धान्यविशेषवाचिभ्यः षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ् प्रत्ययो भवति तच्चेद्भवनं क्षेत्रं भवति। भवनमिति–भवन्ति जायन्तेऽस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्। कौद्रवीणम्। कौलत्थीनम्। धान्यानामिति किम्? तृणानां भवनं क्षेत्रमित्यत्र न भवति। क्षेत्रमिति किम्? मुद्गानां भवनं कुशूलम्। बहुवचनं स्वरूपविधिनिरासार्थम् ॥

## व्रीहिशाल्योर्ढक् ॥ २ ॥

व्रीहिशालिशब्दाभ्यां ढक् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। व्रीहीणां भवनं क्षेत्रं व्रैहेयम्। शालेयम् ॥

## यवयवकषष्टिकाद्यत् ॥ ३ ॥

यवादिभ्यः शब्देभ्यो यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। यवानां भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम् ॥

## विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥

तिल माष उमा भङ्गा अणु(१) इत्येतेभ्यो विभाषा यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञि प्राप्ते वचनम्। पक्षे सोऽपि भवति। उमाभङ्गयोरपि धान्यत्वमाश्रितमेव। तिल माष उमा भङ्गा अणु एषां भवनं क्षेत्रं(२) तिल्यम्, तैलीनम्; माष्यम्, माषीणम्; उम्यम्, औमीनम्; भङ्ग्यम्, भाङ्गीनम्; आणव्यम्, आणवीनम् ॥

## सर्वचर्मणः कृतः खखञौ ॥ ५ ॥

सर्वचर्मन्शब्दात्तृतीयासमर्थात् कृत इत्यस्मिन्नर्थे खखञौ प्रत्ययौ भवतः। सर्वशब्दश्चात्र प्रत्ययार्थेन कृतेन सम्बध्यते, न चर्मणा। तत्रायमसमर्थसमासो द्रष्टव्यः। सर्वश्चर्मणा कृत इत्येतस्मिन् वाक्यार्थे वृत्तिः। सर्वचर्मीणः। सार्वचर्मीणः ॥

---

धान्यानाम्—षष्ठीसमर्थ धान्यविशेषवाचक शब्दों से क्षेत्रात्मक उत्पत्तिभूमि की अभिधेयता में खञ् प्रत्यय होता है।

व्रीहि—क्षेत्रात्मक उत्पत्तिस्थान के अर्थ में षष्ठीसमर्थ व्रीहि तथा शालि शब्दों से ढक् प्रत्यय होता है।

यव—क्षेत्रात्मक उत्पत्तिस्थान के अर्थ में षष्ठीसमर्थ यव, यवक तथा षष्टिक शब्द से यत् प्रत्यय होता है।

विभाषा—क्षेत्रात्मक उत्पत्तिस्थान के अर्थ में षष्ठीसमर्थ तिल, माष, उमा, भङ्गा तथा अणु शब्दों से विकल्प से यत् प्रत्यय होता है।

सर्वचर्मणः—तृतीयासमर्थ सर्वचर्मन् शब्द से 'कृतः' (निर्मित) अर्थ में विकल्प से ख तथा खञ् प्रत्यय होते हैं।

---

(१) तिलादिभ्यः शब्देभ्य इति पाठान्तरम्।
(२) तिलानां भवनं क्षेत्रम् इति पाठान्तरम्।

## यथामुखसम्मुखस्य दर्शनः खः ॥ ६ ॥

यथामुखशब्दात् सम्मुखशब्दाच्च षष्ठीसमर्थाद्दर्शन इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। दृश्यतेऽस्मिन्निति दर्शनः, आदर्शादिः प्रतिबिम्बाश्रय उच्यते। निपातनात्सादृश्येऽव्ययीभावः—मुखस्य सदृशम् यथामुखम्। यथामुखं दर्शनः यथामुखीनः। सर्वस्य मुखस्य दर्शनः सम्मुखीनः ॥

## तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ७ ॥

तदिति द्वितीया समर्थविभक्तिः। व्याप्नोतीति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। सर्वादेः प्रातिपदिकात् पथिन् अङ्ग कर्मन् पत्र पात्र इत्येवमन्ताद् द्वितीयासमर्थाद् व्याप्नोतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणस्तापः। सर्वकर्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीण ओदनः ॥

## आप्रपदं प्राप्नोति ॥ ८ ॥

प्रपदमिति पादस्याग्रमुच्यते, आङ् मर्यादायाम्, तयोरव्ययीभावः। आप्रपदशब्दात्तदिति द्वितीयासमर्थात् प्राप्नोतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। आप्रपदं प्राप्नोति आप्रपदीनः पटः। शरीरेण सम्बद्धस्यापि पटस्य प्रमाणमाख्यायते ॥

## अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥

अनुपदादिभ्यः शब्देभ्यस्तदिति द्वितीयासमर्थेभ्यो यथासंख्यं बद्धा भक्षयति नेय इत्येतेष्वर्थेषु खः प्रत्ययो भवति। अनुरायामे सादृश्ये वा। अनुपदं बद्धाऽनुपदीना उपानत्। पदप्रमाणेत्यर्थः। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयः प्रदक्षिणम्(१), अनयः प्रसव्यम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन् परशारैः पदानामसमावेशः सोऽयानयः। अयानयं नेयोऽयानयीनः शारः। फलकशिरःस्थित इत्यर्थः ॥

## परोवरपरम्परपुत्रपौत्रमनुभवति ॥ १० ॥

परोवर परम्पर पुत्रपौत्र इत्येतेभ्यस्तदिति द्वितीयासमर्थेभ्योऽनुभवतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। परोवरेति परस्योत्वं प्रत्ययसंनियोगेन निपात्यते(२)। परांश्चवरांश्चानुभवति परोवरीणः। परपरतराणां च परम्परभावो निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। परम्परशब्दो विनापि प्रत्ययेन दृश्यते— मन्त्रिपरम्परा मन्त्रं भिनत्तीति। तच्छब्दान्तरमेव द्रष्टव्यम् ॥

---

यथामुख—षष्ठीसमर्थ यथामुख तथा सम्मुख शब्दों से 'दर्शन' (प्रतिबिम्बदर्शनाधार) अर्थ में ख प्रत्यय होता है।

तत्सर्वादेः—द्वितीयासमर्थ पथिन्शब्दान्त, अङ्गशब्दान्त, कर्मन्शब्दान्त, पत्रशब्दान्त तथा पात्रशब्दान्त सर्व शब्द से 'व्याप्नोति' (व्याप्त करता है) अर्थ में ख प्रत्यय होता है।

आप्रपदम्—द्वितीयासमर्थ आप्रपद शब्द से 'प्राप्नोति' (प्राप्त करता है) अर्थ में ख प्रत्यय होता है।

अनुपद—द्वितीयासमर्थ अनुपद शब्द से बद्ध अर्थ में, सर्वान्न शब्द से 'भक्षयति' (खाता है) अर्थ में और अयानय शब्द से नेय अर्थ में ख प्रत्यय होता है।

परोवर—द्वितीयासमर्थ परोवर, परम्पर, पुत्रपौत्र शब्दों से अनुभव अर्थ में ख प्रत्यय होता है।

---

(१) प्रदक्षिणगमनमित्यपि कुत्रचित्पाठ उपलभ्यते। परन्तु स न युक्तः, अयः प्रदक्षिणमिति प्रतीकमुपादाय प्रदक्षिणं गमनमित्यर्थ इति पदमञ्जर्यां विवृतत्वात्।

(२) परोवरेति परस्योत्वचनमिति पदमञ्जरीसम्मतः पाठः प्रतीयते।

# अथ पञ्चमाध्यायस्य द्वितीयः पादः

## धान्यानां भवने क्षेत्रे खञ् ॥ १ ॥

निर्देशादेव समर्थविभक्तिः। धान्यविशेषवाचिभ्यः षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ् प्रत्ययो भवति तच्चेद्भवनं क्षेत्रं भवति। भवनमिति-भवन्ति जायन्तेऽस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्। कौद्रवीणम्। कौलत्थीनम्। धान्यानामिति किम्? तृणानां भवनं क्षेत्रमित्यत्र न भवति। क्षेत्रमिति किम्? मुद्गानां भवनं कुशूलम्। बहुवचनं स्वरूपविधिनिरासार्थम् ॥

## व्रीहिशाल्योर्ढक् ॥ २ ॥

व्रीहिशालिशब्दाभ्यां ढक् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। व्रीहीणां भवनं क्षेत्रं व्रैहेयम्। शालेयम् ॥

## यवयवकषष्टिकाद्यत् ॥ ३ ॥

यवादिभ्यः शब्देभ्यो यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञोऽपवादः। यवानां भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम् ॥

## विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥

तिल माष उमा भङ्गा अणु(१) इत्येतेभ्यो विभाषा यत् प्रत्ययो भवति भवने क्षेत्रेऽभिधेये। खञि प्राप्ते वचनम्। पक्षे सोऽपि भवति। उमाभङ्गयोरपि धान्यत्वमाश्रितमेव। तिल माष उमा भङ्गा अणु एषां भवनं क्षेत्रं(२) तिल्यम्, तैलीनम्; माष्यम्, माषीणम्; उम्यम्, औमीनम्; भङ्ग्यम्, भाङ्गीनम्; आणव्यम्, आणवीनम् ॥

## सर्वचर्मणः कृतः खखञौ ॥ ५ ॥

सर्वचर्मन्शब्दात्तृतीयासमर्थात् कृत इत्यस्मिन्नर्थे खखञौ प्रत्ययौ भवतः। सर्वशब्दश्चात्र प्रत्ययार्थेन कृतेन सम्बध्यते, न चर्मणा। तत्रायमसमर्थसमासो द्रष्टव्यः। सर्वैश्चर्मणा कृत इत्येतस्मिन् वाक्यार्थे वृत्तिः। सर्वचर्मीणः। सार्वचर्मीणः ॥

---

धान्यानाम्—षष्ठीसमर्थ धान्यविशेषवाचक शब्दों से क्षेत्रात्मक उत्पत्तिभूमि की अभिधेयता में खञ् प्रत्यय होता है।

व्रीहि—क्षेत्रात्मक उत्पत्तिस्थान के अर्थ में षष्ठीसमर्थ व्रीहि तथा शालि शब्दों से ढक् प्रत्यय होता है।

यव—क्षेत्रात्मक उत्पत्तिस्थान के अर्थ में षष्ठीसमर्थ यव, यवक तथा षष्टिक शब्द से यत् प्रत्यय होता है।

विभाषा—क्षेत्रात्मक उत्पत्तिस्थान के अर्थ में षष्ठीसमर्थ तिल, माष, उमा, भङ्गा तथा अणु शब्दों से विकल्प से यत् प्रत्यय होता है।

सर्वचर्मणः—तृतीयासमर्थ सर्वचर्मन् शब्द से 'कृतः' (निर्मित) अर्थ में विकल्प से ख तथा खञ् प्रत्यय होते हैं।

---

(१) तिलादिभ्यः शब्देभ्य इति पाठान्तरम्।
(२) तिलानां भवनं क्षेत्रम् इति पाठान्तरम्।

## यथामुखसम्मुखस्य दर्शनः खः ॥ ६ ॥

यथामुखशब्दात् सम्मुखशब्दाच्च षष्ठीसमर्थाद्दर्शन इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। दृश्यतेऽस्मिन्निति दर्शनः, आदर्शादिः प्रतिबिम्बाश्रय उच्यते। निपातनात्सादृश्येऽव्ययीभावः-मुखस्य सदृशम् यथामुखम्। यथामुखं दर्शनः यथामुखीनः। सर्वस्य मुखस्य दर्शनः सम्मुखीनः॥

## तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ७ ॥

तदिति द्वितीया समर्थविभक्तिः। व्याप्नोतीति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। सर्वादेः प्रातिपदिकात् पथिन् अङ्ग कर्मन् पत्र पात्र इत्येवमन्ताद् द्वितीयासमर्थाद् व्याप्नोतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गीणस्तापः। सर्वकर्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीण ओदनः॥

## आप्रपदं प्राप्नोति ॥ ८ ॥

प्रपदमिति पादस्याग्रमुच्यते, आङ् मर्यादायाम्, तयोरव्ययीभावः। आप्रपदशब्दात्तदिति द्वितीयासमर्थात् प्राप्नोतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। आप्रपदं प्राप्नोति आप्रपदीनः पटः। शरीरेण सम्बद्धस्यापि पटस्य प्रमाणमाख्यायते॥

## अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥

अनुपदादिभ्यः शब्देभ्यस्तदिति द्वितीयासमर्थेभ्यो यथासंख्यं बद्धा भक्षयति नेय इत्येतेष्वर्थेषु खः प्रत्ययो भवति। अनुरायामे सादृश्ये वा। अनुपदं बद्धाऽनुपदीना उपानत्। पदप्रमाणेत्यर्थः। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयः प्रदक्षिणम्(१), अनयः प्रसव्यम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन् परशारैः पदानामसमावेशः सोऽयानयः। अयानयं नेयोऽयानयीनः शारः। फलकशिरःस्थित इत्यर्थः॥

## परोवरपरम्परपुत्रपौत्रमनुभवति ॥ १० ॥

परोवर परम्पर पुत्रपौत्र इत्येतेभ्यस्तदिति द्वितीयासमर्थेभ्योऽनुभवतीत्यस्मिन्नर्थे खः प्रत्ययो भवति। परोवरेति परस्योत्वं प्रत्ययसंनियोगेन निपात्यते(२)। परांश्चवरांश्चानुभवति परोवरीणः। परपरतराणां च परस्परभावो निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। परम्परशब्दो विनापि प्रत्ययेन दृश्यते—मन्त्रिपरम्परा मन्त्रं भिनत्तीति। तच्छब्दान्तरमेव द्रष्टव्यम्॥

---

यथामुख—षष्ठीसमर्थ यथामुख तथा सम्मुख शब्दों से 'दर्शन' ( प्रतिबिम्बदर्शनाधार ) अर्थ में ख प्रत्यय होता है।

तत्सर्वादेः—द्वितीयासमर्थ पथिन्शब्दान्त, अङ्गशब्दान्त, कर्मन्शब्दान्त, पत्रशब्दान्त तथा पात्रशब्दान्त सर्व शब्द से 'व्याप्नोति' ( व्याप्त करता है ) अर्थ में ख प्रत्यय होता है।

आप्रपदम्—द्वितीयासमर्थ आप्रपद शब्द से 'प्राप्नोति' ( प्राप्त करता है ) अर्थ में ख प्रत्यय होता है।

अनुपद—द्वितीयासमर्थ अनुपद शब्द से बद्ध अर्थ में, सर्वान्त शब्द से 'भक्षयति' ( खाता है ) अर्थ में और अयानय शब्द से नेय अर्थ में ख प्रत्यय होता है।

परोवर—द्वितीयासमर्थ परोवर, परम्पर, पुत्रपौत्र शब्दों से अनुभव अर्थ में ख प्रत्यय होता है।

---

( १ ) प्रदक्षिणगमनमित्यपि कुत्रचित्पाठ उपलभ्यते। परन्तु स न युक्तः, अयः प्रदक्षिणमिति प्रतीकमुपादाय प्रदक्षिणं गमनमित्यर्थं इति पदमञ्जर्यां विवृतत्वात्।

( २ ) परोवरेति परस्योत्वचनमिति पदमञ्जरीसम्मतः पाठः प्रतीयते।

## अवारपारात्यन्तानुकामं गामी ॥ ११ ॥

अवारपार अत्यन्त अनुकाम इत्येभ्यो द्वितीयासमर्थेभ्यो गामीत्येतस्मिन्नर्थे खः प्रत्ययो भवति। गमिष्यन्तीति गामी, भविष्यति गम्यादय इति। अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेधः—अवारपारं गामी अवारपारीणः। ॐविपरीताच्चॐ। पारावारीणः। विगृहीतादपीष्यते—अवारीणः। पारीणः। अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः। अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः॥

## समांसमां विजायते ॥ १२ ॥

समांसमामिति वीप्सायां सुबन्तसमुदायः प्रकृतिः। विजायते—गर्भं धारयतीति प्रत्ययार्थः। गर्भधारणेन सकलापि समा व्याप्यत इति अत्यन्तसंयोगे द्वितीया। समांसमां विजायते समांसमीना गौः। समांसमीना वडवा। ॐपूर्वपदे सुपोऽलुग्वक्तव्यःॐ। केचित्तु समायां समायां विजायत इति विगृह्णन्ति। गर्भमोचने तु विजनिर्वर्त्तत इत्याहुः। तेषां पूर्वपदे यलोपमात्रं निपात्यते, परिशिष्टस्यालुग्वक्तव्यः। ॐअनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यःॐ। समांसमां विजायते। समायां समायां विजायत इति वा॥

## अद्यश्वीनावष्टब्धे ॥ १३ ॥

विजायत इति वर्त्तते। अद्यश्वीन इति निपात्यते अवष्टब्धे विजने—आसन्ने प्रसवे। आविदूर्ये हि मूर्धन्यो विधीयते—अवाच्चालम्बनाविदूर्ययोरिति। अद्य वा श्वो वो विजायतेऽद्यश्वीना गौः। अद्यश्वीना वडवा। केचित्तु विजायत इति नानुवर्त्तते, अवष्टब्धमात्रे निपातनमित्याहुः। अद्यश्वीनं मरणम्। अद्यश्वीनो वियोग इति॥

## आगवीनः ॥ १४ ॥

आगवीन इति निपात्यते। आङ्पूर्वाद् गोशब्दाद्, आ तस्य गोः प्रतिपादनात् कर्मकारिणि खः प्रत्ययो निपात्यते। आगवीनः कर्मकरः, यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणाद्॥

## अनुग्वलंगामी ॥ १५ ॥

गोः पश्चाद् अनुगु। अनुगुशब्दादलंगामीत्यस्मिन्नर्थे खः प्रत्ययो भवति। अनुगु पर्याप्तं गच्छति अनुगवीनो गोपालकः॥

---

अवार—द्वितीयासमर्थ अवारपार, अत्यन्त तथा अनुकाम शब्दों से 'गामी' (जानेवाला है) अर्थ में ख प्रत्यय होता है।

विपरीताच्च—पारावार शब्द से भी उक्तार्थ में ख प्रत्यय अवगन्तव्य है।

समांसमाम्—द्वितीयान्त वीप्साद्विरुक्त 'समांसमाम्' शब्द से गर्भधारण अर्थ में ख प्रत्यय होता है।

पूर्वपदे—'समांसमाम्' में प्रथम समाम् की द्वितीया विभक्ति का अलुक् भी समझना चाहिए।

अनुत्पत्तौ—जब ख प्रत्यय नहीं होता है तो 'समायां समायाम्' में विकल्प से यलोप अवगन्तव्य है।

अद्यश्वीनावष्टब्धे—आसन्नप्रसव अर्थ में 'अद्यश्वीन' शब्द का निपातन होता है।

आगवीनः—'कर्मकर' अर्थ में आङ्पूर्वक गो शब्द से ख प्रत्यय का निपातन होता है।

अनुग्वलम्—'अलंगामी' अर्थ में अनुपूर्वक गोशब्द से ख प्रत्यय का निपातन होता है।

## अध्वनो यत्खौ ॥ १६ ॥

तदिति द्वितीयासमर्थविभक्तिरनुवर्त्तते । अलंगामीति च प्रत्ययार्थः । अध्वन्-शब्दाद् द्वितीयासमर्थादलंगामीत्येतस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः । 'अध्वानमलंगामी अध्वन्यः । अध्वनीनः । ये चाभावकर्मणोः, आत्माध्वनौ ख इति प्रकृतिभावः ॥

## अभ्यमित्राच्छ च ॥ १७ ॥

अभ्यमित्रशब्दाद् द्वितीयासमर्थादलंगामीत्यस्मिन्नर्थे छः प्रत्ययो भवति, चकाराद्यत्खौ च । अभ्यमित्रमलंगामी अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ॥

## गोष्ठात् खञ् भूतपूर्वे ॥ १८ ॥

गावस्तिष्ठन्त्यत्रेति गोष्ठम्, गोष्ठशब्देन सन्निहितगोसमूहो देश उच्यते, भूतपूर्वग्रहणं तस्यैव विशेषणम् । गोष्ठशब्दाद् भूतपूर्वोपाधिकात् स्वार्थे खः प्रत्ययो भवति । गोष्ठो भूतपूर्वः गोष्ठीनो देशः(१) । भूतपूर्वग्रहणं किम् ? गोष्ठो वर्त्तते ॥

## अश्वस्यैकाहगमः ॥ १९ ॥

निर्देशादेव समर्थविभक्तिः । अश्वशब्दात् षष्ठीसमर्थादेकाहगम इत्येतदर्थे खञ् प्रत्ययो भवति । एकाहेन गम्यत इत्येकाहगमः । अश्वस्यैकाहगमोऽध्वा आश्वीनः । आश्वीनानि शतं पतित्वा ॥

## शालीनकौपीने अधृष्टाकार्ययोः ॥ २० ॥

शालीनकौपीनशब्दौ निपात्येते यथासंख्यमधृष्टे अकार्ये चाऽभिधेये । अधृष्टोऽप्रगल्भः । अकार्यमकरणार्हं विरुद्धम्(२) । शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ यथाकथञ्चिद् व्युत्पादयितव्यौ । शालाप्रवेशनमर्हति कूपावतारमर्हति इत्यर्थयोः खञ् प्रत्यय उत्तरपद-लोपश्च निपात्यते—शालीनो जडः, कौपीनं पापम् ॥

## व्रातेन जीवति ॥ २१ ॥

निर्देशादेव तृतीया समर्थविभक्तिः । व्रातशब्दात्तृतीयासमर्थाज्जीवतीत्यस्मिन्नर्थे खञ् प्रत्ययो भवति । नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः । उत्सेधः शरीरम्, तदायासेन ये जीवन्ति ते उत्सेधजीविनः, तेषां कर्म व्रातम्, तेन व्रातेन जीवति व्रातीनः, तेषामेव व्रातानामन्यतम उच्यते । यस्त्वन्यस्तदीयेन जीवति तत्र नेष्यते ॥

---

अध्वनः—द्वितीयासमर्थ अध्वन् शब्द से 'अलंगामी' अर्थ में विकल्प से यत् तथा ख प्रत्यय होते हैं ।

अभ्यमित्रात्—द्वितीयासमर्थ अभ्यमित्र शब्द से 'अलंगामी' अर्थ में विकल्प से छ प्रत्यय, यत् प्रत्यय तथा ख प्रत्यय होते हैं ।

गोष्ठात्—भूतपूर्वोपाधिक गोष्ठ शब्द से स्वार्थ में खञ् प्रत्यय होता है ।

अश्वस्य—षष्ठीसमर्थ अश्व शब्द से 'एकाहगम' ( एक दिन में जाने योग्य मार्ग-दैर्घ्य ) अर्थ में खञ् प्रत्यय होता है ।

शालीन—अधृष्ट ( = नम्र ) तथा अकार्य ( नहीं करने योग्य ) अर्थों में क्रमशः शालीन तथा कौपीन शब्द निपातित होते हैं ।

व्रातेन—तृतीयासमर्थ व्रात शब्द से 'जीवति' अर्थ में खञ् प्रत्यय होता है ।

---

( १ ) लिङ्गविशिष्टपरिभाषया गोष्ठीशब्दस्यापि ग्रहणमिति अधिकं कुत्रचित् ।

( २ ) विरूपमिति पाठान्तरम् ।

## साप्तपदीनं सख्यम् ॥ २२ ॥

साप्तपदीनमिति निपात्यते सख्येऽभिधेये। सप्तभिः पदैरवाप्यते साप्तपदीनम्। सख्यं जनाः साप्तपदीनमाहुः। कथं साप्तपदीनः सखा, साप्तपदीनं मित्रमिति? यदा गुणप्रधानः साप्तपदीनशब्दः सखिभावे तत्कर्मणि च वर्त्तते तदा सख्यशब्देन समानाधिकरणो भवति, यदा तु लक्षणया वर्त्तते तदा पुरुषेण समानाधिकरणो भवति ॥

## हैयङ्गवीनं संज्ञायाम् ॥ २३ ॥

हैयङ्गवीनं निपात्यते संज्ञायां विषये। ह्योगोदोहस्य हियङ्ग्वादेशः, तस्य विकारे खञ् प्रत्ययो भवति संज्ञायाम्। ह्योगोदोहस्य विकारः हैयङ्गवीनम्। घृतस्य संज्ञा। तेनेह न भवति–ह्योगोदोहस्य विकार उदश्वित् ॥

## तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ २४ ॥

तस्येति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासंख्यं पाकमूलयोरर्थयोः कुणब् जाहज् इत्येतौ प्रत्ययौ भवतः। पीलूनां पाकः पीलुकुणः। कर्कन्धुकुणः। कर्णादिभ्यः–कर्णस्य मूलं कर्णजाहम्। पीलु। कर्कन्धु। शमी। करीर। कवल। बदर। अश्वत्थ। खदिर। पील्वादिः ॥ कर्ण। अक्षि। नख। मुख। मख। केश। पाद। गुल्फ। भ्रूभङ्ग। दन्त। ओष्ठ। पृष्ठ। अङ्गुष्ठ। कर्णादिः ॥

## पक्षात्तिः ॥ २५ ॥

तस्येत्येव। तस्येति षष्ठीसमर्थात्पक्षशब्दाद् मूलेऽभिधेये तिः प्रत्ययो भवति। मूलग्रहणमनुवर्त्तते न पाकग्रहणम्, एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्त्तत इति। पक्षस्य मूलं पक्षतिः प्रतिपत् ॥

## तेन वित्तश्चुञ्चुप्चणपौ ॥ २६ ॥

तेनेति तृतीयासमर्थाद्वित्त इत्येतस्मिन्नर्थे चुञ्चुप् चणप् इत्येतौ प्रत्ययौ भवतः। वित्तः प्रतीतो ज्ञात इत्यर्थः। विद्यया वित्तः विद्याचुञ्चुः। केशचणः ॥

## विनञ्भ्यां नानाञौ नसह ॥ २७ ॥

वि नञ् इत्येताभ्यां यथासंख्यं ना नाञ् इत्येतौ प्रत्ययौ भवतः। नसहेति प्रकृतिविशेषणम्। असहार्थे पृथग्भावे वर्त्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ प्रत्ययौ भवतः। विना। नाना ॥

## वेः शालच्छङ्कटचौ ॥ २८ ॥

विशब्दाच् शालच् शङ्कटज् इत्येतौ प्रत्ययौ भवतः। साधनक्रियावचनादुपसर्गात्स्वार्थे-

---

साप्तपदीनम्—मैत्री अर्थ में सप्तपद शब्द से खञ् प्रत्यय निपातित होता है।

हैयङ्गवीनम्—संज्ञा के प्रतिपादनार्थ ह्योगोदोह शब्द के स्थान में हियङ्गु आदेश तथा उससे खञ् प्रत्यय होता है।

तस्य—षष्ठीसमर्थ पीलु आदि तथा कर्ण आदि शब्दों से क्रमशः पाक तथा मूल अर्थ में कुणप् तथा जाहज् प्रत्यय होते हैं।

पक्षात्तिः—षष्ठीसमर्थ पक्ष शब्द से मूल अर्थ में ति प्रत्यय होता है।

तेन—तृतीयासमर्थ प्रातिपदिक से वित्त अर्थ में चुञ्चुप् तथा चणप् प्रत्यय होते हैं।

विनञ्भ्याम्—पृथग्भावार्थक वि तथा नञ् शब्दों से स्वार्थ में ना तथा नाञ् प्रत्यय होते हैं।

वेः—धात्वर्थविशिष्टसाधनार्थक वि शब्द से स्वार्थ में शालच् तथा शङ्कटच् प्रत्यय होते हैं।

प्रत्ययौ भवतः। विगते श्रृङ्गे विशाले, विशङ्कटे। तद्योगाद्गौरपि विशालो, विशङ्कट इत्युच्यते। परमार्थतस्तु गुणशब्दा एते यथाकथञ्चिद् व्युत्पाद्यन्ते, नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः॥

## संप्रोदश्च कटच्॥ २९॥

सम् प्र उत् इत्येतेभ्यः कटच् प्रत्ययो भवति चकाराद्वेश्च। संकटम्। उत्कटम्। विकटम्। ॐकटचप्रकरणेऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्ॐ। अलाबूनां रजोऽलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्। ॐगोष्ठादयः स्थानादिषु पशुनामादिभ्य उपसंख्यानम्ॐ। गवां स्थानं गोगोष्ठम्। महिषीगोष्ठम्। ॐसंघाते कटच् वक्तव्यःॐ। अवीनां संघातः अविकटम्। ॐविस्तारे पटच् वक्तव्यःॐ। अविपटम्। ॐद्वित्वे गोयुगच्ॐ। उष्ट्रगोयुगम्। अश्वगोयुगम्। ॐप्रकृत्यर्थस्य षट्त्वे षड्गवच्ॐ। हस्तिषड्गवम्। अश्वषड्गवम्। ॐविकारे स्नेहने तैलच्ॐ(१)। एरण्डतैलम्। इङ्गुदीतैलम्। तिलतैलम्। ॐभवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौॐ। इक्षुशाकटम्। मूलकशाकटम्। इक्षुशाकिनम्। मूलकशाकिनम्॥

## अवात् कुटारच्च॥ ३०॥

अवशब्दात् कुटारच् प्रत्ययो भवति चकारात् कटच् च। अवकुटारम्। अवकटम्॥

## नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः॥ ३१॥

अवादित्येव। नमनं नतम्। नासिकायाः संबन्धिनि नतेऽभिधेये टीटच् नाटच् भ्रटच् इत्येते प्रत्यया भवन्ति संज्ञायां विषये। नासिकाया नतम् अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिकापि, पुरुषोपि च तथोच्यते। अवटीटः। अवनाटः। अवभ्रट इति॥

## नेर्बिडज्बिरीसचौ॥ ३२॥

---

संप्रोदश्च—धात्वर्थविशिष्टसाधनार्थक सन्, प्र, उत् तथा वि शब्दों से कटच् प्रत्यय होता है।

कटच्—रजस् अर्थ में अलाबू, तिल, उमा तथा भङ्गा शब्दों से भी कटच् प्रत्यय समझना चाहिए।

गोष्ठादयः—पशुवाचक शब्दों से स्थान अर्थ में गोष्ठ आदि प्रत्यय अवगन्तव्य हैं।

संघाते—संघात अर्थ में पशुवाचक शब्द से कटच् प्रत्यय अवगन्तव्य है।

विस्तारे—विस्तार अर्थ में पशुवाचक शब्द से पटच् प्रत्यय समझना चाहिए।

द्वित्वे—द्वित्व अर्थ में पशुवाचक शब्द से गोयुगच् प्रत्यय समझना चाहिए।

प्रकृत्यर्थस्य—प्रकृत्यर्थ में षट्त्वसंख्याविशिष्टत्व के वाच्य होने पर षड्गवच् प्रत्यय होता है।

विकारे—स्नेहनात्मक विकार अर्थ में तैलच् प्रत्यय होता है।

भवने—क्षेत्रात्मक उत्पत्तिस्थान के वाच्य होने पर इक्षु आदि शब्दों से शाकट तथा शाकिन प्रत्यय होते हैं।

अवात्—अव शब्द से विकल्प से कुटारच् तथा कटच् प्रत्यय होते हैं।

नते—नासिका सम्बन्धी नमन के अर्थ में अव शब्द से टीटच्, नाटच् तथा भ्रटच् प्रत्यय होते हैं संज्ञाविषय में।

नेर्बिडच्—नासिकासम्बन्धी नमन के वाच्य होने पर निशब्द से बिडच् तथा बिरीसच् प्रत्यय होते हैं संज्ञाविषय में।

---

(१) स्नेहे तैलच् इति पाठः पदमञ्जरीसम्मतः।

नते नासिकाया इत्यनुवर्त्तते, संज्ञायामिति च। निशब्दान्नासिकाया नतेऽभिधेये बिडच् बिरीसज् इत्येतौ प्रत्ययौ भवतः। निबिडम्। निबिरीसम्। तद्योगान्नासिकापि, पुरुषोपि च निबिडो निबिरीसः। कथं निबिडाः केशाः, निबिडं वस्त्रम्? उपमानाद्भविष्यति(१)॥

## इनच्पिटच्चिकचि च॥ ३३॥

नेरिति वर्त्तते, नते नासिकाया इति च। निशब्दान्नासिकाया नतेऽभिधेये इनच् पिटच इत्येतौ प्रत्ययौ भवतस्तत्संनियोगेन च निशब्दस्य यथासंख्यं चिक चि इत्येतावादेशौ भवतः। चिक्किनः। चिपिटः। *ककारः प्रत्ययो वक्तव्यश्चिकच प्रकृत्यादेशः*। चिक्कः। तथा चोक्तम्—इनच्पिटच्काश्चिकचिचिकादेशाश्च वक्तव्या इति। *क्लिन्नस्य चिल् पिल्लश्चास्य चक्षुषी*। क्लिन्नस्य चिल् पिल् इत्येतावादेशौ भवतो लश्च प्रत्ययोऽस्य चक्षुषी इत्येतस्मिन्नर्थे। क्लिन्ने अस्य चक्षुषी चिल्लः। पिल्लः। *चुलादेशो वक्तव्यः*। चुल्लः। अस्येत्यनेन नार्थः। चक्षुषोरेवाभिधाने प्रत्यय इष्यते। क्लिन्ने चक्षुषी चिल्ले। पिल्ले। चुल्ले। तद्योगात्तु पुरुषस्तथोच्यते॥

## उपाधिभ्यां त्यकन्नासन्नारूढयोः॥ ३४॥

उप अधि इत्येताभ्यां यथासंख्यमासन्नारूढयोर्वर्त्तमानाभ्यां स्वार्थे त्यकन् प्रत्ययो भवति। संज्ञाधिकाराच्च नियतविषयमासन्नारूढं गम्यते। पर्वतस्यासन्नमुपत्यका। तस्यैवारूढमधित्यका। प्रत्ययस्थात्कात्पूर्वस्येतीत्वमत्र न भवति, संज्ञाधिकारादेव(२)॥

## कर्मणि घटोऽठच्॥ ३५॥

निर्देशादेव समर्थविभक्तिः। कर्मन्शब्दात् सप्तमीसमर्थाद् घट इत्येतस्मिन्नर्थेऽठच् प्रत्ययो भवति। घटत इति घटः(३)। कर्मणि घटते कर्मठः पुरुषः॥

## तदस्य संजातं तारकादिभ्य इतच्॥ ३६॥

तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्योऽस्येति षष्ठ्यर्थे इतच् प्रत्ययो भवति। संजातग्रहणं प्रकृतिविशेषणम्। तारकाः संजाता अस्य नभसस्तारकितं नभः। पुष्पितो वृक्षः। तारका। पुष्प। मुकुल। कण्टक। पिपासा। सुख। दुःख। ऋजीष।

---

इनच्—नासिकाऽवनमन अर्थ में निशब्द से क्रमशः इनच् तथा पिटच् प्रत्यय होते हैं और इन दोनों प्रत्ययों के सन्नियोग में नि के स्थान में क्रमशः चिक तथा चि आदेश भी हो जाते हैं।

ककारः—नासिकाऽवनमन अर्थ में निशब्द से क प्रत्यय तथा नि के स्थान में चिक् आदेश भी अवगन्तव्य हैं।

क्लिन्नस्य—द्वित्वविशिष्ट चक्षु के वाच्य होने पर क्लिन्न शब्द से ल प्रत्यय तथा विकल्प से क्लिन्न के स्थान में चिल् तथा पिल् आदेश अवगन्तव्य हैं।

चुलादेशः—क्लिन्न के स्थान में लप्रत्यय के सन्नियोग में चुल् आदेश भी समझना चाहिए।

उपाधिभ्याम्—आसन्न तथा आरूढ़ अर्थ में क्रमशः वर्तमान उप तथा अधि शब्दों से स्वार्थ में त्यकन् प्रत्यय होता है।

कर्मणि—सप्तमीसमर्थ कर्मन् शब्द से घट अर्थ में अठच् प्रत्यय होता है।

तदस्य—प्रथमासमर्थ तारका आदि शब्दों से 'अस्य सञ्जातम्' (इसमें उपस्थित हो गया है) अर्थ में इतच् प्रत्यय होता है।

---

(१) भविष्यतीत्यस्याग्रे घनत्वसाधर्म्यादित्यधिकं कुत्रचित्।

(२) नहि कृते इत्वे संज्ञा प्रतीयते इत्यधिकं कुत्रचित्।

(३) घट इत्यस्याग्रे पचाद्यजित्यधिकं बहुषु पुस्तकेषु। परं त्वयमपपाठः, पदमञ्जर्यां दर्शनात्।

कुड्मल । सूचक । रोग । विचार । व्याधि । निष्क्रमण । मूत्र । पुरीष । किसलय । कुसुम । प्रचार । तन्द्रा । वेग । पुष्प । श्रद्धा । उत्कण्ठ । भर । द्रोह । गर्भादप्राणिनि(१) । तारकादिराकृतिगणः ॥

## प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ३७ ॥

तदस्येत्यनुवर्त्तते । तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे द्वयसच् दघ्नच् मात्रच् इत्येते प्रत्यया भवन्ति यत्तत्प्रथमासमर्थं प्रमाणं चेत्तद्भवति । ऊरुः प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् । जानुद्वयसम् । जानुदघ्नम् । जानुमात्रम् ।

"प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम" ।

ऊरुद्वयसमुदकम् । ऊरुदघ्नमुदकम् । मात्रच् पुनरविशेषेण—प्रस्थमात्रमित्यपि भवति । ※प्रमाणे लो वक्तव्यः※ । प्रमाणशब्दा इति ये प्रसिद्धास्तेभ्य उत्पन्नस्य प्रत्ययस्य लुग्भवति । शमः प्रमाणमस्य शमः । दिष्टिः । वितस्तिः । ※द्विगोर्नित्यम्※ । द्वौ शमौ प्रमाणस्य द्विशमः । त्रिसमः । द्विवितस्तिः । नित्यग्रहणं किम् ? संशये श्राविणं(२) वचयति । तत्रापि द्विगोर्लुगेव यथा स्यात् । द्वे दिष्टी स्यातां वा न वा द्विदिष्टिः । ※डट् स्तामे वक्तव्यः※ । पञ्चदश स्तोमः । पञ्चदशी रात्रिः । टित्वान्ङीप् । ※शन्शतोर्डिनिर्वक्तव्यः※ । पञ्चदशिनोर्द्धमासाः । त्रिंशिनो मासाः । ※विंशतेश्चेति वक्तव्यम्※ । विंशिनोऽङ्गिरसः । ※प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः※ । शममात्रम् । दिष्टिमात्रम् । प्रस्थमात्रम् । कुडवमात्रम् । पञ्चमात्रम् । दशमात्रा गावः । ※वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम्※ । तावदेव तावद्द्वयसम् । तावन्मात्रम् । एतावद्द्वयसम् । एतावन्मात्रम् । यावद्द्वयसम् । यावन्मात्रम् ॥

## पुरुषहस्तिभ्यामण् च ॥ ३८ ॥

---

प्रमाणे—प्रथमासमर्थ प्रमाणवृत्ती शब्दों से षष्ठ्यर्थ में द्वयसच्, दघ्नच् तथा मात्रच् प्रत्यय होते हैं ।

प्रमाणे लो—प्रमाणार्थक शब्दों के रूप में प्रसिद्ध शब्दों से उत्पन्न प्रत्ययों का 'ल' ( लोप ) हो जाता है ।

द्विगोः—प्रमाणार्थक द्विगुसमस्त शब्द से विहित प्रत्यय का 'ल' नित्य होता है ।

डट्—स्तोम अर्थ में संख्यावाचक शब्द से डट् प्रत्यय समझना चाहिए ।

शन्—शन्शब्दान्त तथा शतशब्दान्त संख्यावाचक शब्दों से डिनि प्रत्यय समझना चाहिए ।

विंशतेः—विंशति शब्द से भी डिनि प्रत्यय का विधान अवगन्तव्य है ।

प्रमाण—प्रमाण, परिमाण तथा संख्या के संशय होने पर तत्तद्वाचक शब्दों से मात्रच् प्रत्यय समझना चाहिए ।

वत्वन्तात्—वत्वन्त शब्दों से स्वार्थ में द्वयसच् तथा मात्रच् प्रत्यय बहुल करते होते हैं ।

पुरुष—प्रमाणोपाधिक प्रथमासमर्थ पुरुष तथा हस्तिन् शब्दों से षष्ठ्यर्थ में अण् प्रत्यय भी और द्वयसच् आदि पूर्वोक्त प्रत्यय भी होते हैं ।

---

( १ ) फल । उच्चार । स्तबक । पल्लव । खण्ड । धेनुष्या । अभ्र । अङ्गारक । अङ्कार । वर्णक । पुलक । कुवलय । शैवल । गर्व । तरङ्ग । कल्लोल । पण्डा । चन्द्र । स्तवक । मुद्रा । राग । कण्टक । हस्त । कर । सीमन्त । कर्दम । कज्जल । कलङ्क । कुतूहल । कन्दल । आन्दोल । अन्धकार । कोरक । अङ्कुर । रोमाञ्च । हर्ष । उत्कर्ष । क्षुधा । ज्वर । गोर । दोह । शाख । मुकुर । तिलक । बुभुक्षा । निद्रा । एते क्वचिदुपलभ्यन्ते शब्दाः ।

( २ ) श्रवणं श्रावः, कृत्यलुट इति घञ्, सोऽस्यास्तीति श्रावी, मात्रजित्यर्थः ।

# अथ पञ्चमाध्यायस्य तृतीयः पादः

## प्राग्दिशो विभक्तिः ॥ १ ॥

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्य इति वक्ष्यति । प्रागेतस्माद्दिक्संशब्दनाद्यानित ऊर्ध्वंक्रनुक्रमिष्यामो विभक्तिसंज्ञास्ते वेदितव्याः । वक्ष्यति—पञ्चम्यास्तसिल् । ततः । यतः । कुतः । तसिलादीनां विभक्तित्वे प्रयोजनं त्यदादिविधयः, इदमो विभक्तिस्वरश्च । इह । ऊडिदमिति विभक्त्युदात्तत्वं सिद्धं भवति । इतः परं स्वार्थिकाः प्रत्ययास्तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वाच्चोपयुज्यत इति निवृत्तम् । वावचनमनुवर्त्तत एव, तेन विकल्पेन तसिलादयो भवन्ति । कुतः । कस्मात् । कुत्र । कस्मिन्निति ॥

## किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ २ ॥

प्राग्दिश इत्येव । किमः सर्वनाम्नो बहुशब्दाच्च प्राग्दिशः प्रत्यया वेदितव्याः । सर्वनामत्वात् प्राप्ते ग्रहणे द्व्यादिपर्यदासः क्रियते । कुतः । कुत्र । यतः । यत्र । ततः । तत्र । बहुतः । बहुत्र । अद्व्यादिभ्य इति किम् ? द्वाभ्याम् , द्वयोः । प्रकृतिपरिसंख्यानं किमर्थम् ? वृक्षात्, वृक्षे । प्राग्दिश इत्येव, वैयाकरणपाशः । सर्वनामत्वादेव सिद्धे किमो ग्रहणं द्व्यादिपर्युदासाद् । *बहुग्रहणे संख्याग्रहणम्* । इह न भवति—बहोः सूपात् । बहौ सूप इति ॥

## इदम इश् ॥ ३ ॥

प्राग्दिश इत्येव । इदम इश् इत्ययमादेशो भवति प्राग्दिशीयेषु परतः । शकारः सर्वादेशार्थः । इह ॥

## एतेतौ रथोः ॥ ४ ॥

रेफथकारादौ प्राग्दिशीये प्रत्यये परत इदम एतेतावादेशौ भवतः । इशोऽपवादः । रेफेऽकार उच्चारणार्थः । इदमो र्हिल्-एतर्हि । इदमस्थमुः-इत्थम् ॥

## एतदोऽश् ॥ ५ ॥

प्राग्दिश इत्येव । एतदः प्राग्दिशीये परतोऽशित्यमादेशो भवति । शकारः सर्वादेशार्थः । अतः । अत्र । एतद इति योगविभागः कर्त्तव्यः-एतदो रथोः परत एत इत इत्येतावादेशौ भवतः । एतर्हि । इत्थम् । रेफादिरनद्यतने र्हिलन्यतरस्यामिति विद्यत एव । थमुप्रत्ययः पुनरेतद उपसंख्येयः ॥

---

प्राग्दिशः—'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यः' सूत्र से पूर्व सूत्र तक विहित प्रत्ययादि की विभक्ति संज्ञा समझनी चाहिए ।

किं सर्वनाम—किम् , द्व्यादिभिन्न सर्वनाम तथा बहु शब्दों से ही 'दिक्शब्देभ्यः' से पूर्व प्रत्ययों का विधान समझना चाहिए ।

बहुग्रहणे—बहुशब्द से संख्यावाचक बहुशब्द ही विवक्षित है ।

इदमः—प्राग्दिशीय प्रत्ययों के परे इदम् को इश् आदेश हो जाता है ।

एतेतौ—रकारादि तथा थकारादि प्राग्दिशीय प्रत्ययों के परे इदम् शब्द को एत तथा इत आदेश हो जाते हैं ।

एतदोऽश्—प्राग्दिशीय प्रत्ययों के परे एतद् शब्द को अश् आदेश हो जाता है ।

## सर्वस्य सोऽन्यतरस्यां दि ॥ ६ ॥

सर्वस्य स इत्ययमादेशो भवति प्राग्दिशीये दकारादौ प्रत्यये परतोऽन्यतरस्याम् । सर्वदा । सदा । प्राग्दिशीय इत्येव—सर्वं ददातीति सर्वदा ब्राह्मणी ॥

## पञ्चम्यास्तसिल् ॥ ७ ॥

पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यस्तसिलप्रत्ययो भवति । कुतः । यतः । ततः । बहुतः ॥

## तसेश्च ॥ ८ ॥

प्रतियोगे पञ्चम्यास्तसिः, अपादाने चाहीयरुहोरिति वक्ष्यति । तस्य तसेः किंसर्वनाम-बहुभ्यः परस्य तसिलादेशो भवति । कुत आगतः । यतः । ततः । बहुत आगतः । तसे-स्तसिल्वचनं स्वरार्थं विभक्त्यर्थं च ॥

## पर्यभिभ्यां च ॥ ९ ॥

परि अभि इत्येताभ्यां तसिल् प्रत्ययो भवति । सर्वोभयार्थे वर्तमानाभ्यां प्रत्यय इष्यते । परितः, सर्वत इत्यर्थः । अभितः, उभयत इत्यर्थः ॥

## सप्तम्यास्त्रल् ॥ १० ॥

किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति । कुत्र । यत्र । तत्र । बहुत्र ॥

## इदमो हः ॥ ११ ॥

इदमः सप्तम्यन्ताद्धः प्रत्ययो भवति । त्रलोऽपवादः । इह ॥

## किमोऽत् ॥ १२ ॥

किमः सप्तम्यन्तादत् प्रत्ययो भवति । त्रलोऽपवादः । क्व भोक्ष्यसे । क्वाध्येष्यसे । त्रल-मपि केचिदिच्छन्ति-कुत्र । तत् कथम् ? उत्तरसूत्राद्वावचनं पुरस्तादपकृष्यते ॥

## वा ह च च्छन्दसि ॥ १३ ॥

किमः सप्तम्यन्ताद्वा हः प्रत्ययो भवति छन्दसि विषये, यथाप्राप्तं च । क्व । कुह । कुत्र-चिदस्य सा दूरे, क्व ब्राह्मणस्य चाक्काः ॥

## इतराभ्योपि दृश्यन्ते ॥ १४ ॥

---

सर्वस्य—प्राग्दिशीय दकारादि प्रत्यय के परे सर्व शब्द को विकल्प से स आदेश हो जाता है ।

पञ्चम्याः—पञ्चम्यन्त किम् , सर्वनाम तथा बहु शब्दों से तल् प्रत्यय होता है ।

तसेश्च—किम् , सर्वनाम तथा बहु शब्दों से विहित तसि प्रत्यय के स्थान में तसिल् आदेश हो जाता है ।

पर्यभिभ्याम्—सर्व तथा उभय के अर्थ में वर्तमान परि तथा अभि शब्दों से भी तसिल् प्रत्यय होता है ।

सप्तम्याः—सप्तम्यन्त किम् , सर्वनाम तथा बहु शब्दों से त्रल् प्रत्यय होता है ।

इदमोहः—सप्तम्यन्त इदम् शब्द से ह प्रत्यय होता हैं ।

किमोऽत्—सप्तम्यन्त किम् शब्द से अत् प्रत्यय होता है ।

वा ह—सप्तम्यन्त किम् शब्द से विकल्प से ह प्रत्यय होता है छन्द में ।

इतराभ्योऽपि—अन्यविभक्त्यन्त उक्त शब्दों से भी आदि शब्दों के योग में तसिल् आदि प्रत्यय देखे जाते हैं ।

सप्तमीपञ्चम्यपेक्षमितरत्वम्। इतराभ्यो विभक्तिभ्यस्तसिलादयो दृश्यन्ते। दृशिग्रहणं प्रायिकविध्यर्थम्, तेन भवदादिभिर्योग एवैतद्विधानम्। के पुनर्भवदादयः? भवान् दीर्घायुरायुष्मान् देवानांप्रिय इति। स भवान्। ततो भवान्। तत्र भवान्। तं भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्। तेन भवता। ततो भवता। तत्र भवता। तस्मै भवतः। ततो भवतः। तत्र भवतः। तस्मिन् भवति। ततो भवति। तत्र भवति। एवं दीर्घायुष्प्रभृतिष्वप्युदाहार्यम्॥

## सर्वैकान्यकिंयत्तदः काले दा॥ १५

सप्तम्या इति वर्त्तते, न त्वितराभ्य इति। सर्वादिभ्यः प्रातिपदिकेभ्यो दा प्रत्ययो भवति। त्रलोऽपवादः। सर्वस्मिन् काले सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा। काल इति किम्? सर्वत्र देशे॥

## इदमो र्हिल्॥ १६॥

सप्तम्या इति वर्त्तते, काल इति च। इदमः सप्तम्यन्तात्काले वर्त्तमानात् र्हिल् प्रत्ययो भवति। हस्यापवादः। लकारः स्वरार्थः। अस्मिन् काले एतर्हि। काल इत्येव—इह देशे॥

## अधुना॥ १७॥

अधुनेति निपात्यते। इदमोऽश्भावोऽधुना च प्रत्ययः। अस्मिन् काले अधुना॥

## दानीं च॥ १८॥

इदमः सप्तम्यन्तात्काले वर्त्तमानाद्दानीं प्रत्ययो भवति। अस्मिन् काले इदानीम्॥

## तदो दा च॥ १९॥

तदः सप्तम्यन्तात्काले वर्त्तमानाद् दा प्रत्ययो भवति, चकाराद्दानीं च। तस्मिन् काले तदा, तदानीम्। तदो दावचनमनर्थकम्, विहितत्वात्॥

## तयोर्दार्हिलौ च च्छन्दसि॥ २०॥

तयोरिति प्रातिपदिकनिर्देशः। तयोरिदमः तदश्च यथासंख्यं दार्हिलौ प्रत्ययौ भवतश्छन्दसि विषये, चकाराद्यथाप्राप्तं च। इदावत्सरीयः। इदं तर्हि। इदानीम्। तदानीम्॥

## अनद्यतने र्हिलन्यतरस्याम्॥ २१॥

छन्दसीति न स्वर्यते। सामान्येन विधानम्। किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने

---

सर्वैकान्य—सप्तम्यन्त सर्व, एक, अन्य, किम्, यद् तथा तद् शब्दों से दा प्रत्यय होता है काल अर्थ में।

इदमो र्हिल्—सप्तम्यन्त इदम् शब्द से काल अर्थ में र्हिल् प्रत्यय होता है।

अधुना—सप्तम्यन्त इदम् शब्द से काल-अर्थ में अधुना प्रत्यय तथा इदम् को अश् आदेश का निपातन होता है।

दानीं च—सप्तम्यन्त इदम् शब्द से काल अर्थ में दानीम् प्रत्यय होता है।

तदो दा च—सप्तम्यन्त तद् शब्द से काल अर्थ में विकल्प से दा तथा दानीम् प्रत्यय होते हैं।

तयोः—सप्तम्यन्त इदम् तथा तद् शब्दों से वेद से क्रमशः दा तथा र्हिल् प्रत्यय होते हैं विकल्प से।

अनद्यतने—सप्तम्यन्त किम्, सर्वनाम तथा बहु शब्दों से अनद्यतन काल में विकल्प से र्हिल् प्रत्यय होता है।

कालविशेषे वर्त्तमानेभ्यो र्हिल् प्रत्ययो भवत्यन्यतरस्याम् । कर्हि । कदा । यर्हि । यदा । तर्हि । तदा ॥

## सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥

सप्तम्या इति काल इति च वर्त्तते । सद्यःप्रभृतयः शब्दा निपात्यन्ते । प्रकृतिप्रत्यय आदेशः कालविशेष इति सर्वमेतन्निपातनाल्लभ्यते । समानस्य सभावो निपात्यते द्यश्च प्रत्ययः अहन्यभिधेये–समानेऽहनि सद्यः । पूर्वपूर्वतरयोः परभावो निपात्यते उदारी च प्रत्ययौ संवत्सरेऽभिधेये–पूर्वस्मिन् संवत्सरे परुत्, पूर्वतरे संवत्सरे परारि । इदम इशभावः समसण् प्रत्ययश्च निपात्यते संवत्सरेऽभिधेये–अस्मिन् संवत्सरे ऐषमः । परमादेद्यविः प्रत्ययोऽहनि–परस्मिन्नहनि परेद्यवि । इदमोऽशूभावो द्यश्च प्रत्ययोऽहनि–अस्मिन्नहनि अद्य । पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् प्रत्ययो निपात्यतेऽहन्यभिधेये–पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । अन्यतरस्मिन्नहनि अन्यतरेद्युः । इतरस्मिन्नहनि इतरेद्युः । अपरस्मिन्नहनि अपरेद्युः । अधरस्मिन्नहनि अधरेद्युः । उभयोरह्नोः उभयेद्युः । उत्तरस्मिन्नहनि उत्तरेद्युः । ॐद्युश्चोभयाद्वक्तव्यः ॐ । उभयद्युः ॥

## प्रकारवचने थाल् ॥ २३ ॥

किंसर्वनामबहुभ्योऽद्व्यादिभ्य इति वर्त्तते । सप्तम्या इति काल इति च निवृत्तम् । सामान्यस्य विशेषो भेदकः प्रकारः । प्रकृत्यर्थविशेषणं चैतत् । प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति । तेन प्रकारेण तथा । यथा । सर्वथा । जातीयरोऽपीदृशमेव लक्षणम् , स तु स्वभावात् प्रकारवति वर्त्तते, थाल्पुनः प्रकारमात्रे ॥

## इदमस्थमुः ॥ २४ ॥

इदंशब्दात्प्रकारवचने थमुः प्रत्ययो भवति । थालोऽपवादः । अनेन प्रकारेण इत्थम् । उकारो मकारपरित्राणार्थः ॥

## किमश्च ॥ २५ ॥

किंशब्दाद् प्रकारवचने थमुः प्रत्ययो भवति(१) । केन प्रकारेण कथम् ॥

## था हेतौ च च्छन्दसि ॥ २६ ॥

किंशब्दाद्धेतौ वर्त्तमानात्था प्रत्ययो भवति, चकारात्प्रकारवचने छन्दसि विषये । हेतौ तावत्–कथा ग्रामं न पृच्छसि । केन हेतुना न पृच्छसीत्यर्थः । प्रकारवचने–कथा देवा आसन् पुराविदः । विभक्तिसंज्ञायाः पूर्णोऽवधिः ॥

---

सद्यः—सप्तम्यन्त सर्वनाम से काल अर्थ में सद्यः, मरुत , परारि, ऐषम, परेद्यवि, अद्य, पूर्वेद्यु, अन्येद्यु, अन्यतरेद्यु, इतरेद्यु, अपरेद्यु, उयेमद्यु, उत्तरेद्यु शब्दों का निपातन है ।

द्युश्चोभयात्—उभय शब्द से द्यु प्रत्यय भी समझना चाहिए ।

प्रकार—किम्, द्व्यादिभिन्न सर्वनाम तथा बहु शब्दों से प्रकार अर्थ में थाल् प्रत्यय होता है ।

इदमः—प्रकार अर्थ में इदम् शब्द से थमु प्रत्यय होता है ।

किमश्च—प्रकार अर्थ में किम् शब्द से भी थमु प्रत्यय होता है ।

था हेतो—हेत्वर्थ तथा प्रकार अर्थ में भी किम् शब्द से वेद में था प्रत्यय होता है ।

---

( १ ) थालोऽपवादः । योगविभाग उत्तरार्थः । इत्यधिकं पुस्तकान्तरे ।

## दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २७ ॥

दिशां शब्दाः दिक्शब्दाः। दिक्शब्देभ्यो दिग्देशकालेषु वर्त्तमानेभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्योऽस्तातिः प्रत्ययो भवति स्वार्थे। यथासंख्यमत्र नेष्यते। पुरस्ताद्वसति। पुरस्तादागतः। पुरस्ताद्रमणीयम्। अधस्ताद्वसति। अधस्तादागतः। अधस्ताद्रमणीयम्। दिक्शब्देभ्य इति किम्? ऐन्द्र्यां दिशि वसति। सप्तमीपञ्चमीप्रथमाभ्य इति किम्? पूर्वं ग्रामं गतः। दिग्देशकालेष्विति किम्? पूर्वस्मिन् गुरौ वसति। इकारस्तकारपरित्राणार्थः॥

## दक्षिणोत्तराभ्यामतसुच् ॥ २८ ॥

दक्षिणोत्तराभ्यां दिग्देशकालेषु वर्तमानाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां स्वार्थेऽतसुच् प्रत्ययो भवति। अस्तातेरपवादः। दक्षिणाशब्दः काले न सम्भवतीति दिग्देशवृत्तिः परिगृह्यते। दक्षिणतो वसति। दक्षिणत आगतः। दक्षिणतो रमणीयम्। उत्तरतो वसति। उत्तरत आगतः। उत्तरतो रमणीयम्। अकारो विशेषणार्थः षष्ठ्यतसर्थप्रत्ययेनेति॥

## विभाषा परावराभ्याम् ॥ २९ ॥

परावरशब्दाभ्यां विभाषा अतसुच्प्रत्ययो भवति अस्तातेरर्थे। परतो वसति। परत आगतः। परतो रमणीयम्। परस्ताद्वसति। परस्तादागतः। परस्ताद्रमणीयम्। अवरतो वसति। अवरत आगतः। अवरतो रमणीयम्। अवस्ताद्वसति। अवस्तादागतः। अवस्ताद्रमणीयम्॥

## अञ्चेर्लुक् ॥ ३० ॥

अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्यास्तातिप्रत्ययस्य लुग् भवति। प्राच्यां दिशि वसति। लुक्तद्धितलुकीति स्त्रीप्रत्ययोऽपि निवर्त्तते। प्राग्वसति। प्रागागतः। प्राग्रमणीयम्(१)॥

## उपर्युपरिष्टात् ॥ ३१ ॥

उपरि उपरिष्टात् इत्येतौ शब्दौ निपात्येते अस्तातेरर्थे। ऊर्ध्वस्योपभावः, रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते। ऊर्ध्वायां दिशि वसति उपरि वसति। उपर्यागतः। उपरि रमणीयम्। उपरिष्टाद्वसति। उपरिष्टादागतः। उपरिष्टाद्रमणीयम्॥

## पश्चात् ॥ ३२ ॥

पश्चादित्ययं शब्दो निपात्यते अस्तातेरर्थे। अपरस्य पश्चभाव आतिश्च प्रत्ययः।

---

दिक्शब्देभ्यः—दिक्, देश तथा काल अर्थों में वर्तमान सप्तम्यन्त, पञ्चम्यन्त तथा प्रथमान्त दिगर्थव्यवहृत शब्दों से अस्ताति प्रत्यय होता है।

दक्षिणोत्तराभ्याम्—दिक्, देश तथा काल अर्थों में वर्त्तमान दक्षिणा तथा उत्तरा शब्दों से अतसुच् प्रत्यय होता है।

विभाषा—पर तथा अवर शब्दों से विकल्प से दिक्, देश तथा काल अर्थों में अतसुच् प्रत्यय होता है।

अञ्चेर्लुक्—अञ्चशब्दान्त दिगर्थव्यवहृत शब्दों से विहित अस्ताति प्रत्यय का लुक् हो जाता है।

उपर्युपरिष्टात्—अस्तात्यर्थ में उपरि तथा उपरिष्टात् ये दोनों शब्द निपातित हैं।

पश्चात्—अस्तात्यर्थ में पश्चात् शब्द का निपातन है।

---

(१) प्रत्यग्वसति। प्रत्यगागतः। प्रत्यग्रमणीयम्। इति पुस्तकान्तरेऽधिकम्।

अपरस्यां दिशि वसति पश्चाद्दिशि वसति। पश्चादागतः। पश्चाद्रमणीयम्। ॐदिक्पूर्व-पदस्यापरस्य पश्चभावो वक्तव्य आतिश्च प्रत्ययःॐ। दक्षिणपश्चात्। उत्तरपश्चात्। ॐअर्द्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यःॐ। दक्षिणपश्चार्द्धः। उत्तरपश्चार्द्धः। ॐविनापि पूर्वपदेन पश्चभावो वक्तव्यःॐ। पश्चार्द्धः॥

## पश्च पश्चा च च्छन्दसि॥ ३३॥

पश्चपश्चाशब्दौ निपात्येते छन्दसि विषये अस्तातेरर्थे। चकारात् पश्चादित्यपि भवति। अपरस्य पश्चभावोऽकाराकारौ च प्रत्ययौ निपात्येते। परो व्याघ्रो जायते पश्च सिंहः। पश्चा सिंहः। पश्चात्सिंहः॥

## उत्तराधरदक्षिणादातिः॥ ३४॥

उत्तराधरदक्षिणशब्देभ्य आतिः प्रत्ययो भवति अस्तातेरर्थे। उत्तरस्यां दिशि वसति उत्तराद्वसति। उत्तरादागतः। उत्तराद्रमणीयम्। अधराद्वसति। अधरादागतः। अधराद्रमणीयम्। दक्षिणाद्वसति। दक्षिणादागतः। दक्षिणाद्रमणीयम्॥

## एनबन्यतरस्यामदूरेऽपञ्चम्याः॥ ३५॥

उत्तराधरदक्षिणशब्देभ्य एनप् प्रत्ययो भवत्यन्यतरस्यामस्तातेरर्थे अदूरे चेदवधिमानवधेर्भवति। विभक्तित्रये प्रकृतेऽपञ्चम्या इति पञ्चमी पर्युदस्यते, तेनायं सप्तमीप्रथमान्ताद्विज्ञायते प्रत्ययः। उत्तरेण वसति। उत्तराद्वसति। उत्तरतो वसति। उत्तरेण रमणीयम्। उत्तराद्रमणीयम्। उत्तरतो रमणीयम्। अधरेण वसति। अधराद्वसति। अधस्ताद्वसति। अधरेण रमणीयम्। अधराद्रमणीयम्। अधस्ताद्रमणीयम्। दक्षिणेन वसति। दक्षिणाद्वसति। दक्षिणतो वसति। दक्षिणेन रमणीयम्। अपञ्चम्या इति किम्? उत्तरादागतः। अपञ्चम्या इति प्रागसेः, असिप्रत्ययस्तु पञ्चम्यन्तादपि भवति। केचिदिहोत्तरादिग्रहणं नानुवर्त्तयन्ति, दिक्शब्दमात्रात् प्रत्ययं मन्यते—पूर्वेण ग्रामम्, अपरेण ग्रामम्॥

## दक्षिणादाच्॥ ३६॥

अदूर इति न स्वर्यते, अपञ्चम्या इति वर्त्तते। दक्षिणशब्दादाच् प्रत्ययो भवति अस्तातेरर्थे। दक्षिणा वसति। दक्षिणा रमणीयम्। अपञ्चम्या इत्येव—दक्षिणत आगतः। चकारो विशेषणार्थः—अञ्चूत्तरपदाजाहियुक्त इति॥

## आहि च दूरे॥ ३७॥

---

**दिक्पूर्व**—दिग्वाचकपूर्वपदक अपर शब्द को पश्च आदेश तथा उससे आति प्रत्यय हो जाता है।

**अर्धोत्तर**—दिक्पूर्वपदक एवम् अर्धोत्तरपदक अपर शब्द को पश्च आदेश समझना चाहिए।

**विनापि**—अर्धोत्तरपदक अपर शब्द के स्थान में दिक्पूर्वपदत्व के अभाव में भी पश्च आदेश समझना चाहिए।

**पश्च**—छन्दोविषय के अस्तात्यर्थ में पश्च तथा पश्चा शब्दों का निपातन है।

**उत्तराधर**—अस्तात्यर्थ में उत्तर, अधर तथा दक्षिण शब्दों से आति प्रत्यय होता है।

**एनबन्य**—सप्तम्यन्त तथा प्रथमान्त उत्तर, अधर तथा दक्षिण शब्दों से अस्तात्यर्थ में विकल्प से एनप् प्रत्यय होता है यदि अवधिमान् पदार्थ दूरवर्त्ती न हो।

**दक्षिणादाच्**—सप्तम्यन्त तथा प्रथमान्त दक्षिण शब्द से अस्तात्यर्थ में आच् प्रत्यय होता है।

**आहि**—अस्तात्यर्थ में सप्तम्यन्त तथा प्रथमान्त दक्षिण शब्द से विकल्प से आहि प्रत्यय भी होता है यदि अवधिमान् पदार्थ दूरवर्ती हो।

दक्षिणशब्दादाहिः प्रत्ययो भवति अस्तातेरर्थे, चकारादाच्, दूरे चेदवधिमानवधेर्भवति। दक्षिणाहि वसति। दक्षिणा वसति। दक्षिणाहि रमणीयम्। दक्षिणा रमणीयम्। दूर इति किम्? दक्षिणतो वसति। अपञ्चम्या इत्येव—दक्षिणत आगतः॥

## उत्तराच्च ॥ ३८ ॥

उत्तरशब्दादाजाही प्रत्ययौ भवतः अस्तातेरर्थे दूरे चेदवधिमानवधेर्भवति। उत्तरा वसति। उत्तराहि वसति। उत्तरा रमणीयम्। उत्तराहि रमणीयम्। दूर इत्येव—उत्तरेण प्रयाति। अपञ्चम्या इत्येव—उत्तरादागतः॥

## पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥ ३९ ॥

अपञ्चम्या इति निवृत्तम्। तिसृणां विभक्तीनामिह ग्रहणम्। पूर्वाधरावराणामसिः प्रत्ययो भवति अस्तातेरर्थे, तत्सन्नियोगेन चैषां यथासंख्यं पुर्, अध्, अव् इत्येते आदेशा भवन्ति। असीत्यविभक्तिको निर्देशः। पुरो वसति। पुर आगतः। पुरो रमणीयम्। अधो वसति। अध आगतः। अधो रमणीयम्। अवो वसति। अव आगतः। अवो रमणीयम्॥

## अस्ताति च ॥ ४० ॥

सप्तम्यन्तमेतत्। अस्तातिप्रत्यये परतः पूर्वादीनां यथासंख्यं पुरादय आदेशा भवन्ति। इदमेवादेशविधानं ज्ञापकमस्तातिरेभ्यो भवति, असिप्रत्ययस्येन न बाध्यत इति। पुरस्ताद्वसति। पुरस्तादागतः। पुरस्ताद्रमणीयम्। अधस्ताद्वसति। अधस्तादागतः। अधस्ताद्रमणीयम्॥

## विभाषाऽवरस्य ॥ ४१ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। अवरस्यास्तातौ परतो विभाषा अव् इत्ययमादेशो भवति। अवस्ताद्वसति। अवस्तादागतः। अवस्ताद्रमणीयम्। अवरस्ताद्वसति। अवरस्तादागतः। अवरस्ताद्रमणीयम्॥

## संख्याया विधार्थे धा ॥ ४२ ॥

संख्यावाचिभ्यः प्रातिपदिकेभ्यो विधार्थे वर्त्तमानेभ्यो धा प्रत्ययो भवति स्वार्थे। विधा प्रकारः सर्वक्रियाविषय एव गृह्यते। क्रियाप्रकारे वर्त्तमानायाः संख्याया धाप्रत्ययः। एकधा भुङ्क्ते। द्विधा गच्छति। त्रिधा। चतुर्द्धा। पञ्चधा॥

## अधिकरणविचाले च ॥ ४३ ॥

संख्याया इत्येव। अधिकरणं द्रव्यम्, तस्य विचालः संख्यान्तराऽऽपादनम्—एकस्याने-

---

उत्तराच्च—सप्तम्यन्त तथा प्रथमान्त उत्तर शब्द से भी अस्तात्यर्थ में आहि तथा आच् प्रत्यय होते हैं अवधिमान् पदार्थ के दूरस्थ होने पर।

पूर्वाधरावराणाम्—अस्तात्यर्थ में पूर्व, अधर तथा अवर शब्दों से असि प्रत्यय होता है और प्रत्यय के साथ-साथ प्रकृतियों के स्थान में क्रमशः पुर्, अध् तथा अव् आदेश भी हो जाते हैं।

अस्ताति—अस्ताति प्रत्यय के परे भी पूर्व, अधर तथा अवर के स्थान में क्रमशः पुर्, अध् तथा अव् आदेश हो जाते हैं।

विभाषा—अस्ताति प्रत्यय के परे अवर के स्थान में अव् आदेश विकल्प से होता है।

संख्यायाः—विधा (प्रकार) के अर्थ में वर्तमान संख्यावाचक शब्दों से धा प्रत्यय होता है।

अधिकरण—द्रव्यसंख्यापरिवर्तन के गम्यमान होने पर भी संख्यावाचक शब्दों से स्वार्थ में धा प्रत्यय होता है।

कीकरणमनेकस्य वा एकीकरणम्। अधिकरणविचाले गम्यमाने संख्यायाः स्वार्थे धाप्रत्ययो भवति। एकं राशिं पञ्चधा कुरु। अष्टधा कुरु। अनेकमेकधा कुरु॥

## एकाद्धो ध्यमुञन्यतरस्याम् ॥ ४४ ॥

एकशब्दात् परस्य धाप्रत्ययस्य ध्यमुञादेशो भवत्यन्तरस्याम्। एकधा राशिं कुरु। ऐकध्यं कुरु। एकधा भुङ्क्ते। ऐकध्यं भुङ्क्ते। धाप्रकरणादेव लब्धे पुनर्धाग्रहणं विधार्थे विहितस्यापि यथा स्यात्। अनन्तरस्यैवैतत् प्राप्नोति॥

## द्वित्र्योश्च धमुञ् ॥ ४५ ॥

धा इत्यनुवर्तते। द्वित्र्योः सम्बन्धिनोः धाप्रत्ययस्य विधार्थेऽधिकरणविचाले च विहितस्य धमुञादेशो भवत्यन्यतरस्याम्। चकारो विकल्पानुकर्षणार्थः। द्विधा। द्वैधम्। त्रिधा। त्रैधम् ॐधमुञन्तात्स्वार्थे डदर्शनम्ॐ। पथि द्वैधानि संश्रयन्ते। पथि त्रैधानि संश्रयन्ते॥

## एधाच्च ॥ ४६ ॥

द्वित्र्योः संबन्धिनोः धाप्रत्ययस्य एधाजादेशो भवत्यन्यतरस्याम्। चकारो विकल्पानुकर्षणार्थः। द्वेधा। द्वैधम्। द्विधा। त्रेधा। त्रैधम्। त्रिधा(१)॥

## याप्ये पाशप् ॥ ४७ ॥

याप्यः कुत्सित उच्यते। याप्ये वर्त्तमानात्प्रातिपदिकात्स्वार्थे पाशप् प्रत्ययो भवति। कुत्सितो वैयाकरणो वैयाकरणपाशः। याज्ञिकपाशः। यो व्याकरणशास्त्रे प्रवीणो दुःशीलस्तत्र कस्मान्न भवति? यस्य गुणस्य सद्भावाद् द्रव्ये शब्दनिवेशस्तत्कुत्सायां प्रत्ययः॥

## पूरणाद्भागे तीयादन् ॥ ४८ ॥

पूरणप्रत्ययो यस्तीयस्तदन्तात्प्रातिपदिकाद्भागे वर्त्तमानात्स्वार्थेऽन् प्रत्ययो भवति। स्वरार्थं वचनम्। द्वितीयो भागः द्वितीयः। तृतीयः। भाग इति किम्? द्वितीयम्, तृतीयम्। पूरणग्रहणमुत्तरार्थम्, न ह्यपूरणस्तीयोऽस्ति। मुखतीयादिरनर्थकः॥

## प्रागेकादशभ्योऽच्छन्दसि ॥ ४९ ॥

पूरणाद्भाग इत्येव। प्रागेकादशभ्यः संख्यावाचिभ्यः पूरणप्रत्ययान्तेभ्यो भागे वर्त्तमानेभ्यः स्वार्थेऽन् प्रत्ययो भवति अच्छन्दसि विषये। स्वरार्थं वचनम्। पञ्चमः। सप्तमः।

---

एकाद्धो—एक शब्द से विहित धा प्रत्यय के स्थान में विकल्प से ध्यमुञ् आदेश हो जाता है।

द्वित्र्योश्च—द्वि तथा त्रि शब्दों से विहित विधार्थक तथा संख्येयद्रव्यनिष्ठसंख्यापरिवर्तनसूचनार्थक धा के स्थान में विकल्प से धमुञ् आदेश हो जाता है।

धमुञन्तात्—धमुञन्त शब्दों से स्वार्थ में ड प्रत्यय समझना चाहिए।

एधाच्च—द्वि तथा त्रि शब्दों से विहित धा के स्थान में विकल्प से एधाच् आदेश भी हो जाता है।

याप्ये पाशप्—कुत्सितार्थ में वर्तमान प्रातिपदिक से स्वार्थ में पाशप् प्रत्यय होता है।

पूरणात्—भागोपाधिक पूरणार्थकतीयप्रत्ययान्त प्रातिपदिक से स्वार्थ में अन् प्रत्यय होता है।

प्रागेकादशभ्यः—एकादश से पूर्वसंख्या के वाचक पूरणप्रत्ययान्त प्रातिपदिकों से भागोपाधिक होने पर स्वार्थ में अन् प्रत्यय होता है छन्दोविषय में।

---

(१) योगविभागो यथासंख्यनिरासार्थः इत्यधिकं पुस्तकान्तरे।

नवमः। दशमः। प्रागेकादशभ्य इति किम्? एकादशः, द्वादशः। अच्छन्दसीति किम्? पञ्चममिन्द्रियस्यापाक्रामत्॥

## षष्ठाष्टमाभ्यां ञ च॥ ५०॥

भाग इति वर्त्तते, अच्छन्दसीति च। षष्ठाष्टमाभ्यां भागेऽभिधेयेऽच्छन्दसि विषये ञः प्रत्ययो भवति चकाराद्‌ञ्च। षष्ठो भागः षाष्ठः। षष्ठः। आष्टमः। अष्टमः॥

## मानपश्वङ्गयोः कन्लुकौ च॥ ५१॥

भाग इत्येव। षष्ठाष्टमाभ्यां यथासंख्यं कन्लुकौ च भवतो मानपश्वङ्गयोर्भागयोरभिधेययोः। षष्ठको भागो मानं चेत्तद्भवति। अष्टमो भागः पश्वङ्गं चेत्तद्भवति। कस्य लुक्? ञस्य लुक्, अनो वा। चकाराद्यथाप्राप्तं च। षाष्ठः। षष्ठः। आष्टमः। अष्टमः। मानपश्वङ्गयोरिति किम्? षाष्ठः, षष्ठः; आष्टमः, अष्टमः॥

## एकादाकिनिच्चासहाये॥ ५२॥

एकशब्दादसहायवाचिनः स्वार्थे आकिनिच् प्रत्ययो भवति, चकारात्कन्लुकौ च। आकिनिचः कनो वा लुग्विज्ञायते, स च विधानसामर्थ्यात्पक्षे भवति। एकाकी। एककः। एकः। असहायग्रहणं संख्याशब्दनिरासार्थम्, तदुपादाने हि द्विबह्वोर्न स्याद्—एकाकिनौ, एकाकिनः॥

## भूतपूर्वे चरट्॥ ५३॥

पूर्वं भूत इति विगृह्य सुप्सुपेति समासः। भूतपूर्वशब्दोऽतिक्रान्तकालवचनः। प्रकृतिविशेषणं चैतत्। भूतपूर्वत्वविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे चरट् प्रत्ययो भवति। आढ्यो भूतपूर्वः आढ्यचरः। सुकुमारचरः। टकारो ङीबर्थः। आढ्यचरी॥

## षष्ठ्या रूप्य च॥ ५४॥

षष्ठ्यन्तात्प्रातिपदिकाद्रूप्यः प्रत्ययो भवति चकाराच्चरट् च। षष्ठ्यन्तात्प्रत्ययविधानात् संप्रति भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणं न तु प्रकृत्यर्थविशेषणम्। देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः। देवदत्तचरः॥

## अतिशायने तमबिष्ठनौ॥ ५५॥

अतिशयनमतिशायनम्, प्रकर्षः, निपातनाद्दीर्घः। प्रकृत्यर्थविशेषणं चैतत्। अतिशायनविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे तमबिष्ठनौ प्रत्ययौ भवतः। प्रकृत्यर्थविशेषणं च स्वार्थिकानां द्योत्यं भवति। सर्वे इमे आढ्याः, अयमेषामतिशयेनाढ्यः आढ्यतमः। दर्शनीयतमः। सुकुमारतमः। सर्वे इमे पटवः, अयमेषामतिशयेन पटुः पटिष्ठः।

---

षष्ठाष्टमाभ्याम्—भागार्थक षष्ठ तथा अष्टम शब्दों से ञ प्रत्यय होता है वेद में।

मानपश्वङ्गयोः—षष्ठ तथा अष्टम शब्दों से कन् प्रत्यय तथा कन् एवम् पूर्वविहित ञ प्रत्ययों का लुक् भी हो जाता है यदि प्रत्ययान्त षष्ठ शब्द मान (तौल) के भाग का और अष्टम शब्द पश्वङ्ग के भाग का अर्थ रखते हों।

एकाद्—असहायवाचक एक शब्द से स्वार्थ में आकिनिच् प्रत्यय भी होता है और कन् प्रत्यय तथा उसका लुक् भी हो जाता है।

भूतपूर्वे—भूतपूर्वत्वविशिष्ट अर्थ में वर्तमान प्रातिपदिक से स्वार्थ में चरट् प्रत्यय होता है।

षष्ठ्या—षष्ठ्यन्त प्रातिपदिक से रूप्य प्रत्यय भी होता है और चरट् प्रत्यय भी।

अतिशायने—अतिशयत्वविशिष्ट अर्थ में वर्तमान प्रातिपदिक से स्वार्थ में तमप् तथा इष्ठन् प्रत्यय होते हैं।

लघिष्ठः। गरिष्ठः। यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्येव। देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे। युधिष्ठिरः श्रेष्ठतमः कुरूणामिति॥

## तिङश्च॥ ५६॥

तिङन्ताच्चातिशायने द्योत्ये तमप् प्रत्ययो भवति। ङ्याप्प्रातिपदिकादित्यधिकारात्तिङो न प्राप्नोतीति इदं वचनम्। सर्वे इमे पचन्तीति अयमेषामतिशयेन पचति पचतितमाम्। जल्पतितमाम्। इष्ठन्नोदाह्रियते, गुणवचने नियमितत्वात्॥

## द्विवचनविभज्योपपदे तरबीयसुनौ॥ ५७॥

द्वयोरर्थयोर्वचनं द्विवचनम्। विभक्तव्यो विभज्यः, निपातनाद्यत्। द्व्यर्थे विभज्ये चोपपदे प्रातिपदिकात्तिङन्ताच्चातिशायने तरबीयसुनौ प्रत्ययौ भवतः। तमविष्ठनोरपवादः। यथासंख्यमत्र नेष्यते। द्वाविमावाढ्यौ, अयमनयोरतिशयेनाढ्यः आढ्यतरः। सुकुमारतरः। पचतितराम्। जल्पतितराम्। ईयसुन् खल्वपि—द्वाविमौ पटू, अयमनयोरतिशयेन पटुः पटीयान्। लघीयान्। विभज्ये चोपपदे—माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। दर्शनीयतराः। पटीयांसः। लघीयांसः॥

## अजादी गुणवचनादेव॥ ५८॥

इष्ठनीयसुनावजादी सामान्येन विहितौ, तयोरयं विषयनियमः क्रियते—गुणवचनादेव भवतस्तौ नान्यस्मादिति। पटीयान्। लघीयान्। पटिष्ठः। लघिष्ठः। इह न भवतः—पाचकतरः, पाचकतम इति। एवकार इष्टतोऽवधारणार्थः—प्रत्ययनियमोऽयं न प्रकृतिनियम इति। पटुतरः। पटुतमः॥

## तुश्छन्दसि॥ ५९॥

तुरिति तृन्तृचोः सामान्येन ग्रहणम्। त्रन्ताच्छन्दसि विषये अजादी प्रत्ययौ भवतः। पूर्वेण गुणवचनादेवेति नियमे कृते छन्दसि प्रकृत्यन्तराण्यभ्यनुज्ञायन्ते, त्रन्तादप्यजादी भवत इति। आसुतिं करिष्ठः। दोहीयसी धेनुः। भस्याढे तद्धित इति पुंवद्भावे कृते तुरिष्ठेमेयस्स्विति तृचो निवृत्तिः॥

## प्रशस्यस्य श्रः॥ ६०॥

प्रशस्यशब्दस्य श्र इत्ययमादेशो भवति अजाद्योः प्रत्ययोः परतः। अजादी इति प्रकृतस्य सप्तमी विभक्तिर्विपरिणम्यते। ननु च प्रशस्यशब्दस्यागुणवचनत्वादजादी न संभवतः? एवं तर्हि आदेशविधानसामर्थ्यात्तद्विषयो नियमो न प्रवर्त्तते—अजादी गुणवचनादेवेति। एवमुत्तरेष्वपि योगेषु विज्ञेयम्। सर्वे इमे प्रशस्याः, अयमेषामतिशयेन प्रशस्यः श्रेष्ठः। उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्यः श्रेयान्। प्रकृत्यैकाजिति प्रकृतिभावाच्छ्रशब्दस्य टिलोपयस्येतिलोपौ न भवतः॥

---

तिङश्च—अतिशय के द्योत्य होने पर तिङन्त से भी तमप् प्रत्यय होता है।

द्विवचन—दो में एक के अतिशय (उत्कर्ष) के विवक्षित होने पर अतिशयाश्रयवाचक प्रातिपदिक तथा तिङन्त से तरप् और ईयसुन् प्रत्यय होते हैं।

अजादी—इष्ठन् तथा ईयसुन् प्रत्यय गुणवाचक शब्दों से ही विहित हो सकते हैं।

तुश्छन्दसि—तृन्प्रत्ययान्त तथा तृच्प्रत्ययान्त प्रातिपदिकों से इष्ठन् तथा ईयसुन् प्रत्यय होते हैं छन्दोविषय में।

प्रशस्यस्य श्रः—अजादि (=इष्ठन् तथा ईयसुन्) प्रत्ययों के परे प्रशस्य शब्द के स्थान में 'श्र' आदेश हो जाता है।

## ज्य(१) च ॥ ६१ ॥

प्रशस्यशब्दस्य ज्य इत्ययमादेशो भवति अजाद्योः प्रत्यययोः परतः। सर्वे इमे प्रशस्याः, अयमेषामतिशयेन प्रशस्यः ज्येष्ठः। द्वाविमौ प्रशस्यौ, इयमनयोरतिशयेन प्रशस्यः ज्यायान्। अयमस्माज्ज्यायान्। ज्यादादीयस इत्याकारः ॥

## वृद्धस्य च ॥ ६२ ॥

वृद्धशब्दस्य च ज्य इत्ययमादेशो भवत्यजाद्योः प्रत्यययोः परतः। तयोश्च सर्वं नियमाभावेन पूर्ववज्ज्ञायते। सर्वे इमे वृद्धाः, अयमेषामतिशयेन वृद्धः ज्येष्ठः। उभाविमौ वृद्धौ, अयमनयोरतिशयेन वृद्धः ज्यायान्। अयमस्माज्ज्यायान्। प्रियस्थिरेत्यादिना वृद्धशब्दस्य °वर्षादेशो विधीयते। वचनसामर्थ्यात् पक्षे सोऽपि भवति—वर्षिष्ठः, वर्षीयानिति ॥

## अन्तिकबाढयोर्नेदसाधौ ॥ ६३ ॥

अन्तिकबाढयोर्यथासंख्यं नेद साध इत्येतावादेशौ भवतोऽजाद्योः परतः। तयोश्च सर्वं पूर्ववद्विज्ञेयम्। निमित्तभूतयोर्यथासंख्यमत्र नेष्यते। सर्वाणीमान्यन्तिकानि, इदमेषामतिशयेनान्तिकम् नेदिष्ठम्। उभे इमे अन्तिके, इदमनयोरतिशयेनान्तिकम् नेदीयः। इदमस्मान्नेदीयः। सर्वे इमे बाढमधीयते, अयमेषामतिशयेन बाढमधीते साधिष्ठम्। उभाविमौ बाढमधीयाते, अयमनयोरतिशयेन बाढमधीते साधीयः। अयमस्मात् साधीयोऽधीते ॥

## युवाल्पयोः कनन्यतरस्याम् ॥ ६४ ॥

युवाल्पशब्दयोः कनित्ययमादेशो भवत्यन्यतरस्यामजाद्योः परतः। तयोश्च सर्वं पूर्ववज्ज्ञेयम्। सर्वे इमे युवानः, अयमेषामतिशयेन युवा कनिष्ठः। द्वाविमौ युवानौ, अयमनयोरतिशयेन युवा कनीयान्। यविष्ठः। यवीयान्। सर्वे इमेऽल्पाः, अयमेषामतिशयेनाल्पः कनिष्ठः। उभाविमावल्पौ, अयमनयोरतिशयेनाल्पः कनीयान्। अयमस्मात् कनीयान्, अल्पिष्ठः, अल्पीयानिति वा ॥

## विन्मतोर्लुक् ॥ ६५ ॥

विनो मतुपश्च लुग् भवति अजाद्योः प्रत्यययोः परतः। इदमेव वचनं ज्ञापकमजादिसद्भावस्य। सर्व इमे स्रग्विणः, अयमेषामतिशयेन स्रग्वी स्रजिष्टः। उभाविमौ स्रग्विणौ, अयमनयोरतिशयेन स्रग्वी स्रजीयान्। अयमस्मात स्रजीयान्। सर्वे इमे त्वग्वन्तः, अयमेषामतिशयेन त्वग्वान् त्वचिष्ठः। उभाविमौ त्वग्वन्तौ, अयमनयोरतिशयेन त्वग्ववान् त्वचीयान्। अयमस्मात्त्वचीयान् ॥

---

ज्य च—अजादि प्रत्ययों के परे प्रशस्य शब्द के स्थान में 'ज्य' आदेश भी हो जाता है।

वृद्धस्य—अजादि प्रत्ययों के परे वृद्ध शब्द के स्थान में भी 'ज्य' आदेश हो जाता है।

अन्तिक—अजादि प्रत्ययों के परे अन्तिक तथा बाढ शब्दों को क्रमशः नेद तथा साध आदेश हो जाते हैं।

युवाल्पयोः—अतिशयत्वविशिष्ट अर्थ में वर्तमान युवन् तथा अल्प शब्दों को अजादि प्रत्ययों के परे विकल्प से कन् आदेश हो जाता है।

विन्मतोर्लुप्—अजादि प्रत्ययों के परे विन् तथा मतुप् प्रत्ययों का लुक् हो जाता है।

---

(१) योगविभाग उत्तरार्थः (श्रीना०)।

## प्रशंसायां रूपप् ॥ ६६ ॥

प्रशंसा स्तुतिः, प्रकृत्यर्थस्य विशेषणं चैतत् । प्रशंसाविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् स्वार्थे रूपप् प्रत्ययो भवति । स्वार्थिकाः प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति । प्रशस्तो वैयाकरणो वैयाकरणरूपः । याज्ञिकरूपः । प्रकृत्यर्थस्य वैशिष्ट्ये प्रशंसा भवति । वृषलरूपोऽयं यः पलाण्डुना सुरां पिबति । चोररूपः, दस्युरूपः योऽक्षणोरप्यञ्जनमपहरेत् । तिङश्चेत्यनुवर्त्तते-पचतिरूपम् , पचतोरूपम् । क्रियाप्रधानमाख्यातम्, एका च क्रियेति रूपपप्रत्ययान्ताद् द्विवचनबहुवचने न भवतः । नपुंसकलिङ्गन्तु भवति, लोकाश्रयत्वाल्लिङ्गस्य ॥

## ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ६७ ॥

संपूर्णता पदार्थानां समाप्तिः । स्तोकेनासंपूर्णता ईषदसमाप्तिः । प्रकृत्यर्थविशेषणं चैतत् । ईषदसमाप्तिविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् कल्पप् देश्य देशीयर् इत्येते प्रत्यया भवन्ति । ईषदसमाप्तः पटुः पटुकल्पः । पटुदेश्यः । पटुदेशीयः । मृदुकल्पः । मृदुदेश्यः । मृदुदेशीयः । तिङश्चेत्यपि-पचतिकल्पम् , जल्पतिकल्पम् ॥

## विभाषा सुपो बहुच् पुरस्तात्तु ॥ ६८ ॥

ईषदसमाप्तिविशिष्टेऽर्थे वर्त्तमानात् सुबन्ताद्विभाषा बहुच् प्रत्ययो भवति, स च पुरस्तादेव भवति न परतः । चित्करणमन्तोदात्तार्थम् । ईषदसमाप्तः पटुः बहुपटुः । बहुमृदुः । बहुगुणा द्राक्षा । विभाषावचनात् कल्पबादयोऽपि भवन्ति । सुब्ग्रहणं तिङन्तान्मा भूदिति ॥

## प्रकारवचने जातीयर् ॥ ६९ ॥

सामान्यस्य भेदको विशेषः प्रकारः, तस्य वचने, प्रकृत्यर्थविशेषणं चैतत् । सुबन्तात्प्रकारविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् स्वार्थे जातीयर् प्रत्ययो भवति । प्रकारवति चायं प्रत्ययः । थाल्पुनः प्रकारमात्र एव भवति । पटुप्रकारः पटुजातीयः । मृदुजातीयः । दर्शनीयजातीयः ॥

## प्रागिवात्कः ॥ ७० ॥

इवे प्रतिकृताविति वक्ष्यति । प्रागेतस्मादिवसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः कप्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति-अज्ञात इति । अश्वकः । गर्दभकः । तिङन्तादयं प्रत्ययो नेष्यते, अकजिष्यते । तिङश्चेत्यनुवृत्तमुत्तरसूत्रेणैव सम्बन्धनीयम् ॥

## अव्ययसर्वनाम्नामकच् प्राक् टेः ॥ ७१ ॥

तिङश्चेत्येव । अव्ययानां सर्वनाम्नां च प्रागिवीयेष्वर्थेष्वकच्प्रत्ययो भवति, स च प्राक्

---

प्रशंसायाम्—प्रशंसाविशिष्ट अर्थ में वर्तमान प्रतिपदिक से स्वार्थ में रूपप् प्रत्यय होता है ।

ईषदसमाप्तौ—थोड़ी सी कमी ( ईषदसमाप्ति ) से सम्पन्न अर्थ में वर्तमान प्रातिपदिकों से कल्पप् , देश्य तथा देशीयर् प्रत्यय होते हैं ।

विभाषा—थोड़ी-सी कमी से विशिष्ट अर्थ में वर्तमान सुबन्त से विकल्प से बहुच् प्रत्यय होता है परन्तु यह प्रत्यय प्रकृति के पूर्व ही स्थान पाता है ।

प्रकारवचने—प्रकारविशिष्ट अर्थ में वर्तमान सुबन्त से स्वार्थ में जातीयर् प्रत्यय होता है ।

प्रागिवात्कः—"इवे प्रतिकृतौ" सूत्र से पूर्व तक 'क' प्रत्यय का अधिकार समझना चाहिए ।

अव्यय—अव्यय तथा सर्वनामों से 'प्रागिवीय' ( इवे प्रतिकृतौ सूत्र से पूर्व निर्दिष्ट ) अर्थों में अकच्-प्रत्यय होता है और प्रत्यय प्रकृतिगत 'टि' से पूर्वस्थानापन्न होता है ।

टेः, न परतः। कस्यापवादः। उच्चकैः। नीचकैः। शनकैः। सर्वनाम्नः खल्वपि-सर्वके। विश्वके। उभयके। प्रातिपदिकात्सुप इति द्वयमिहानुवर्त्तते, तत्राभिधानतो व्यवस्था भवति—क्वचित् प्रातिपदिकस्य प्राक् टेः प्रत्ययो भवति, क्वचित् सुबन्तस्य टेः प्राक् प्रत्ययो भवति। युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोः इत्यादौ प्रातिपदिकस्य। त्वयका, मयका, त्वयकि, मयकि इत्यादौ सुबन्तस्य। ॐअकच्प्रकरणे तूष्णीमः काम् प्रत्ययो वक्तव्यः॥। स च मित्त्वादन्त्यादचः परो भवति–तूष्णीकामास्ते, तूष्णीकां तिष्ठति। ॐशीले को मलोपश्च वक्तव्यः॥। तूष्णींशीलः तूष्णीकः। तिङश्चेति प्रकृतमत्र संबध्यते-पचतकि, जल्पतकि॥

## कस्य च दः॥ ७२॥

ककारान्तस्य प्रातिपदिकस्याकच्सन्नियोगेन दकारादेशो भवति। चकारः सन्नियोगार्थः। सामर्थ्याच्चाव्ययग्रहणमनुवर्त्तते, न सर्वनामग्रहणम्, ककारान्तस्य सर्वनाम्नोऽसंभवात्। धिक्-धकित्। हिरुक्-हिरकुत्। पृथक्-पृथकत्॥

## अज्ञाते॥ ७३॥

अज्ञातविशेषोऽज्ञातः। अज्ञातत्वोपाधिकेऽर्थे वर्त्तमानात् प्रातिपदिकात्तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययो भवति। स्वेन रूपेण ज्ञाते पदार्थे विशेषरूपेणाज्ञाते प्रत्ययविधानमेतत्। कस्यायमश्व इति स्वस्वामिसम्बन्धेनाज्ञातेऽश्वे प्रत्ययः-अश्वकः। गर्दभकः। उष्ट्रकः। एवमन्यत्रापि यथायोगमज्ञातता विज्ञेया। उच्चकैः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि॥

## कुत्सिते॥ ७४॥

कुत्सितो गर्हितो निन्दितः। प्रकृत्यर्थविशेषणं चैतत्। कुत्सितत्वोपाधिकेऽर्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे यथाविहितं प्रत्ययो भवति। कुत्सितोऽश्वः अश्वकः। उष्ट्रकः। गर्दभकः। उच्चकैः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि॥

## संज्ञायां कन्॥ ७५॥

कुत्सित इत्येव। कुत्सितत्वोपाधिकेऽर्थे वर्त्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति प्रत्ययान्तेन चेत्संज्ञा गम्यते। कस्यापवादः। शूद्रकः। धारकः। पूर्णकः॥

---

अकच्प्रकरणे—अकच् प्रत्यय के प्रकरण में तूष्णीम् शब्द से काम् प्रत्यय का विधान समझना चाहिए।

शीले—शील अर्थ में तुष्णीम् शब्द से क प्रत्यय तथा अन्त्य मकार का लोप भी अवगन्तव्य है।

कस्य च—अकच् प्रत्यय होने से ककारान्त प्रातिपदिक के ककार के स्थान में दकार आदेश हो जाता है।

अज्ञाते—सामान्यतया ज्ञात एवम् विशेष रूप में अज्ञात अर्थ में वर्तमान प्रातिपदिक तथा तिङन्त से यथाविहित प्रत्यय होते हैं।

कुत्सिते—कुत्सितार्थ में वर्तमान प्रातिपदिक स्वार्थ में यथाविहित प्रत्यय होते हैं।

संज्ञायाम्—कुत्सितार्थ में वर्तमान प्रातिपदिक से कन् प्रत्यय होता है यदि प्रत्ययान्त संज्ञावाचक हो।

## अनुकम्पायाम् ॥ ७६ ॥

कारुण्येनाभ्युपपत्तिः परस्यानुकम्पा । तस्यां गम्यमानायां सुबन्तात्तिङन्ताच्च यथाविहितं प्रत्ययो भवति । पुत्रकः । वत्सकः । दुर्बलकः । बुभुक्षितकः(१) । विश्वसितकि । स्वपितकि ॥

## नीतौ च तद्युक्तात् ॥ ७७ ॥

सामदानादिरुपायो नीतिः । नीतौ च गम्यमानायां तद्युक्तादनुकम्पायुक्ताद्यथाविहितं प्रत्ययो भवति । हन्त ते धानकाः । हन्त ते तिलकाः । एकहि । अद्धकि । अनुकम्प्यमानो दानेनाराधयति । पूर्वेण(२) प्रत्यासत्त्यानुकम्पासंबन्धादनुकम्प्यमानादेव प्रत्ययो विहितः, संप्रति व्यवहितादपि यथा स्यादिति वचनम् ॥

## बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८ ॥

अनुकम्पायामिति नीतौ च तद्युक्तादिति च वर्त्तते । बह्वचः प्रातिपदिकात् मनुष्यनामधेयाद्वा ठच् प्रत्ययो भवति अनुकम्पायां गम्यमानायां नीतौ च । देविकः । देवदत्तकः । यज्ञिकः । यज्ञदत्तकः । बह्वच इति किम् ? दत्तकः, गुप्तयः । मनुष्यनाम्न इति किम् ? भद्रबाहुकः, भद्रबाहुकः ॥

## घनिलचौ च ॥ ७९ ॥

अनुकम्पायामित्यादि सर्वमनुवर्त्तते । पूर्वेण ठचि विकल्पेन प्राप्ते वचनम् । बह्वचो मनुष्यनाम्नो घन् इलच् इत्येतौ प्रत्ययौ भवतः, चकाराद्यथाप्राप्तञ्च । देवियः । देविलः । देविकः । देवदत्तकः । यज्ञियः । यज्ञिलः । यज्ञकः । यज्ञदत्तकः ॥

## प्राचामुपादेरडज्वुचौ च ॥ ८० ॥

पूर्ववत् सर्वमनुवर्त्तते । उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् बह्वचो मनुष्यनाम्नोऽडच् वुच् प्रत्ययौ भवतः, चकाराद् घनिलचौ प्रत्ययौ च भवतः, ठच्च वा । उपडः । उपकः । उपियः । उपिलः । उपिकः । उपेन्द्रदत्तकः । प्राचांग्रहणं पूजार्थम् । वेत्येव हि वर्त्तते ॥

---

अनुकम्पायाम्—अनुकम्पा के गम्यमान होने पर सुबन्त तथा तिङन्त से यथाविहित प्रत्यय होते हैं ।

नीतौ च—सामादिप्रयोगात्मक नीति के गम्यमान होने पर परम्पर या अनुकम्पायुक्त-पदार्थवाचक शब्दों से भी यथाविहित प्रत्यय होते हैं ।

बह्वचो—अनुकम्पा तथा नीति के गम्यमान होने पर अनेकाच् तथा मनुष्यवाचक प्रातिपदिकों से विकल्प से ठच् प्रत्यय होता है ।

घनिलचौ—अनुकम्पा तथा नीति के गम्यमान होने पर अनेकाच् तथा मनुष्यवाचक प्रातिपदिकों से घन् , इलच् तथा ठच् प्रत्यय होते हैं।

प्राचाम्—उपशब्द हो आदि में जिनके ऐसे अनेकाच् एवम् मनुष्यवाचक प्रातिपदिकों से अडच् , वुच् , घन् , इलच् तथा ठच् प्रत्यय होते हैं प्राच्य आचार्यों के मतमें ( =विकल्प से )।

---

(१) ज्वरितक इत्यधिकं पुस्तकान्तरे ।

(२) पूर्वसूत्रे यस्मात्प्रत्ययः स एव अनुकम्प्यः, इह तु धानादयो न साक्षात् अनुकम्प्याः अपि तु पुत्रादिरेवेति पूर्वेण धानादिभ्योऽप्राप्तेः प्रकृतसूत्रारम्भः । तथा च पुत्रादिद्वारा धानादीनामप्यनुकम्प्यत्वात् भवति प्रत्यय इत्याशयः ( श्रीना० )।

## जातिनाम्नः कन् ॥ ८१ ॥

बह्वच इति नानुवर्त्तते। सामान्येन विधानम्। जातिशब्दो यो(१)मनुष्यनामधेयो व्याघ्र सिंह इत्येवमादिः, तस्मादनुकम्पायां नीतौ च कन् प्रत्ययो भवति। व्याघ्रकः। सिंहकः। शरभकः। वावचनानुवृत्तेर्यथा(२)दर्शनमन्योऽपि भवति—व्याघ्रिलः, सिंहिलः। नामग्रहणं स्वरूपनिवृत्त्यर्थम् ॥

## अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥

कनित्यनुवर्त्तते, मनुष्यनाम्न इति च। अजिनशब्दान्तात् प्रातिपदिकान्मनुष्यनाम्नोऽनुकम्पायां कन् प्रत्ययो भवति तस्य चोत्तरपदलोपः। व्याघ्राजिनो नाम कश्चिन्मनुष्यः, सोऽनुकम्पितः व्याघ्रकः। सिंहकः ॥

## ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥

लोप इत्यनुवर्त्तते। अस्मिन् प्रकरणे यष्ठोऽजादिश्च प्रत्ययस्तस्मिन् परतः प्रकृतेर्द्वितीयादच ऊर्ध्वं यच्छब्दरूपं तस्य लोपो भवति। ऊर्ध्वग्रहणं सर्वलोपार्थम्। अनुकम्पितो देवदत्तः देविकः, देवियः, देविलः। यज्ञिकः। यज्ञियः। यज्ञिलः। उपडः। उपकः। उपियः। उपिलः। उपिकः। ठग्रहणमुको द्वितीयत्वे कविधानार्थम्। अजादिलक्षणे हि माथितिकादिवत् प्रसङ्गः। वायुदत्तः। वायुकः। पितृदत्तः। पितृकः। ॐचतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यःॐ। अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिकः, बृहस्पतियः, बृहस्पतिलः। ॐअनजादौ विभाषा लोपो वक्तव्यःॐ। देवदत्तकः। देवकः। यज्ञदत्तकः। यज्ञकः। ॐलोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यःॐ। दत्तिकः। दत्तियः। दत्तकः। ॐविनाऽपि प्रत्येन पूर्वोत्तरपदयोर्विभाषा लोपो वक्तव्यःॐ। देवदत्तः, दत्तः, देव इति वा। ॐउवर्णाल्ल(३) इलस्य चॐ। भानुदत्तः, भानुलः; वसुदत्तः, वसुलः।

---

जातिनाम्नः—जात्यन्तरविशिष्ट-पदार्थ-वाचक के रूप में प्रसिद्ध व्याघ्र आदि शब्द यदि मनुष्य के नाम के रूप में प्रयुक्त हों तो उनसे अनुकम्पा और नीति के गम्यमान होने पर कन् प्रत्यय होता है।

अजिनान्त—अजिनशब्दान्त मनुष्यवाचक प्रातिपदिक से अनुकम्पा के गम्यमान होने पर कन् प्रत्यय भी होता है और 'अजिन' पद का लोप भी हो जाता है।

ठाजादावूर्ध्वम्—इस प्रकरण में विहित अनुकम्पार्थक तथा नीत्यर्थक ठ एवन् अजादि प्रत्ययों के परे प्रकृति के द्वितीय स्वरसे उत्तर अंश का लोप हो जाता है।

चतुर्थादचः—चतुर्थ अच् से उत्तरवर्ती भाग का लोप समझना चाहिए।

अनजादौ—अजादिप्रत्ययभिन्न प्रत्ययों के परे भी प्रकृति के द्वितीय स्वर से अग्रिम भाग का विकल्प से लोप समझना चाहिए।

लोपः पूर्व—ढ, अजादि तथा अनजादि प्रत्ययों के परे प्रकृति के पूर्वपद का भी लोप समझना चाहिए।

विनाऽपि—किसी प्रत्यय के परे न होने पर भी विकल्प से पूर्व तथा उत्तर पदों का लोप समझना चाहिए।

उवर्णाल्ल—उवर्णान्त शब्द से विहित इल प्रत्यय के इकार का लोप हो जाता है।

---

(१) जात्यन्तरविशिष्टपदार्थवाचकत्वेन ये शब्दाः प्रसिद्धाः सन्तो यदृच्छया मनुष्येषु नामत्वेन प्रयुक्तास्त एवास्य सूत्रस्य उदाहरणम् इति ध्येयम्। (श्रीना०)।

(२) यथासंभवमिति पाठान्तरम्।

(३) उवर्णान्ताद्विहितस्य इलप्रत्ययस्य लोप इति तदर्थः। लोपश्च आदेः परस्येति नियमात् इकारस्यैव इति लकारोऽवशिष्यते एवेति बोध्यम्। (श्रीना०)।

चतुर्थादनजादौ च लोपः पूर्वपदस्य च।
अप्रत्यये तथैवेष्ट उवर्णाद्ल इलस्य च॥

*द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम्*। लहोडः। लहिकः। कहोडः। कहिकः। *एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः*। वागाशीः वाचिकः। स्रुचिकः। त्वचिकः। कथं षडङ्गुलिदत्तः षडिक इति? षषष्ठाजादिवचनात् सिद्धम्॥

## शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्॥ ८४॥

शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतस्तृतीयादच ऊर्ध्वस्य लोपो भवति। पूर्वस्यायमपवादः। अनुकम्पितः 'शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः। सुपरिकः, सुपरियः, सुपरिलः। विशालिकः, विशालियः, विशालिलः। वरुणिकः, वरुणियः, वरुणिलः। अर्यमिकः, अर्यमियः, अर्यमिलः। *शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनामिति वक्तव्यम्*। शेवलेन्द्रदत्तः सुपर्याशीर्दत्तः शेवलिकः, सुपरिक इति यथा स्यात्, शेवलविकः, सुपर्यिक इति मा भूत्॥

## अल्पे॥ ८५॥

परिमाणापचये अल्पशब्दः, प्रकृतिविशेषणं चैतत्। अल्पत्वविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकाद्यथाविहितं प्रत्ययो भवति। अल्पं तैलं तैलकम्। घृतकम्। सर्वकम्। विश्वकम्। उच्चकैः। नीचकैः। पचतकि। जल्पतकि॥

## ह्रस्वे॥ ८६॥

ह्रस्वत्वविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकाद् यथाविहितं प्रत्ययो भवति। दीर्घप्रतियोगी ह्रस्वः। ह्रस्वो वृक्षो वृक्षकः। प्लक्षकः। स्तम्भकः॥

## संज्ञायां कन्॥ ८७॥

ह्रस्व इत्येव। ह्रस्वत्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् प्रत्ययो भवति। पूर्वस्यायमपवादः। वंशकः। वेणुकः। दण्डकः॥

## कुटीशमीशुण्डाभ्यो रः॥ ८८॥

ह्रस्व इत्येव। संज्ञाग्रहणं नानुवर्त्तते। सामान्येन विधानम्। कुटीशमीशुण्डाभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः। स्वार्थिकत्वेऽपि पुँल्लिङ्गता लोकाश्रयत्वाल्लिङ्गस्य॥

---

**द्वितीयादचो**—द्वितीय अच् से अग्रिम प्रकृत्यंश के लोप प्रसङ्ग में ज्ञातव्य है कि यदि वह द्वितीय अच् सन्ध्यक्षर (ए, ऐ, ओ, औ) हो तो द्वितीयाच् सहित अग्रिम अंश का लोप हो जाता है।

**एकाक्षर**—जिस प्रकृति का पूर्वपद एकाच् हो उसके पूर्वपद का लोप समझना चाहिए।

**शेवलसुपरि**—शेवल आदि मनुष्यनामभूत शब्दों के तृतीय अच् से उत्तरांश का ठ तथा अजादि प्रत्ययों के परे लोप हो जाता है।

**शेवलादीनाम्**—यदि शेवल आदि शब्दों का अन्य शब्दों के साथ (स्वर-) सन्धि न हुई हो तभी तृतीय अच् से ऊर्ध्वभाग का लोप समझना चाहिए।

**अल्पे**—अल्पत्वविशिष्टार्थ में वर्तमान प्रातिपदिक से यथाविहित प्रत्यय होते हैं।

**ह्रस्वे**—ह्रस्वत्वविशिष्ट अर्थ में वर्तमान प्रातिपदिक से यथाविहित प्रत्यय होते हैं।

**संज्ञायाम्**—ह्रस्वत्वनिमित्तक संज्ञा के प्रत्यायनार्थ प्रातिपदिक से कन् प्रत्यय होता है।

**कुटीशमी**—कुटी, शमी तथा शुण्डा शब्दों से ह्रस्वार्थद्योतन के लिए र प्रत्यय होता है।

## कुत्वा डुपच् ॥ ८९ ॥

ह्रस्व इत्येव। कुतूशब्दाद् ह्रस्वत्वे द्योत्ये डुपच्प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कुतूः कुतुपम्, चर्म्ममयं स्नेहभाजनमुच्यते। कुतूरित्यावपनस्याख्या॥

## कासूगोणीभ्यां ष्टरच् ॥ ९० ॥

ह्रस्व इत्येव। कासूगोणीशब्दाभ्यां ह्रस्वत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। कस्यापवादः। षकारो ङीषर्थः। ह्रस्वा कासूः कासूतरी। गोणीतरी। कासूरिति शक्तिरायुधविशेष उच्यते॥

## वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ९१ ॥

ह्रस्व इति निवृत्तम्। वत्स उक्षन् अश्व ऋषभ इत्येतेभ्यस्तनुत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः तस्य तनुत्वे प्रत्ययः। वत्सतरः। अश्वतरः। ऋषभतरः। प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयःप्राप्तिः। तरुण उक्षा, तस्य तनुत्वं तृतीयवयःप्राप्तिः। अश्वेनाश्वायामुत्पन्नोऽश्वः, तस्य तनुत्वमन्यपितृकता। अनड्वानृषभः, तस्य तनुत्वं भारवहने मन्दशक्तिता॥

## किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् ॥ ९२ ॥

किं यत् तत् इत्येतेभ्यः प्रातिपदिकेभ्यो द्वयोरेकस्य निर्द्धारणे डतरच् प्रत्ययो भवति। निर्द्धार्यमाणवाचिभ्यः स्वार्थे प्रत्ययः। जात्या(१) क्रियया गुणेन संज्ञया वा समुदायादेकदेशस्य पृथक्करणम् निर्धारणम्। कतरो भवतोः कठः। कतरो भवतोः कारकः। कतरो भवतोः पटुः। कतरो भवतोर्देवदत्तः। यतरो भवतोः कारकः। यतरो भवतोः पटुः। यतरो भवतोर्देवदत्तः। ततर आगच्छतु। महाविभाषयाऽत्र प्रत्ययो विकल्प्यते। को भवतोर्देवदत्तः, स आगच्छतु। निर्धारण इति विषयसप्तमीनिर्देशः। द्वयोरिति समुदायान्निर्धारणविभक्तिः। एकस्येति निर्द्देशो निर्धार्यमाणनिर्द्देशः॥

## वा बहूनां जातपरिप्रश्ने डतमच् ॥ ९३ ॥

किंयत्तद इति वर्तते, निर्धारणे एकस्येति च। बहूनामिति निर्धारणे षष्ठी। बहूनां मध्ये एकस्य निर्धारणे गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यो वा डतमच् प्रत्ययो भवति। कतमो भवतां कठः। यतमो भवतां कठः। ततम आगच्छतु। वावचनमकजर्थम्। यको भवतां कठः सक आगच्छतु। महाविभाषा च प्रत्ययविकल्पार्थानुवर्त्तत एव। को भवतां कठः। यो भवतां कठः स आगच्छतु। जातिपरिप्रश्न इति किम्? को भवतां देवदत्तः। परिप्रश्नग्रहणं च किम एव विशेषणम्, न यत्तदोरसम्भवात्। जाति-

---

कुत्वा—ह्रस्वत्व के द्योतन के लिए कुतू शब्द से डुपच् प्रत्यय होता है।

कासूगोणीभ्याम्—ह्रस्वत्व-द्योतन के लिए कासू तथा गोणी शब्दों से ष्टरच् प्रत्यय होता है।

वत्सोक्षा—तनुत्व के द्योतन के लिए वत्स, उक्षन्, अश्व तथा ऋषभ शब्दों से ष्टरच् प्रत्यय होता है।

किंयत्तदो—दो में से एक के निर्धारण में किम्, यत् तथा तत् शब्दों से डतरच् प्रत्यय होता है।

वा बहूनाम्—बहुतों के बीच एक के निर्धारण के गम्यमान होने पर जाति तथा परिप्रश्न में वर्तमान किम्, यत् तथा तत् से डतमच् प्रत्यय होता है।

---

(१) जात्येत्येकस्मिन् पुस्तके नास्ति, कतरो भवतोः कठ इति तदुदाहरणं च। तथैव युक्तम्, पदमञ्जर्यां जात्या वेत्यपि द्रष्टव्यम्—कतरो भवतोः कठ इत्यादेरपि संभवादिति दर्शनात्।

ग्रहणं तु सर्वैरेव सम्बध्यते । किमोऽस्मिन् विषये डतरमपीच्छन्ति केचित्—कतरो भवतां कठः, कतरो भवतां कालाप इति । तत्र कतरकतमौ जातिपरिप्रश्न इति वचनात् सिद्धम् ॥

## एकाच्च प्राचाम् ॥ ९४ ॥

एकशब्दात्प्राचामाचार्याणां मतेन डतरच् डतमच् इत्येतौ प्रत्ययौ भवतः स्वस्मिन् विषये । चकारो डतरचोऽनुकर्षणार्थः । द्वयोर्निर्द्धारणे डतरच् । बहूनां निर्द्धारणे डतमच् । जातिपरिप्रश्न इति नानुवर्त्तते । सामान्येन विधानम् । एकतरो भवतोर्देवदत्तः । एकतमो भवतां देवदत्तः । प्राचाङ्ग्रहणं पूजार्थम्, विकल्पोऽनुवर्त्तते एव ॥

## अवक्षेपणे कन् ॥ ९५ ॥

अवक्षिप्यते येन तदवक्षेपणम् । तस्मिन् वर्त्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति । व्याकरणकेन नाम त्वं गर्वितः । याज्ञिक्यकेन नाम त्वं गर्वितः । परस्य कुत्सार्थं यदुपादीयते तदिहोदाहरणम् । यत्पुनः स्वयमेव कुत्सितं तत्र कुत्सित इत्यनेन कन् प्रत्ययो भवति । देवदत्तको यज्ञदत्तक इति । प्रागिवीयस्य पूर्णोऽवधिः ॥

## इवे(१) प्रतिकृतौ ॥ ९६ ॥

कनित्यनुवर्त्तते । इवार्थे यत् प्रातिपदिकं वर्त्तते तस्मात् कन् प्रत्ययो भवति । इवार्थः सादृश्यं तस्य विशेषणं प्रतिकृतिग्रहणम् । प्रतिकृतिः प्रतिरूपकं प्रतिच्छन्दकम् । अश्व इवायमश्वप्रतिकृतिः अश्वकः । उष्ट्रकः । गर्दभकः । प्रतिकृताविति किम् ? गौरिव गवयः ॥

## संज्ञायां च ॥ ९७ ॥

इवेत्यनुवर्त्तते, कनिति च । इवार्थे गम्यमाने कन् प्रत्ययो भवति समुदायेन चेत् संज्ञा गम्यते । अप्रतिकृत्यर्थं आरम्भः । अश्वसदृशस्य संज्ञा अश्वकः, उष्ट्रकः, गर्दभकः ॥

## लुम्मनुष्ये ॥ ९८ ॥

संज्ञायामित्येव । संज्ञायां विहितस्य कनो मनुष्येऽभिधेये लुप् भवति । चञ्चेव मनुष्यः चञ्चा । दासी । खरकुटी । मनुष्य इति किम् ? अश्वकः, उष्ट्रकः, गर्दभकः । देवपथादेराकृतिगणत्वात्तस्यैवायं प्रपञ्चो वेदितव्यः ॥

## जीविकार्थे चाऽपण्ये ॥ ९९ ॥

जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुप् भवति । विक्रीयते यत्तत्पण्यम् ।

---

एकाच्च—उक्त अर्थों में एक शब्द से भी डतरच् तथा डतमच् प्रत्यय होते हैं विकल्प से ।

अवक्षेपणे—अवक्षेपणार्थ में वर्तमान प्रातिपदिक से कन् प्रत्यय होता है ।

इवे—सादृश्यविशिष्ट प्रतिमा के अर्थ में सादृश्यप्रतियोगिभूतपदार्थवाचक शब्द से कन् प्रत्यय होता है ।

संज्ञायाम्—यदि प्रत्ययान्त से संज्ञा की प्रतीति होती हो तो भी (प्रतिमाभिन्न होने पर भी) इवार्थ में कन् प्रत्यय होता है ।

लुम्मनुष्ये—संज्ञा में विहित कन् प्रत्यय का लुप् हो जाता है मनुष्य के वाच्य होने पर ।

जीविकार्थे—जीविकानिमित्तक अपण्य (अविक्रीयमाण) पदार्थ के वाच्य होने पर भी विहित कन् प्रत्यय का लुप् हो जाता है ।

---

(१) तृणचर्मकाष्ठादिनिर्मितम् प्रतिमापरपर्यायं वस्तु प्रतिकृतिः ।

वासुदेवः। शिवः। स्कन्दः। विष्णुः। आदित्यः। देवलकादीनां(१) जीविकार्था देवप्रतिकृतयः उच्यन्ते। अपण्य इति किम्? हस्तिकान् विक्रीणीते, अश्वकान्, रथकान्। देवपथादेरेवायं प्रपञ्चः॥

## देवपथादिभ्यश्च ॥ १०० ॥

इवे प्रतिकृतौ संज्ञायां च विहितस्य कनो देवपथादिभ्य उत्तरस्य लुप् भवति। आदिशब्दः प्रकारे। आकृतिगणश्चायम्। देवपथः। हंसपथः॥

अर्च्चासु पूजनार्थासु चित्रकर्म्मध्वजेषु च।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु॥

अर्च्चासु तावत्—शिवः, विष्णुः। चित्रकर्म्मणि—अर्जुनः, दुर्योधनः। ध्वजेषु—कपिः, गरुडः, सिंहः। देवपथ। हंसपथ। वारिपथ। जलपथ। राजपथ। शतपथ। सिंहगति। ऊष्ट्रग्रीवा। चामरज्जु। रज्जु। हस्त। इन्द्र। दण्ड। पुष्प। मत्स्य(२)। देवपथादिः॥

## वस्तेर्ढञ् ॥ १०१ ॥

इवेत्यनुवर्त्तते, इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति प्रतिकृतौ चाप्रतिकृतौ च। वस्तिशब्दादिवार्थे द्योत्ये ढञ् प्रत्ययो भवति। वस्तिरिव वास्तेयः। वास्तेयी॥

## शिलाया ढः ॥ १०२ ॥

शिलाशब्दादिवार्थे ढः प्रत्ययो भवति। शिलेव शिलेयं दधि। केचिदत्र ढञमपीच्छन्ति, तदर्थं योगविभागः कर्त्तव्यः। शिलाया ढञ्प्रत्ययो भवति—शैलेयम्। ततो ढः—शिलेयम्॥

## शाखादिभ्यो यत् ॥ १०३ ॥

शाखा इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत् प्रत्ययो भवति इवार्थे। शाखेव शाख्यः। मुख्यः। जघन्यः। शाखा। मुख। जघन। शृङ्ग। मेघ। चरण। स्कन्ध। शिरस्। उरस्। अग्र। शरण। शाखादिः॥

## द्रव्यं च भव्ये ॥ १०४ ॥

द्रव्यशब्दो निपात्यते भव्येऽभिधेये। द्रुशब्दादिवार्थे यत् प्रत्ययो निपात्यते। द्रव्यम्। भव्य आत्मवान्। अभिप्रेतानामर्थानां पात्रभूत उच्यते। द्रव्योऽयं राजपुत्त्रः। द्रव्योऽयं माणवकः॥

---

देवपथादिभ्यश्च—'इवे प्रतिकृतौ' तथा 'संज्ञायाम् च' सूत्रों से कन् प्रत्यय यदि देवपथ आदि शब्दों से विहित हो तो उसका भी लुप् हो जाता है।

वस्तेर्ढञ्—यहाँ से आगे विधीयमान प्रत्यय इवार्थ में प्रतिकृति या अप्रतिकृति दोनों में से किसी की भी अभिधेयता में होती है।

शिलाया ढः—शिलाशब्द से इवार्थ ( सादृश्य ) में ढ प्रत्यय होता है।

शाखा—शाखा आदि शब्दों से इवार्थ में यत् प्रत्यय होता है।

द्रव्यम्—द्रु शब्द से इवार्थ में यत् प्रत्यय का निपातन होता है यदि प्रत्ययान्त का वाच्य 'भव्य' हो।

---

( १ ) ये प्रतिमाः प्रतिगृह्य भिक्षमाणा अटन्ते ते देवलकाः।

( २ ) रथपथ। शंकुपथ। सिंहपथ। इत्येते शब्दा अत्र गणेऽधिकाः पुस्तकान्तरे।

## कुशाग्राच्छः ॥ १०५ ॥

कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति। कुशाग्रमिव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः। कुशाग्रीयं वस्त्रम् ॥

## समासाच्च तद्विषयात् ॥ १०६ ॥

तदित्यनेन प्रकृत इवार्थो निर्दिश्यते। इवार्थविषयात् समासादपरस्मिन्निवार्थे एव छः प्रत्ययो भवति। काकतालीयम्। अजाकृपाणीयम्। अन्धकवर्त्तकीयम्। अतर्कितोपनतं चित्रीकरणमुच्यते। तत् कथम्? काकस्यागमनं यादृच्छिकम्, तालस्य पतनं च। तेन तालेन पतता काकस्य वधः कृतः। एवमेव देवदत्तस्य तत्रागमनं दस्यूनां चोपनिपातः, तैश्च तस्य वधः कृतः; तत्र यो देवदत्तस्य दस्यूनां च समागमः स काकतालसमागमसदृश इत्येक उपमार्थः। अतश्च देवदत्तस्य वधः, स काकतालवधसदृश इति द्वितीय उपमार्थः। तत्र प्रथमे समासः, द्वितीये प्रत्ययः। समासश्चायमस्मादेव ज्ञापकात्। न ह्यस्यापरं लक्षणमस्ति। सुप्सुपेति वा समासः। स चैवंविषय एव ॥

## शर्करादिभ्योऽण् ॥ १०७ ॥

शर्करा इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थेऽण् प्रत्ययो भवति। शर्करेव शार्करम्। कापालिकम्। शर्करा। कपालिका। पिष्टिक(१)। पुण्डरीक। शतपत्र। गोलोमन्। गोपुच्छ। नराचि। नकुला। सिकता। शर्करादिः ॥

## अङ्गुल्यादिभ्यष्ठक् ॥ १०८ ॥

अङ्गुल्यादिभ्य इवार्थे ठक् प्रत्ययो भवति। अङ्गुलीवाङ्गुलिकः। भारुजिकः। अङ्गुलि। भरुज। बभ्रु। वल्गु। मण्डर। मण्डल। शष्कुल। कपि। उदश्वित्। गोणी। उरस्। शिखा। कुलिश। अङ्गुल्यादिः ॥

## एकशालायाष्ठजन्यतरस्याम् ॥ १०९ ॥

एकशालाशब्दादिवार्थेऽन्यतरस्यां ठच् प्रत्ययो भवति। अन्यतरस्यांग्रहणेनानन्तरष्ठक् प्राप्यते। एकशालेव एकशालिकः। ऐकशालिकः ॥

## कर्कलोहितादीकक् ॥ ११० ॥

कर्कलोहितशब्दाभ्यामिवार्थे ईकक् प्रत्ययो भवति। कर्कः शुक्लोऽश्वः, तेन सदृशः कार्कीकः। लौहितीकः स्फटिकः। स्वयमलोहितोऽप्युपाश्रयवशात्तथा प्रतीयते ॥

## प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ॥ १११ ॥

प्रत्न पूर्व विश्व इम इत्येतेभ्य इवार्थे थाल् प्रत्ययो भवति छन्दसि विषये। तं प्रत्नथा पूर्वथा विश्वथेमथा ॥

---

कुशाग्राच्छः—कुशाग्र शब्द से इवार्थ में छ प्रत्यय होता है।
समासाच्च—इवार्थविषयक समास से इवार्थ में छ प्रत्यय होता है।
शर्करादिभ्योऽण्—शर्करा आदि शब्दों से इवार्थ में अण् प्रत्यय होता है।
अङ्गुल्यादिभ्यः—अङ्गुली आदि शब्दों से इवार्थ में ठक् प्रत्यय होता है।
एकशाला—एकशाला शब्द से इवार्थ में विकल्प से ठच् प्रत्यय होता है।
कर्क—कर्क तथा लोहित शब्दों से इवार्थ में ईकक् प्रत्यय होता है।
प्रत्नपूर्व—प्रत्न, पूर्व, विश्व तथा इम शब्दों से इवार्थ में थाल् प्रत्यय होता है छन्दोविषय में।

---

(१) कनिष्ठिक, कपिष्टिक इति पाठान्तरम्।

## पूगाञ्ञ्योऽग्रामणी(१)पूर्वात् ॥ ११२ ॥

इवार्थे इति निवृत्तम्। नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः संघाः पूगाः। पूगवाचिनः प्रातिपदिकादग्रामणीपूर्वात् स्वार्थे ञ्यः प्रत्ययो भवति। लौहध्वज्यः। लौहध्वज्यौ। लोहध्वजाः। शैब्यः। शैब्यौ। शिबयः। चातक्यः। चातक्यौ। चातकाः। अग्रामणीपूर्वादिति किम्? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः, यज्ञदत्तकाः॥

## व्रातच्फञोरस्त्रियाम् ॥ ११३ ॥

नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः। व्रातवाचिभ्यः प्रातिपदिकेभ्यश्च्फञ्प्रत्ययान्तेभ्यश्च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियाम्। कापोतपाक्यः। कापोतपाक्यौ। कापोतपाकाः। व्रैहिमत्यः। व्रैहिमत्यौ। व्रीहिमताः। च्फञः खल्वपि—कौञ्जायन्यः। कौञ्जायन्यौ। कौञ्जायनाः। ब्राध्नायन्यः। ब्राध्नायन्यौ। ब्राध्नायनाः। अस्त्रियामिति किम्? कपोतपाकी, व्रीहिमती, कौञ्जायनी, ब्राध्नायनी॥

## आयुधजीविसंघाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात् ॥ ११४ ॥

आयुधजीविनां संघः आयुधजीविसंघः। स वाहीकैर्विशेष्यते। वाहीकेषु य आयुधजीविसंघस्तद्वाचिनः प्रातिपदिकाद् ब्राह्मणराजन्यवर्जिताद् स्वार्थे ञ्यट् प्रत्ययो भवति। ब्राह्मणे तद्विशेषग्रहणम्। राजन्ये तु स्वरूपग्रहणमेव। टकारो ङीबर्थः। तेनास्त्रियामिति नानुवर्त्तते। कौण्डीवृस्यः। कौण्डीवृस्यौ। कौण्डीवृसाः। क्षौद्रक्यः। क्षौद्रक्यौ। क्षुद्रकाः। मालव्यः। मालव्यौ। मालवाः। स्त्रियां कौण्डीवृसी, क्षौद्रकी, मालवी। आयुधजीविग्रहणं किम्? मल्लाः, शयण्डाः। संघग्रहणं किम्? सम्राट्। वाहीकेष्विति किम्? शबराः, पुलिन्दाः। अब्राह्मणराजन्यादिति किम्? गोपालवा ब्राह्मणाः, शालङ्कायना राजन्याः॥

## वृकाट्टेण्यण् ॥ ११५ ॥

आयुधजीविसंघादिति वर्त्तते। वृकशब्दादायुधजीविनः स्वार्थे टेण्यण् प्रत्ययो भवति। टकारो ङीबर्थो णकारो वृद्ध्यर्थः। वार्केण्यः। वार्केण्यौ। वृकाः। आयुधजीविसंघविशेषणं जातिशब्दान्माभूत्। 'कामक्रोधौ मनुष्याणां खादितारौ वृकाविव'॥

## दामन्यादित्रिगर्त्तषष्ठाच्छः ॥ ११६ ॥

आयुधजीविसंघादिति वर्त्तते। दामन्यादिभ्यः प्रातिपदिकेभ्यस्त्रिगर्त्तषष्ठेभ्यश्चायुधजीविसंघवाचिभ्यः स्वार्थे छः प्रत्ययो भवति। येषामायुधजीविनां संघानां षडन्तर्वर्गास्तत्र च त्रिगर्त्तः षष्ठः। त्रिगर्त्तः षष्ठो येषां ते त्रिगर्त्तषष्ठा इत्युच्यन्ते। तेषु चेयं स्मृतिः—

आहुस्त्रिगर्त्तषष्ठांस्तु कौण्डोपरथदाण्डकी।
क्रौष्टकिर्जालमानिश्च ब्रह्मगुप्तोथ जानकिः॥ इति।

---

पूगाञ्ञ्यो—अग्रामणीपूर्वक पूगवाचक शब्द से इवार्थ में ञ्य प्रत्यय होता है।

व्रातच्—व्रातार्थक प्रातिपदिक तथा च्फञ्प्रत्ययान्त प्रातिपदिकों से स्वार्थ मे ञ्य प्रत्यय होता है स्त्रीत्वभिन्न लिङ्ग में।

आयुध—वाहीकवृत्ती आयुधजीविसंघवाचक ब्राह्मण तथा राजन्य से भिन्न प्रातिपदिकों से स्वार्थ में ञ्यट् प्रत्यय होता है।

वृकाट्टेण्यण्—आयुधजीविसंघवाचक वृक शब्द से टेण्यण् प्रत्यय होता है।

दामन्यादि—आयुधजीविसंघवाचक दामनी आदि शब्दों तथा त्रिगर्तषष्ठ शब्द से स्वार्थ में छ प्रत्यय होता है।

---

(१) अग्रामणीत्यत्र ग्रामणीत्यर्थग्रहणम् न शब्दस्य, व्याख्यानात् (श्रीना०)

दामन्यादिभ्यस्तावत्–दामनीयः। दामनीयौ। दामनयः। औलपीयः। औलपीयौ। उलपयः। त्रिगर्त्तषष्ठेभ्यः खल्वपि–कौण्डोपरथीयः। कौण्डोपरथीयौ। कौण्डोपरथाः। दाण्डकीयः। दाण्डकीयौ। दाण्डकयः। क्रौष्टकीयः। जालमानीयः। ब्रह्मगुप्तीयः। जानकीयः। दामनी। औलपि। आकिदन्ती। काकरन्ति। काकदन्ति। शत्रुन्तपि। सार्वसेनि। बिन्दु। मौञ्जायन। उलभ। सावित्रीपुत्र(१) दामन्यादिः॥

## पर्श्वादियौधेयादिभ्यामणञौ ॥ ११७ ॥

आयुधजीविसंघादित्येव। पर्श्वादिभ्यो यौधेयादिभ्यश्च प्रातिपदिकेभ्य आयुधजीविसंघवाचिभ्यः स्वार्थेऽणञौ प्रत्ययौ भवतः। पार्शवः। पार्शवौ। पर्शवः। आसुरः। आसुरौ। असुराः। यौधेयः। शौभ्रेयः। पर्शु। असुर। रक्षस्। बाल्हीक। वयस्। मरुत्। दशार्ह। पिशाच। विशाल। अशनि। कार्षापण। सत्वत्। वसु। पर्श्वादिः॥ यौधेय। कौशेय। क्रौशेय। शौभ्रेय। शौभ्रेय। धार्त्तेय। वार्त्तेय। जाबालेय। त्रिगर्त्त। भरत। उशीनर। यौधेयादिः॥

## अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥११८॥

आयुधजीविसङ्घादिति निवृत्तम्। अभिजिदादिभ्योऽणन्तेभ्यः प्रातिपदिकेभ्यः स्वार्थे यञ् प्रत्ययो भवति। अभिजितोऽपत्यमित्यण्। तदन्ताद्यञ्। आभिजित्यः। आभिजित्यौ। आभिजिताः। वैदभृत्यः। वैदभृत्यौ। वैदभृताः। शालावत्यः। शालावत्यौ। शालावताः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः। ॐगोत्रप्रत्ययस्यात्राणो ग्रहणमिष्यतेॐ। अभिजितो मुहूर्त्तः आभिजितः स्थालीपाक इत्यत्र न भवति॥

## ञ्यादयस्तद्राजाः ॥ ११९ ॥

पूगाञ्ञ्योऽग्रामणीपूर्वादित्यतः प्रभृति ये प्रत्ययास्ते तद्राजसंज्ञा भवन्ति। तथा चैवोदाहृतम्। तद्राजप्रदेशाः "तद्राजस्य बहुषु" इत्येवमादयः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य
तृतीयः पादः ॥५।३॥



---

पर्श्वादि—आयुधजीविसंघार्थक पर्शु आदि तथा यौधेय आदि शब्दों से स्वार्थ में अण् तथा अञ् प्रत्यय होते हैं।

अभिजिद्—अण्प्रत्ययान्त अभिजित् आदि शब्दों से स्वार्थ में यञ् प्रत्यय होता है।

गोत्रप्रत्यय—यहाँ अण् प्रत्यय का अर्थ गोत्रार्थक अण् प्रत्यय समझना चाहिए।

ञ्यादयस्तद्राजाः—'पूगाञ्ञ्योऽग्रामणीपूर्वात्' से विहित प्रत्यय तथा उससे उत्तरवर्ती प्रत्यय की 'तद्राज' संज्ञा होती है।

पञ्चम अध्याय का तृतीय पाद समाप्त हुआ।



---

(१) अच्युतन्ति। कोकतन्ती। तुलभ। देववापि। औतकी। अपच्युतकी। कर्की। पिण्ड। एतेऽत्र गणेऽधिकाः पुस्तकान्तरे।

# अथ पञ्चमाध्यायस्य चतुर्थः पादः ॥

## पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ॥ १ ॥

पादशतान्तस्य संख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् प्रत्ययो भवति, तत्सन्नियोगेन चान्तस्य लोपो भवति। यस्येति लोपेनैव सिद्धे पुनर्वचनमनैमित्तिकार्थम्। यस्येति लोपः परनिमित्तकः, तस्य स्थानिवद्भावात् "पादः पत्" इति पद्भावो न स्यात्। अस्य त्वनैमित्तिकत्वाच्च स्थानिवत्त्वम्। द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति। द्वे द्वे शते ददाति द्विशतिकीं ददाति। "तद्धितार्थ" इति समासः। ततः प्रत्ययः। स्वभावाच्च वुन्प्रत्ययान्तं स्त्रियामेव वर्त्तते। पादशतस्येति किम्? द्वौ द्वौ माषौ ददाति। संख्यादेरिति किम्? पादं पादं ददाति। वीप्सायामिति किम्? द्वौ पादौ ददाति। द्वे शते ददाति। पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात्—द्विमोदकिकां ददाति, त्रिमोदकिकां ददाति ॥

## दण्डव्यवसर्गयोश्च ॥ २ ॥

दमनं दण्डः। दानं व्यवसर्गः। दण्डव्यवसर्गयोर्गम्यमानयोः पादशतान्तस्य प्रातिपदिकस्य संख्यादेर्वुन् प्रत्ययो भवति, अन्तलोपश्च। अवीप्सार्थोऽयमारम्भः। द्वौ पादौ दण्डितः द्विपदिकां दण्डितः। द्वौ पादौ व्यवसृजति द्विपदिकां व्यवसृजति। द्विशतिकां दण्डितः, त्रिशतिकाम्। द्विशतिकां व्यवसृजति, त्रिशतिकाम् ॥

## स्थूलादिभ्यः प्रकारवचने कन् ॥ ३ ॥

स्थूलादिभ्यः प्रकारवचने द्योत्ये कन् प्रत्ययो भवति। जातीयरोऽपवादः। प्रकारो विशेषः। स्थूलप्रकारः स्थूलकः। अणुकः। माषकः। ॐकन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम्ॐ। चञ्चत्प्रकारः चञ्चत्कः। बृहत्कः। चञ्चद्बृहतोरिति केचित् पठन्ति। तेषां चञ्चकः, बृहक इति उदाहरणं द्रष्टव्यम्। स्थूल। अणु। माष। इषु। कृष्ण तिलेषु। यव व्रीहिषु। ॐपाद्यकालावदाताः सुरायाम्ॐ। ॐगोमूत्र आच्छादनेॐ। ॐसुराया अहौॐ। ॐजीर्ण शालिषुॐ। ॐपत्रमूले समस्तव्यस्तेॐ। कुमारीपुत्र। कुमार। श्वसुर। मणि। स्थूलादिः ॥

---

पादशतस्य—संख्यापूर्वक पादशब्दान्त तथा शतशब्दान्त शब्दों से वीप्सा के द्योत्य होने पर वुन् प्रत्यय होता है और प्रत्यय के विधान होनेपर अन्त ( अकार ) का लोप भी हो जाता है।

दण्डव्यव—दण्ड तथा दान के प्रतिपादनीय होने पर भी संख्यापूर्वक पादशब्दान्त तथा शतशब्दान्त प्रातिपदिकों से वुन् प्रत्यय तथा अन्त-लोप हो जाते हैं।

स्थूलादिभ्यः—प्रकार के द्योतनार्थ स्थूल आदि शब्दों से कन् प्रत्यय होता है।

कन्प्रकरणे—चञ्चत् तथा बृहत् शब्दों से भी कन् प्रत्यय का विधान समझना चाहिए।

पाद्यकाला—पाद्य, काल तथा अवदात शब्दों से भी कन् प्रत्यय समझना चाहिए।

गोमूत्र—आच्छादनार्थ में गोमूत्र शब्द से कन् प्रत्यय अवगन्तव्य है।

सुरायाः—अहि ( सर्प ) विशेषात्मक अर्थ में सुरा शब्द से कन् प्रत्यय समझना चाहिए।

जीर्ण—शालि-( धान्य ) प्रकारात्मक अर्थ के प्रतिपादनार्थ जीर्ण शब्द से कन् प्रत्यय समझना चाहिए।

पत्रमूले—पत्र, मूल तथा पत्रमूल शब्दों से प्रकार अर्थ में कन् प्रत्यय का विधान समझना चाहिए।

## अनत्यन्तगतौ क्तात् ॥ ४ ॥

अत्यन्तगतिरशेषेण संबन्धः, तदभावोऽनत्यन्तगतिः। अनत्यन्तगतौ गम्यमानायां क्तान्तात्कन्प्रत्ययो भवति । भिन्नकः। छिन्नकः । अनत्यन्तगताविति किम्? भिन्नम्, छिन्नम् ॥

## न सामिवचने ॥ ५ ॥

सामिवचने उपपदे क्तान्तात्कन्प्रत्ययो न भवति। सामिकृतम्। सामिभुक्तम्। वचनग्रहणं पर्यायार्थम्। अर्द्धकृतम्। नेमकृतम्। सामिवचने प्रतिषेधानर्थक्यं प्रकृत्याभिहितत्वात्। एवं तर्हि नैवायमनत्यन्तगतौ विहितस्य कनः प्रतिषेधः, किं तर्हि स्वार्थिकस्य। केन पुनः स्वार्थिकः कन् विहितः? एतदेव ज्ञापकं भवति स्वार्थे कन्निति। तत्र यदेतदुच्यते— एवं हि सूत्रमभिन्नतरकं भवति, एतर्हि बहुतरकं व्याप्यत इत्येवमादि तदुपपन्नं भवति (१) ॥

## बृहत्या आच्छादने ॥६ ॥

कन्ननुवर्त्तते, न प्रतिषेधः। बृहतीशब्दादाच्छादने वर्त्तमानात् स्वार्थे कन्प्रत्ययो भवति। बृहतिका। आच्छादने इति किम्? बृहती छन्दः ॥

## अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः ॥ ७ ॥

अषडक्ष आशितंगु अलंकर्मन् अलंपुरुष इत्यतेभ्योऽध्युत्तरपदाच्च स्वार्थे खः प्रत्ययो भवति। अविद्यमानानि षडक्षीण्यस्येति बहुव्रीहिः। "बहुव्रीहौ सक्थ्यक्ष्णोः" इति षच्। ततः खप्रत्ययः। अषडक्षीणो मन्त्रः। यो द्वाभ्यामेव क्रियते न बहुभिः। आशिता गावोऽस्मिन्नरण्ये आशितंगवीनमरण्यम्। निपातनात् पूर्वपदस्य मुमागमः। अलंकर्म्मन्, अलंपुरुष इति पर्यादयो ग्लानाद्यर्थे चतुर्थ्येति समासः। अलंकर्म्मणेऽलंकर्मीणः। अलंपुरुषाय अलंपुरुषीणः। अध्युत्तरपदस्तत्पुरुषः। अधिशब्दः शौण्डादिषु पठ्यते। राजाधीनः। नित्यश्चायं प्रत्ययः, उत्तरत्र विभाषाग्रहणात्। अन्येपि स्वार्थिका नित्याः प्रत्ययाः स्मर्यन्ते तमबादयः प्राक्कनः। ञ्यादयः प्राग्वुनः। आमादयः प्राङ्मयटः। बृहतीजात्यन्ताः समासान्ताश्चेति ॥

## विभाषाञ्चेरदिक्स्त्रियाम् ॥ ८ ॥

अञ्चत्यन्तात् प्रातिपदिकाददिक्स्त्रियां वर्त्तमानात् स्वार्थे विभाषा खः प्रत्ययो भवति। प्राक्। प्राचीनम्। अर्वाक्। अर्वाचीनम्। अदिक्स्त्रियामिति किम्? प्राची दिक्। प्रतीची दिक्। दिग्ग्रहणं किम्? उदीचीनं दिग्रमणीयम् ॥

---

अनत्यन्तगतौ—क्तप्रत्ययान्त शब्दों से आंशिक सम्बन्ध के प्रतिपादनार्थ कन् प्रत्यय होता है।

न सामि—सामि ( अर्द्ध ) तथा तदर्थक शब्दों के उपपद होने पर क्तप्रत्ययान्त शब्दों से उक्त कन् प्रत्यय नहीं होता है।

बृहत्या—आच्छादनार्थ में वर्तमान बृहती शब्द से स्वार्थ में कन् प्रत्यय होता है।

अषडक्षाशि—अषडक्ष, आशितङ्गु, अलङ्कर्म, अलम्पुरुष तथा अध्युत्तरपदक शब्दों से स्वार्थ में खप्रत्यय होता है।

विभाषा—अञ्चूधातुव्युत्पन्नशब्दान्त प्रातिपदिकों से स्वार्थ में विकल्प से ख प्रत्यय होता है यदि प्रकृति स्त्रीत्वविशिष्टदिक् से भिन्न अर्थ ( स्त्रीत्वरहित दिक् ) का प्रतिपादन करती हो।

---

( १ ) एतर्हि बहुतरकं व्याकरणमधीतमित्येवमाद्युपपन्नं भवति इति पाठान्तरम्।

## जात्यन्ताच्छ बन्धुनि ॥ ९ ॥

जात्यन्तात् प्रातिपदिकाद् बन्धुनि वर्त्तमानात् स्वार्थे छः प्रत्ययो भवति। बध्यतेऽस्मिञ्जातिरिति बन्धुशब्देन द्रव्यमुच्यते। येन ब्राह्मणत्वादिजातिर्व्यज्यते तद्बन्धु द्रव्यम्। ब्राह्मणजातीयः। क्षत्रियजातीयः। वैश्यजातीयः इति। ब्राह्मणादिरेवोच्यते। बन्धुनीति किम्? ब्राह्मणजातिः शोभना॥

## स्थानान्ताद्विभाषा सस्थानेनेति चेत् ॥ १० ॥

स्थानान्तात् प्रातिपदिकाद्विभाषा छः प्रत्ययो भवति सस्थानेन चेत् स्थानान्तमर्थवद्भवति। सस्थान इति उच्यते समानं स्थानमस्येति कृत्वा। पित्रा तुल्यः पितृस्थानीयः(१)। पितृस्थानः। मातृस्थानीयः, मातृस्थानः। राजस्थानीयो राजस्थानः। सस्थानशब्दोऽर्थमुपस्थापयति, न तत्पुरुषः। चेच्छब्दः संबन्धार्थः। द्वयोर्विभाषयोर्मध्ये नित्या विधय इति पूर्वत्र नित्यविधयः॥

## किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥ ११ ॥

किम एकारान्तात्तिङन्तादव्ययेभ्यश्च यो विहितो घः स किमेत्तिङव्ययघः, तदन्तात् प्रातिपदिकादद्रव्यप्रकर्षे आम् प्रत्ययो भवति। यद्यपि द्रव्यस्य स्वतः प्रकर्षो नास्ति तथापि गुणक्रियास्थः प्रकर्षो यदा द्रव्य उपचर्यते तदाऽयं प्रतिषेधः। क्रियागुणयोरेवायं प्रकर्षे प्रत्ययः। किंतराम्। किंतमाम्। पूर्वाह्णेतराम्। पूर्वाह्णेतमाम्। पचतितराम्। पचतितमाम्। उच्चैस्तराम्। उच्चैस्तमाम्। अद्रव्यप्रकर्ष इति किम्? उच्चैस्तरः, उच्चैस्तमः॥

## अमु च च्छन्दसि ॥ १२ ॥

किमेत्तिङव्ययघादद्रव्यप्रकर्षे अमु प्रत्ययो भवति छन्दसि विषये, चकारादामु च। प्रतरं नयामः। प्रतरां वस्यः। स्वरादिषु अम् आम् इति पठ्यते। तस्मात्तदन्तस्याव्ययत्वम्॥

## अनुगादिनष्ठक् ॥ १३ ॥

अनुगदतीत्यनुगादी। अनुगादिन्शब्दात् स्वार्थे ठक् प्रत्ययो भवति। आनुगादिकः।

## णचः स्त्रियामञ् ॥ १४ ॥

"कर्मव्यतिहारे णच् स्त्रियाम्" इति णज्विहितः, तदन्तात् स्वार्थेऽञ् प्रत्ययो भवति

---

जात्यन्तात्—जातिवाचकशब्दान्त प्रातिपदिक से बन्धु (जातिव्यञ्जक द्रव्य) अर्थ में छ प्रत्यय होता है।

स्थानान्तात्—स्थानशब्दान्त प्रातिपदिक से विकल्प से छ प्रत्यय होता है यदि तुल्यस्थानीय पदार्थ का प्रतिपादन प्रत्ययान्त से होता है।

किमेत्तिङव्यय—किम्, एकारान्त, तिङन्त तथा अव्यय से विहित जो 'घ' संज्ञक (तरप् तमप्) प्रत्यय तदन्त शब्दों से आम् प्रत्यय होता है यदि प्रत्ययान्त से द्रव्य का प्रकर्ष प्रतीत न हो।

अमु च—उक्त 'घ' प्रत्ययान्त शब्दों से अमु प्रत्यय भी होता है छन्दो-विषय में।

अनुगादिनष्ठक्—अनुगादिन् शब्द से स्वार्थ में ठक् प्रत्यय होता है।

णचः—कर्मव्यतिहारार्थक णच्प्रत्ययान्त शब्द से स्वार्थ में अञ् प्रत्यय होता है।

---

(१) पितृस्थानमिव स्थानं यस्येति विग्रहे सप्तम्युपमानेत्यादिसूत्रेण बहुव्रीहिरुत्तरपदलोपश्चात्रावगन्तव्यः (श्रीना०)।

स्त्रियां विषये । व्यावक्रोशी । व्यावहासी वर्त्तते । स्त्रीग्रहणं किमर्थं यावता णच् स्त्रियामेव विहितः, ततः स्वार्थिकस्तत्रैव भविष्यति ? एवं तर्ह्येतज्ज्ञापयति—स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति । तेन गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना(१), देव एव देवतेत्येवमाद्युपपन्नं भवति ॥

## अणिनुणः ॥ १५ ॥

अभिविधौ भाव इनुण् विहितस्तदन्तात् स्वार्थेऽण् प्रत्ययो भवति । सांराविणं वर्त्तते । सांकूटिनम् ॥

## विसारिणो मत्स्ये ॥ १६ ॥

विसरतीति विसारी । विसारिन्शब्दात् स्वार्थेऽण् प्रत्ययो भवति मत्स्येऽभिधेये । वैसारिणो मत्स्यः । मत्स्य इति किम् ? विसारी देवदत्तः ॥

## संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥ १७ ॥

संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति । पौनः पुन्यमभ्यावृत्तिः । एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसंख्यानं क्रियाभ्यावृत्तिगणनं तत्र प्रत्ययः । पञ्च वारान् भुङ्क्ते पञ्चकृत्वः । सप्तकृत्वः । संख्याया इति किम् ? भूरिवारान् भुङ्क्ते । क्रियाग्रहणं किमर्थम्, यावता व्यावृत्तिः क्रियाया एव संभवति, न द्रव्यगुणयोः ? उत्तरार्थं क्रियाग्रहणम् । "एकस्य सकृच्च" इत्यत्र क्रियैव गण्यते, नाभ्यावृत्तिः, असंभवाद् । अभ्यावृत्तिग्रहणं किम् ? क्रियामात्रगणने मा भूत्—पञ्चपाकाः । दशपाकाः । गणनग्रहणं किम्, यावता गणनात्मिकैव संख्या ? अक्रियमाणे गणनग्रहणे क्रियाभ्यावृत्तौ वर्त्तमानेभ्यः संख्येयवचनेभ्य एव प्रत्ययः स्यात् । शतवारान् भुङ्क्ते शतकृत्व इति । इह न स्यात्—शतं वाराणां भुङ्क्ते इति । न ह्यत्राभ्यावृत्तौ शतशब्दः, संख्यानमात्रवृत्तित्वात् । गणनग्रहणात्तु सिद्धं भवति ॥

## द्वित्रिचतुर्भ्यः सुच् ॥ १८ ॥

द्वि त्रि चतुर् इत्येतेभ्यः संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः सुच् प्रत्ययो भवति । कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुङ्क्ते । चकारः स्वरार्थः ॥

## एकस्य सकृच्च ॥ १९ ॥

एकशब्दस्य सकृदित्ययमादेशो भवति सुच्च प्रत्ययः क्रियागणने । कृत्वसुचोऽपवादः । अभ्यावृत्तिस्त्विह न संभवति । सकृद्भुङ्क्ते । सकृदधीते । एकः पाक इत्यत्र न भवति, अनभिधानात् ॥

---

अणिनुणः—इनुण् प्रत्ययान्त शब्दों से स्वार्थ में अण् प्रत्यय होता है ।

विसारिणो—मत्स्य अर्थ में वर्तमान विसारिन् शब्द से स्वार्थ में अण् प्रत्यय होता है ।

संख्यायाः—क्रिया के अभ्यास ( आवृत्ति ) की गणना में वर्तनान संख्यावाचक शब्दों से स्वार्थ में कृत्वसुच् प्रत्यय होता है ।

द्वित्रि—क्रिया के अभ्यास की गणना में वर्तमान द्वि, त्रि तथा चतुर् शब्द से सुच् प्रत्यय होता है स्वार्थ में ।

एकस्य—क्रिया के अभ्यास की गणना में एक शब्द से सुच् प्रत्यय तथा एक के स्थान में सकृत् आदेश का निपातन है ।

---

( १ ) 'प्रसन्ना सुराविशेषः' इति पदमञ्जरी ।

## विभाषा बहोर्धाऽविप्रकृष्टकाले ॥ २० ॥

बहुशब्दात् क्रियाभ्यावृत्तिगणने वर्त्तमानात् विभाषा धा प्रत्ययो भवति। कृत्वसुचोऽपवादः। पत्ते सोऽपि भवति। अविप्रकृष्टग्रहणं क्रियाभ्यावृत्तिविशेषणम्। क्रियाणामुत्पत्तयश्चेदासन्नकालाः भवन्ति, न विप्रकृष्टकालाः। बहुधा दिवसस्य भुङ्क्ते। बहुकृत्वो दिवसस्य भुङ्क्ते। अविप्रकृष्टकाल इति किम् ? बहुकृत्वो मासस्य भुङ्क्ते ॥

## तत्प्रकृतवचने मयट् ॥ २१ ॥

तदिति प्रथमा समर्थविभक्तिः, प्राचुर्येण प्रस्तुतं प्रकृतम्। प्रथमासमर्थात् प्रकृतोपाधिकेऽर्थे वर्त्तमानात्स्वार्थे मयट् प्रत्ययो भवति। टकारो ङीबर्थः। अन्नं प्रकृतम् अन्नमयम्। अपूपमयम्। अपरे पुनरेवं सूत्रार्थमाहुः—प्रकृतमिरु च्यतेऽस्मिन्निति प्रकृतवचनं तदिति, प्रथमासमर्थात् प्रकृतवचनेऽभिधेये मयट् प्रत्ययो भवति। अन्नं प्रकृतमस्मिन्नन्नमयो यज्ञः। अपूपमयं पर्व। वटकमयी यात्रा। द्वयमपि प्रमाणमुभयथा सूत्रप्रणयनात् ॥

## समूहवच्च बहुषु ॥ २२ ॥

तत्प्रकृतवचन इत्येव। बहुषु प्रकृतेषूच्यमानेषु समूहवत् प्रत्यया भवन्ति, चकारान्मयट् च। मोदकाः प्रकृताः प्राचुर्येण प्रस्तुताः मौदकिकम्। मोदकमयम्। शाष्कुलिकम्। शष्कुलीमयम्। अतिवर्त्तन्तेऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनानि। द्वितीये सूत्रार्थे मोदकाः प्रकृता अस्मिन् यज्ञे मौदकिको यज्ञः। मोदकमयः। शाष्कुलिकः, शष्कुलीमयः ॥

## अनन्तावसथेतिहभेषजाञ्ञ्यः ॥ २३ ॥

अनन्तादिभ्यः स्वार्थे ञ्यः प्रत्ययो भवति। अनन्त एव आनन्त्यम्। आवसथ एवावसथ्यम्। इति ह ऐतिह्यम्। निपातसमुदायोऽयमुपदेशपारम्पर्ये वर्त्तते। भेषजमेव भैषज्यम्। महाविभाषया विकल्प्यते प्रत्ययः ॥

## देवतान्तात्तादर्थ्ये यत् ॥ २४ ॥

देवताशब्दान्तात् प्रतिपदिकाच्चतुर्थीसमर्थात्तादर्थ्ये यत् प्रत्ययो भवति। तदर्थं एव तादर्थ्यम्। चातुर्वर्ण्यादित्वात् ष्यञ्। तदिति प्रकृत्यर्थो निर्दिश्यते। अग्निदेवतायै इदम् अग्निदेवत्यम्। पितृदेवत्यम् ॥

## पादार्घाभ्यां च ॥ २५ ॥

तादर्थ्य इत्येव। पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां तादर्थ्येऽभिधेये यत्प्रत्ययो भवति। पादार्थमुदकं पाद्यम्। अर्घ्यम्। अनुक्तसमुच्चयार्थश्चकारः। यथादर्शनमन्यत्रापि प्रत्ययो भवति। एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिः। वसु। अयस्। शोक। कवि। क्षेम।

---

विभाषा—सन्निकृष्टकालिक क्रियाओं की आवृत्ति की गणना में बहुशब्द से विकल्प से धा प्रत्यय होता है।

तत्प्रकृतवचने—प्रकृतोपाधिक ( प्रकृत = अत्यन्त प्रस्तुत ) अर्थ में वर्तमान प्रथमासमर्थ प्रातिपदिक से स्वार्थ में मयट् प्रत्यय होता है।

समूहवच्च—बहुत प्रकृत पदार्थ का अभिधान कर्तव्य होने पर समूहार्थक प्रत्यय तथा मयट् प्रत्यय भी विकल्प से होते हैं।

अनन्तावसथेति—अनन्त, आवसथ, इति ह तथा भेषज शब्दों से स्वार्थ में ञ्य प्रत्यय होता है।

देवतान्तात्—चतुर्थीसमर्थ देवताशब्दान्त प्रातिपदिक से तादर्थ्य में यत्प्रत्यय होता है।

पादार्घाभ्याम्—चतुर्थीसमर्थ पाद तथा अर्घ शब्दों से तादर्थ्य में यत् प्रत्यय होता है।

उदक। वर्चस्। निष्केवल। उक्थ। जन। पूर्व। नव। सूर। मर्त। यविष्ठ। इत्येतेभ्यश्छन्दसि स्वार्थे यत्प्रत्ययो भवति। अग्निरीशे वसव्यस्य। अयस्यो वसानाः। द्वितीयाबहुवचनस्यालुक्। अयो वसाना इत्यर्थः। स्वओक्ये। कव्योसि। क्षेम्यस्य वस्यति। आयुर्वर्चस्यः। निष्केवल्यं शंसति। उक्थ्यं शंसति। जन्यं ताभिः। पूर्व्या विशः। स्तोमैर्जनयामि नव्यम्। सूर्यः। मर्त्यः। यविष्ठ्यः। ❀आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम्(१)❀। ❀समशब्दादावतुप्रत्ययो वक्तव्यः❀। समावद्वसतु। ❀नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्ययाः❀। नूत्नम्। नूतनम्। नवीनम्। ❀नश्च पुराणे प्रात्❀। पुराणे वर्त्तमानात् प्रशब्दान्नः प्रत्ययो भवति, चकारात् त्नप्तनप्खाश्च। प्रणम्। प्रत्नम्। प्रतनम्। प्रीणम्। ❀भागरूपनामभ्यो धेयः प्रत्ययो वक्तव्यः❀। भागधेयम्। रूपधेयम्। नामधेयम्। ❀मित्राच्छन्दसि❀। मित्रधेयं यतस्व। ❀आग्नीध्रसाधारणादञ्❀। आग्नीध्रम्। साधारणम्। स्त्रियां ङीप्-आग्नीध्री। साधारणी। वाप्रकरणाच्च विकल्प्यन्त एतान्युपसंख्यानानि, तेन यथाप्राप्तमपि भवति। आग्नीध्रा शाला, साधारणा भूरिति। ❀अयवसमरुद्भ्यां छन्दस्यञ्वक्तव्यः❀। आयवसे रमन्ते(२)। मारुतं शर्द्धः॥

## अतिथेर्ञ्यः ॥ २६ ॥

तादर्थ्य इत्येव। अतिथिशब्दाच्चतुर्थीसमर्थात्तादर्थ्येऽभिधेये ञ्यः प्रत्ययो भवति। अतिथये इदम् आतिथ्यम्॥

## देवात्तल् ॥ २७ ॥

तादर्थ्यं इति निवृत्तम्। देवशब्दात् स्वार्थे तल् प्रत्ययो भवति। देव एव देवता॥

## अवेः कः ॥ २८ ॥

अविशब्दात् स्वार्थे कः प्रत्ययो भवति। अविरेवाविकः॥

---

आमुष्यायणा—आमुष्यायण तथा आमुष्यपुत्रिका शब्दों में फक् तथा वुञ् प्रत्यय के कारण प्राप्त विभक्तिलोप नहीं होता है—ऐसा समझना चाहिए।

समशब्दात्—सम शब्द से आवतु प्रत्यय समझना चाहिए।

नवस्य—नव शब्द के स्थान में नू आदेश तथा उससे विकल्प से त्नप्, तनप् तथा ख प्रत्ययों का विधान अवगन्तव्य है।

नश्च—पुराणार्थक प्रशब्द से न प्रत्यय भी होता है और त्नप्, तनप् तथा ख प्रत्यय भी—ऐसा समझना चाहिए।

भागरूप—भाग, रूप तथा नामन् शब्दों से धेय प्रत्यय समझना चाहिए।

मित्राच्छन्दसि—मित्र शब्द से भी स्वार्थ में धेय-प्रत्यय छन्दोविषय में अवगन्तव्य है।

आग्नीध्र—आग्नीध्र तथा साधारण शब्दों से स्वार्थ में अञ् प्रत्यय समझना चाहिए।

अयवस—अयवस तथा मरुत् शब्दों से भी छन्दोविषय में अञ् प्रत्यय समझना चाहिए।

अतिथेर्ञ्यः—चतुर्थीसमर्थ अतिथि शब्द से तादर्थ्य में ञ्य प्रत्यय होता है।

देवात्तल्—देवशब्द से स्वार्थ में तल् प्रत्यय होता है।

अवेः कः—अवि शब्द से स्वार्थ में कप्रत्यय होता है।

---

(१) अमुष्यशब्दात् नडादिभ्यः फक् इति फप्रत्यये अमुष्यपुत्रशब्दाच्च द्वन्द्वमनोज्ञादिभ्यश्चेति मनोज्ञादित्वाद्वुञ् प्रत्यये प्राप्तस्य अदस्शब्दोत्तरविभक्तिलुकोऽनेन अलुक् उपसंख्यायते। (श्रीना०)

(२) आयवसः सामः, मारुतः पर्वत इति पाठान्तरम्।

## यावादिभ्यः कन् ॥ २९ ॥

याव इत्येवमादिभ्यः स्वार्थे कन् प्रत्ययो भवति । याव एव यावकः । मणिकः । याव । मणि । अस्थि । चण्ड । पीतस्तम्ब । ऋतावुष्णशीते । पशौ लूनवियाते । अणु निपुणे । पुत्र कृत्रिमे । स्नात वेदसमाप्तौ । शून्ये रिक्ते । दान कुत्सिते । तनु सूत्रे । ईयसश्च, श्रेयस्कः । ज्ञात । कुमारीक्रीडनकानि च । यावादिः ॥

## लोहितान्मणौ ॥ ३० ॥

लोहितशब्दान्मणौ वर्त्तमानात्स्वार्थे कन् प्रत्ययो भवति । लोहितो मणिः लोहितकः । मणाविति किम् ? लोहितः ॥

## वर्णे चानित्ये ॥ ३१ ॥

अनित्ये वर्णे वर्त्तमानाल्लोहितशब्दात् स्वार्थे कन् प्रत्ययो भवति । लोहितकः कोपेन । लोहितकः पीडनेन । अनित्य इति किम् ? लोहितो गौः । लोहितं रुधिरम् । ❀लोहिताल्लिङ्गबाधनं वा वक्तव्यम्❀ । लोहितिका कोपेन । लोहिनिका कोपेन ॥

## रक्ते ॥ ३२ ॥

लाक्षादिना रक्ते यो लोहितशब्दस्तस्मात् कन् प्रत्ययो भवति । लोहितकः कम्बलः । लोहितकः पटः । लिङ्गबाधनं वेत्येव । लोहितिका । लोहिनिका शाटी ॥

## कालाच्च ॥ ३३ ॥

वर्णे चानित्ये रक्त इति द्वयमप्यनुवर्त्तते । कालशब्दादनित्ये वर्त्तमानाद्रक्ते च कन् प्रत्ययो भवति । कालकं मुखं वैलक्ष्येण । रक्ते-कालकः पटः, कालिका शाटी ॥

## विनयादिभ्यष्ठक् ॥ ३४ ॥

विनय इत्येवमादिभ्यः स्वार्थे ठक् प्रत्ययो भवति । विनय एव वैनयिकः । सामयिकः । विभाषाग्रहणेन विकल्प्यते प्रत्ययः । विनय । समय । ❀ उपायाद् ह्रस्वत्वं च❀ । औपयिकः । संगति । कथंचित् । अकस्मात् । समयाचार । उपचार । समाचार । व्यवहार । संप्रदान । समुत्कर्ष । समूह । विशेष । अत्यय(१) । विनयादिः ॥

---

यावादिभ्यः—याव आदि शब्दों से स्वार्थ में कन् प्रत्यय होता है ।

लोहितान्मणौ—मणिप्रतिपादक लोहित शब्द से स्वार्थ में कन् प्रत्यय होता है ।

वर्णे—अनित्य वर्ण ( रङ्ग ) अर्थ में वर्तमान लोहित शब्द से भी स्वार्थ में कन् प्रत्यय होता है ।

लोहितात्—लोहित शब्द से लिङ्गाधिकार-विहित प्रत्यय का विधान विकल्प से बाधित हो जाता है—ऐसा समझना चाहिए ।

रक्ते—लाक्षादिरक्त अर्थ में वर्तमान लोहित शब्द से कन् प्रत्यय होता है ।

कालाच्च—अनित्य वर्ण तथा रक्त ( रंगा हुआ ) अर्थों में वर्तमान काल शब्द से भी कन् प्रत्यय होता है ।

विनयादिभ्यष्ठक्—विनय आदि शब्दों से स्वार्थ में ठक् प्रत्यय होता है ।

उपायात्—उपाय शब्द से ठक् प्रत्यय तथा ह्रस्वादेश भी अवगन्तव्य है ।

---

( १ ) अस्थि, कण्डु, एतौ शब्दावत्र गणेऽधिकौ कुत्रचित् ।

## वाचो व्याहृतार्थायाम् ॥ ३५ ॥

व्याहृतः प्रकाशितोऽर्थो यस्यास्तस्यां वाचि वर्त्तमानाद्वाचूशब्दात् स्वार्थे ठक् प्रत्ययो भवति । पूर्वमन्येनोक्तार्थत्वात् संदेशवाग्(१) व्याहृतार्थेत्युच्यते । वाचिकं कथयति । वाचिकं श्रद्दधे । व्याहृतार्थायामिति किम् ? मधुरा वाग् देवदत्तस्य ॥

## तद्युक्तात् कर्मणोऽण् ॥ ३६ ॥

व्याहृतार्थया वाचा यत्कर्म युक्तं तदभिधायिनः कर्मन्शब्दात् स्वार्थेऽण् प्रत्ययो भवति । कर्मैव कार्मणम् । वाचिकं श्रुत्वा तथैव यत्कर्म(२) क्रियते तत्कार्मणमित्युच्यते । ॐअण्प्रकरणे कुलालवरुडनिषादकर्मारचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानम्ॐ । कुलाल एव कौलालः । वारुडः । नैषादः । कार्मारः(३) । चाण्डालः । मैत्रः । आमित्रः । ॐसान्नाय्यानुजावरानुषूकानुचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिस्कृताग्रायणाग्रहायणसान्तपनाःॐ । एतेऽणन्ताः स्वार्थिकाश्छन्दसि भाषायां चेष्यन्ते ॥

## ओषधेरजातौ ॥ ३७ ॥

ओषधिशब्दादजातौ वर्त्तमानात् स्वार्थेऽण् प्रत्ययो भवति । औषधं पिबति । औषधं ददाति । अजाताविति किम् ? ओषधयः क्षेत्रे रूढा भवन्ति ॥

## प्रज्ञादिभ्यश्च ॥ ३८ ॥

प्रजानातीति प्रज्ञः । प्रज्ञ इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थे ऽण् प्रत्ययो भवति । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । यस्यास्तु प्रज्ञा विद्यते सा प्राज्ञा भवति । "प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः" विदन्नित्यत्र पठ्यते । शत्रन्तस्य विदेर्ग्रहणं, "विदेः शतुर्वसुः" इत्यत एव ज्ञापकात् पाक्षिको वस्वादेशः । अन्यतरस्यांग्रहणं वा तत्रानुवर्त्तते । "तुह्योस्तातङाशिष्यन्यतरस्याम्" इति । प्रज्ञ । वणिक् । उशिक् । उष्णिक् । प्रत्यक्ष । विद्वस् । विदन् । षोडन् । षोडश । विद्या । मना । ॐश्रोत्र शरीरेॐ श्रोत्रम् । ॐजुहृत्(४) कृष्णमृगेॐ चिकीर्षत् । चोर । शक । योध ।

---

वाचो—प्रकाशितार्थकवचन ( सन्देशवाक् ) के अर्थ में प्रयुज्यमान वाच् शब्द से स्वार्थ में ठक् प्रत्यय होता है ।

तद्युक्तात्—व्याहृतार्थकवचनसम्बद्ध कर्म के अभिधायक कर्मन् शब्द से स्वार्थ में अण् प्रत्यय होता है ।

अण् प्रकरणे—अण् प्रत्यय के प्रकरण में कुलाल, वरुड, निषाद, कर्मार, चण्डाल, मित्र तथा अमित्र शब्दों से भी अण् प्रत्यय का विधान समझना चाहिए ।

सान्नाय्या—सान्नाय्य आदि स्वार्थिक अण् प्रत्ययान्त शब्दों का साधुत्व समझना चाहिए ।

ओषधेरजातौ—जातिभिन्न अर्थ में वर्तमान ओषधि शब्द से स्वार्थ में अण् प्रत्यय होता है ।

प्रज्ञादिभ्यश्च—प्रज्ञा आदि शब्दों से स्वार्थ में अण् प्रत्यय होता है ।

श्रोत्र—शरीरार्थवाची श्रोत्र शब्द से अण् प्रत्यय समझना चाहिए ।

जुहृत्—कृष्णमृग अर्थ में प्रकृति के वर्तमान होने पर जुहृत् शब्द से अण् प्रत्यय होता है ।

---

( १ ) लेख्यादिना निर्णीतर्थे प्रवर्त्तमाना वाक् व्याहृतार्थेति व्याख्यान्तरम् । ( श्रीना० )

( २ ) अत्र कर्मन्शब्दादेव प्रत्ययः इत्यत्र व्याख्यानमेव शरणम् ( श्रीना० )

( ३ ) बहुषु पुस्तकेषु वार्तिके कर्मार इति तदुदाहरणे च कार्मार इति नास्ति ।

( ४ ) अत्र केचन जुहृदिति पृथक्कृत्य 'कृष्ण मृगे' इति पठन्ति व्याचक्षते च—मृगेऽर्थे वर्त्तमानात् कृष्णशब्दात् अण् भवति—इति । यथा—कार्ष्णो मृगः । तत्र जुहृत् शब्दादण्विधिर्न प्रतिषिध्यते इति बोध्यम् । ( श्रीना० )

वक्षस्(१)। धूर्त्त। वस्। पृत्। मरुत्। क्रुञ्। राजा। सत्वन्तु। दशार्ह। वयस्। आतुर(२)। रक्षस्। पिशाच। अशनि। कार्षापण। देवता। बन्धु। प्रज्ञादिः॥

## मृदस्तिकन् ॥ ३९ ॥

मृच्छब्दात्स्वार्थे तिकन् प्रत्ययो भवति। विकल्पः सर्वत्रानुवर्त्तते। मृदेव मृत्तिका।

## सस्नौ प्रशंसायाम् ॥ ४० ॥

प्रशंसोपाधिकेऽर्थे वर्त्तमानात् मृच्छब्दात्स स्न इत्येतौ प्रत्ययौ भवतः। रूपपोऽपवादः। प्रशस्ता मृत् मृत्सा, मृत्स्ना। नित्यश्चायं प्रत्ययः, उत्तरसूत्रेऽन्यतरस्यांग्रहणात्॥

## बृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ॥ ४१ ॥

प्रशंसायामित्येव। बृकज्येष्ठाभ्यां प्रशंसोपाधिकेऽर्थे वर्त्तमानाभ्यां यथासंख्यं तिल्तातिलौ प्रत्ययौ भवतश्छन्दसि विषये। रूपपोऽपवादः। बृकतिः। ज्येष्ठतातिः॥

## बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ४२ ॥

बह्वर्थादल्पार्थाच्च कारकाभिधायिनः शब्दाच्छस् प्रत्ययो भवति अन्यतरस्याम्। विशेषानभिधानाच्च सर्वं कर्मादिकारकं गृह्यते। बहूनि ददाति बहुशो ददाति। अल्पं ददाति अल्पशो ददाति। बहुभिर्ददाति बहुशो ददाति। अल्पेन, अल्पशः। बहुभ्यः, बहुशः। अल्पाय, अल्पशः, इत्येवमाद्युदाहार्यम्। बह्वल्पार्थादिति किम्? गां ददाति, अश्वं ददाति। कारकादिति किम्? बहूनां स्वामी, अल्पानां स्वामी। अर्थग्रहणात्पर्यायेभ्योऽपि भवति-भूरिशो ददाति, स्तोकशो ददाति। ॐ(३)बह्वल्पार्थान्मङ्गलामङ्गलवचनम्ॐ।

---

मृदस्तिकन्—मृत् शब्द से स्वार्थ में तिकन् प्रत्यय होता है।

सस्नौ—मृत् शब्द से प्रशंसा अर्थ में स तथा स्न प्रत्यय होते हैं।

बृकज्येष्ठाभ्याम्—बृक तथा ज्येष्ठ शब्दों से प्रशंसार्थ में क्रमशः तिल् तथा तातिल् प्रत्यय होते हैं छन्दोविषय में।

बह्वल्पर्थात्—बह्वर्थक तथा अल्पार्थक कारक के वाचक शब्दों से विकल्प से शस् प्रत्यय होता है।

बह्वल्पार्थान्मङ्गला—मङ्गल अर्थ में बहुशब्द से और अमङ्गल अर्थ में अल्प शब्द से प्रत्यय का विधान समझना चाहिए।

---

(१) चक्षस् इति पाठान्तरम्।

(२) असुर इति पाठान्तरम्।

(३) अत्र 'बहुशब्दात् मङ्गलार्थे प्रत्ययः, अल्पशब्दाच्च अमङ्गलार्थे इति यथासंख्यमन्वयो बोध्यः। अत एव 'यत्र मङ्गलं गम्यते तत्र अयम्प्रत्यय इष्यते' इति वृत्तेः परतात् 'बहुशब्दात्' इति योज्यम्। 'अल्पशो ददाति' इत्यतः पूर्वं च 'अल्पार्थाच्च यत्र अमङ्गलं गम्यते तत्र प्रत्यय इष्यते' इत्येतावान् ग्रन्थोऽपेक्षितः। स च लेखकादिप्रमादात् यथासंख्यान्वयस्य स्फुटत्वेन वा नास्तीति प्रतीयते। यथासंख्यान्वयश्च भाष्ये स्पष्टमुक्तः—

"बह्वल्पान्मर्थाङ्गलामङ्गलवचनम् कर्त्तव्यम्। बहुशो देहि। अनिष्टेषु श्राद्धादिषु मा भूत्, इष्टेषु प्राशित्रादिषु यथा स्यात्। अल्पशो देहि। इष्टेषु प्राशित्रादिषु मा भूत्। अनिष्टेषु श्राद्धादिषु यथा स्यात्।" इति। अत एव सिद्धान्तकौमुद्यामपि अस्य वार्त्तिकस्य प्रत्युदाहरणे अनिष्टे बहुशब्दाच्छस्प्रत्ययाभावः इष्टे च अल्पशब्दात्प्रत्ययाभाव उक्तः—"नेह—बहूनि ददात्यनिष्टेषु, अल्पं ददात्याभ्युदयिकेषु" इति। अत एव आशिकोपलब्धवृत्तिपाठमवलम्ब्य प्रवृत्तं न्यासहरदत्तादिग्रन्थमाश्रित्य यदुक्तं तत्त्वबोधिन्यादौ—मूलपुस्तके तु "मङ्गलामङ्गलवचनम्" इति प्रायेण पठ्यते, तत्र अमङ्गलग्रहणं वृथेत्याहुः इति तच्चिन्त्यम्। (श्रीना०)

यत्र मङ्गलं गम्यते तत्रायं प्रत्यय इष्यते। बहुशो ददातीत्याभ्युदयिकेषु कर्मसु। अल्पशो ददातीत्यनिष्टेषु कर्मसु।

## संख्यैकवचनाच्च वीप्सायाम् ॥ ४३ ॥

संख्यावाचिभ्यः प्रातिपदिकेभ्य एकवचनाच्च वीप्सायां द्योत्यायां शस् प्रत्ययो भवति अन्यतरस्याम्। द्वौ द्वौ मोदकौ ददाति द्विशः। त्रिशः। एकवचनात्खल्वपि–कार्षापणं कार्षापणं ददाति कार्षापणशः। माषशः। पादशो ददाति। एकोऽर्थं उच्यते येन तदेकवचनम्। कार्षापणादयश्च परिमाणशब्दा वृत्तावेकार्था एव भवन्ति। संख्यैकवचनादिति किम्? घटं घटं ददाति। वीप्सायामिति किम्? द्वौ ददाति। कार्षापणं ददाति। कारकादिष्वेव। द्वयोर्द्वयोः। कार्षापणस्य कार्षापणस्य स्वामी॥

## प्रतियोगे पञ्चम्यास्तसिः ॥ ४४ ॥

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः प्रत्ययो भवति। प्रद्युम्नो वासुदेवतः प्रति। अभिमन्युरर्जुनतः प्रति। वाग्रहणात्तु वृत्तेर्विकल्पेन भवति, वासुदेवादर्जुनादित्यपि भवति। तसिप्रकरणे॥ आद्यादिभ्य उपसंख्यानम्॥। आदितः। मध्यतः। पार्श्वतः। पृष्ठतः। आकृतिगणश्चायम्॥

## अपादाने चाहीयरुहोः ॥ ४५ ॥

अपादाने या पञ्चमी तस्याः पञ्चम्या वा तसिः प्रत्ययो भवति तच्चेदपादानं हीयरुहोः सम्बन्धि न भवति। ग्रामत आगच्छति। ग्रामात्। चोरतो बिभेति। चोरात्। अध्ययनतः पराजयते। अध्ययनात्। अहीयरुहोरिति किम्? सार्थाद्धीयते। पर्वतादवरोहति। हीयते इति विकारनिर्देशो जहातेः प्रतिपत्त्यर्थः। जिहीतेर्मा भूत्। भूमित उज्जिहीते। भूमेरुज्जिहीते। कथं मन्त्रो हीनः स्वरतो वर्णतो वेति? नैषा पञ्चमी। किं तर्हि, तृतीया। स्वरेण वर्णेन वा हीन इत्यर्थः(१)॥

## अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि(२) तृतीयायाः ॥ ४६ ॥

अतिक्रम्य ग्रहोऽतिग्रहः। अचलनमव्यथनम्। क्षेपो निन्दा। अतिग्रहादिविषये या या तृतीया तदन्ताद्वा तसिः प्रत्ययो भवति सा चेत्कर्त्तरि न भवति। वृत्तेनातिगृह्यते वृत्ततोऽतिगृह्यते। चारित्रेणातिगृह्यते चारित्रतोऽतिगृह्यते। सुष्ठुवृत्तवानन्यानतिक्रम्य वृत्तेन गृह्यत इत्यर्थः। अव्यथने—वृत्तेन न व्यथते वृत्ततो न व्यथते। चारित्रेण न व्यथते चारि-

---

संख्यैकवचनाच्च—संख्यावाचक प्रातिपदिक तथा एकार्थवाचक शब्दों से वीप्सा के द्योतनार्थ विकल्प से शस् प्रत्यय होता है।

प्रतियोगे—प्रति इस कर्मप्रवचनीय के योग में विहित पञ्चमी से तसि प्रत्यय होता है।

आद्यादिभ्यः—आदि, मध्य प्रभृति शब्दों से भी विहित पञ्चमी से तसि प्रत्यय समझना चाहिए।

अपादाने—अपादानार्थक पञ्चमी से भी तसि प्रत्यय होता है यदि वह अपादान 'हीय' तथा 'रुह' से सम्बद्ध न हो।

अतिग्रहा—अतिगृह, अध्ययन तथा निन्दा के अर्थ में विहित तृतीया से विकल्प से तसि-प्रत्यय होता है यदि वह तृतीया कर्ता में विहित न हुई हो।

---

(१) आद्यादित्वात्तसिरिति पदपञ्जर्यां कैयटः। (श्रीना०)
(२) इयं हि तृतीया हेतौ करणे वा बोध्या। (श्रीना०)

व्रतो न व्यथते। वृत्तेन चलतीत्यर्थः। क्षेपे-वृत्तेन क्षिप्तो वृत्ततः क्षिप्तः। चारित्रेण क्षिप्तः चारित्रतः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः। अकर्त्तरीति किम्? देवदत्तेन क्षिप्तः॥

## हीयमानपापयोगाच्च ॥ ४७ ॥

अकर्त्तरि तृतीयाया इत्येव। हीयमानेन पापेन च योगो यस्य तद्वाचिनः शब्दात् परा या तृतीया विभक्तिरकर्त्तरि तदन्ताद्वा तसिः प्रत्ययो भवति। वृत्तेन हीयते, वृत्ततो हीयते। चरित्रेण हीयते, चारित्रतो हीयते। पापयोगात्—वृत्तेन पापः, वृत्ततः पापः। चारित्रेण पापः, चारित्रतः पापः। क्षेपस्याविवक्षायां तत्त्वाख्यायामिदमुदाहरणम्। क्षेपे हि पूर्वेणैव सिद्धम्। अकर्त्तरीत्येव—देवदत्तेन हीयते॥

## षष्ठ्या व्याश्रये ॥ ४८ ॥

नानापक्षसमाश्रयो व्याश्रयः। व्याश्रये गम्यमाने षष्ठ्यन्ताद् वा तसिः प्रत्ययो भवति। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्। षष्ठी चात्र पक्षापेक्षैव। अर्जुनस्य पक्षे, कर्णस्य पक्ष इत्यर्थः। व्याश्रय इति किम्? वृक्षस्य शाखा॥

## रोगाच्चापनयने ॥ ४९ ॥

रोगो व्याधिः। तद्वाचिनः शब्दाद्या षष्ठी विभक्तिस्तदन्ताद्वा तसिः प्रत्ययो भवति अपनयने गम्यमाने। अपनयनं प्रतीकारः, चिकित्सेत्यर्थः। प्रवाहिकातः कुरु। कासतः कुरु। छर्दिकातः कुरु। प्रतीकारमस्याः कुर्वित्यर्थः। अपनयन इति किम्? प्रवाहिकायाः प्रकोपनं कुरु॥

## अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्त्तरि च्विः ॥ ५० ॥

कारणस्य विकाररूपेणाभूतस्य तदात्मना भावोऽभूततद्भावः। संपद्यते कर्त्ता संपद्यकर्त्ता। संपद्यकर्त्तरि वर्त्तमानात् प्रातिपदिकादभूततद्भावे गम्यमाने कृभ्वस्तिभिर्धातुभिर्योगे च्विः प्रत्ययो भवति। अशुक्लः शुक्लः संपद्यते, तं करोति शुक्लीकरोति। मलिनं शुक्लीकरोति। शुक्लीभवति। शुक्ली स्यात्। घटीकरोति मृदम्। घटी भवति। घटी स्यात्। अभूततद्भाव इति किम्? शुक्लं करोति। नात्र प्रकृतिर्विवक्षिता। कृभ्वस्तियोग इति किम्? अशुक्लः शुक्लो जायते। संपद्यकर्त्तरीति किम्, यावता अभूततद्भावसामर्थ्याल्लभ्यत एव संपद्यकर्तृत्वम्? कारकान्तरसंपत्तौ मा भूत्—अदेवगृहे देवगृहे संपद्यते। देवगृहस्याधेयविशेषसंबन्धेनाभूततद्भावः सत्त्वाधिकरणस्य न कर्त्तुरिति॥

## अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ॥ ५१ ॥

अरुःप्रभृतीनामन्तस्य लोपो भवति च्विश्च प्रत्ययः। अत्र सर्वविशेषणसम्बन्धात् पूर्वेणैव प्रत्ययः सिद्धो लोपमात्रार्थं आरम्भः। अनरुररुः सम्पद्यते, तं करोति, अरूकरोति, अरू-

---

हीयमान—हीयमान तथा पाप से सम्बद्ध पदार्थों के वाचक शब्दों से विहित कर्तृतृतीयाभिन्न तृतीया से भी विकल्प से तसि प्रत्यय होता है।

षष्ठ्या व्याश्रये—व्याश्रय के गम्यमान होने पर षष्ठ्यन्त से तसिप्रत्यय विकल्प से होता है।

रोगाच्चा—व्याधिवाचक षष्ठ्यन्त्य शब्द से अपनयन ( =चिकित्सा ) अर्थ में तसिप्रत्यय होता है।

अभूततद्भावे—सम्पूर्वक पद धातु के कर्त्ता के प्रतिपादक प्रातिपदिक से कृ, भू एवम् अस् धातुओं के योग में च्वि प्रत्यय होता है अभूततद्भाव अर्थ में।

अरुर्मनश्चक्षुश्चेतो—पूर्वसूत्रोक्त परिस्थिति में अरुस्, मनस्, चक्षुस्, चेतस्, रहस् तथा रजस् शब्दों से च्वि प्रत्यय तथा प्रकृति के अन्त्य सकार का लोप भी हो जाता है।

भवति, अरूस्यात् । मनस्–उन्मनीकरोति, उन्मनीभवति, उन्मनीस्यात्। चक्षुस्–उच्चक्षूकरोति, उच्चक्षूभवति, उच्चक्षूस्यात् । चेतस्–विचेतीकरोति, विचेतीभवति, विचेतीस्यात् । रहस्–विरहीकरोति, विरहीभवति, विरहीस्यात्। रजस्–विरजी करोति, विरजीभवति, विरजीस्यात्॥

## विभाषा साति कार्त्स्न्ये ॥ ५२ ॥

अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्त्तरीति सर्वमनुवर्त्तते । अस्मिन् विषये विभाषा सातिः प्रत्ययो भवति कार्त्स्न्ये गम्यमाने। यदि प्रकृतिः कृत्स्नां विकारात्मतामापद्यत इत्यर्थः । अग्निसाद्भवति शस्त्रम्। अग्नीभवति शस्त्रम् । उदकसाद्भवति लवणम्। उदकीभवति लवणम्। कार्त्स्न्ये इति किम्? एकदेशेन पटः शुक्लीभवति। विभाषाग्रहणं च्वेः प्रापकम्। प्रत्ययविकल्पस्तु महाविभाषयैव सिद्धः॥

## अभिविधौ सम्पदा च ॥ ५३ ॥

अभिविधिरभिव्याप्तिः। अभिविधौ गम्यमाने च्विविषये सातिः प्रत्ययो भवति सम्पदा योगे, चकारात् कृभ्वस्तिभिश्च। विभाषाग्रहणानुवृत्तेश्च्विरप्यभ्यनुज्ञायते। स च कृभ्वस्तियोग एव भवति न सम्पदा। अग्निसात् सम्पद्यते। अग्निसाद्भवति। उदकसात् सम्पद्यते। उदकसाद्भवति लवणम् । अग्नीभवति। उदकीभवति। अथाभिविधेः कार्त्स्न्यस्य च को विशेषः? यत्रैकदेशेनापि सर्वा प्रकृतिर्विकारमापद्यते सोऽभिविधिः। यथाऽस्यां सेनायामुत्पातेन सर्वं शस्त्रमग्निसात् सम्पद्यते। वर्षासु सर्वं लवणमुदकसात् सम्पद्यत इति। कार्त्स्न्यं तु सर्वात्मना द्रव्यस्य विकाररूपापत्तौ भवति॥

## तदधीनवचने ॥ ५४ ॥

अभूततद्भाव इति निवृत्तम्, अर्थान्तरोपादानात्। कृभ्वस्तियोगे सम्पदा चेति वर्तते। तदधीनं तदायत्तं तत्स्वामिकमित्यर्थः। स्वामिसामान्यमीशितव्यसामान्यं च तदधीनशब्देन निर्दिश्यते। स्वामिविशेषवाचिनः प्रातिपदिकादीशितव्येऽभिधेये सातिः प्रत्ययो भवति कृभ्वस्तिभिः सम्पदा च योगे। राजाधीनं करोति–राजसात्करोति, राजसाद्भवति राजसात्स्यात्, राजसात्सम्पद्यते। ब्राह्मणसात्करोति। ब्राह्मणसाद्भवति। ब्राह्मणसात्स्यात्। ब्राह्मणसात्संपद्यते॥

## देये त्रा च ॥ ५५ ॥

तदधीनवचन इत्यनुवर्त्तते। तस्य विशेषणं देयग्रहणम्। दातव्यं देयं, तदधीने देये त्रा प्रत्ययो भवति चकारात् सातिश्च कृभ्वस्तिभिः सम्पदा च योगे। ब्राह्मणेभ्यो देयमिति यद्विज्ञातं तद्यदा तेषां समर्पणेन तदधीनं क्रियते तदा त्रा प्रत्ययः। ब्राह्मणाधीनं देयं करोति

---

विभाषा—'अभूततद्भावे०' सूत्रोक्त परिस्थिति में यदि कृत्स्नता की प्रतीति चिकीर्षित हो तो साति प्रत्यय होता है विकल्प से।

अभिविधौ—अभिविधि के गम्यमान होने पर च्विप्रत्यय की परिस्थिति में साति प्रत्यय होता है सम् पूर्वक पद, कृ, भू तथा अस् धातुओं के योग में।

तदधीन—स्वामिविशेषवाचक प्रातिपदिक से ईशितव्य (=स्व) के अभिधेय होने पर (अर्थात् अधीनीकरण अर्थ में) सम् पूर्वकपद, कृ, भू, तथा अस् धातुओं के योग में साति प्रत्यय होता है।

देये त्रा—देय पदार्थ के अधीनीकरण अर्थ में स्वामिवाचक शब्द से त्रा प्रत्यय भी होता है और साति प्रत्यय भी सम् पूर्वक पद्, कृ, भू तथा अस् धातुओं के योग में।

ब्राह्मणसात्करोति । ब्राह्मणत्रा भवति । ब्राह्मणत्रास्यात् । ब्राह्मणत्रा सम्पद्यते । देय इति किम् ? राजसाद्भवति राष्ट्रम् ॥

## देवमनुष्यपुरुषमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥ ५६ ॥

सातिर्निवृत्तः त्राप्रत्ययोऽनुवर्तते । देवादिभ्यः प्रातिपदिकेभ्यो द्वितीयासप्तम्यन्तेभ्यस्त्रा प्रत्ययो भवति बहुलम् । कृभ्वस्तिभिरिति नात्र सम्बध्यते । सामान्येन विधानम् । देवान् देवत्रा गच्छति । देवेषु वसति देवत्रावसति । मनुष्यान् गच्छति, मनुष्यत्रा गच्छति । मनुष्येषु वसति, मनुष्यत्रा वसति, एवमन्येऽप्युदाहार्याः—पुरुषान् गच्छति, पुरुषत्रा गच्छति । पुरुषेषु वसति, पुरुषत्रा वसति । पुरून् गच्छति, पुरुत्रागच्छति । पुरुषु वसति, पुरुत्रा वसति । मर्त्यान् वसति, मर्त्यत्रा वसति । बहुलवचनादन्यत्रापि भवति—बहुत्रा जीवतो मन इति ॥

## अव्यक्तानुकरणाद्द्व्यजवरार्द्धादनितौ डाच् ॥ ५७ ॥

यत्र ध्वनावकारादयो वर्णा विशेषरूपेण न व्यज्यन्ते सोऽव्यक्तः । तस्यानुकरणमव्यक्तानुकरणम् । द्व्यज् अवरार्द्धं यस्य तद् द्व्यजवरार्धम् । अवरशब्दोऽपकर्षे यस्यापकर्षे क्रियमाणे सुष्ठु न्यूनमर्धं द्व्यच्कं सम्पद्यते तस्मादव्यक्तानुकारणादनितिपराड्डाच् प्रत्ययो भवति । कृभ्वस्तियोग इत्यनुवर्त्तते । तस्य च द्विर्वचने कृते द्व्यजवरार्द्धम्, ततः प्रत्ययः । डाचि बहुलं द्वे भवत इति विषयसप्तमी । डाचि विवक्षिते द्विर्वचनमेव पूर्वं क्रियते पश्चात् प्रत्ययः । पटपटा करोति, पटपटा भवति, पटपटा स्यात् । दमदमा करोति, दमदमा भवति, दमदमा स्यात् । अव्यक्तानुकरणादिति किम् ? दृषत्करोति । द्व्यजवरार्द्धादिति किम् ? श्रत् करोति । अवरग्रहणं किम् ? खरटखरटा करोति । त्रपटत्रपटा करोति । अनिताविति किम् ? पटिति करोति । चकारः स्वरार्थः स्वरितबाधनार्थः—पटपटासि । अत्र "स्वरितो वाऽनुदात्ते पदादौ" इति स्वरितो न भवति । केचिद्द्व्यजवरार्ध्यादिति यकारं पठन्ति, स स्वार्थिको विज्ञेयः ॥

## कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ॥ ५८ ॥

द्वितीयतृतीयादिभ्यः शब्देभ्यः कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे नान्यत्र । पुनः कृञ्ग्रहणं भ्वस्त्योर्निवृत्त्यर्थम् । द्वितीया करोति । द्वितीयं कर्षणं विलेखनं करोतीत्यर्थः । तृतीया करोति । शम्बा करोति । अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषतीत्यर्थः । बीजा करोति । सह बीजेन विलेखनं करोतीत्यर्थः । कृषाविति किम् ? द्वितीयं करोति पदम् ॥

## संख्यायाश्च(१)गुणान्तायाः ॥ ५९ ॥

कृञ इत्यनुवर्त्तते, कृषाविति च । संख्यावाचिनः शब्दस्य गुणशब्दोऽन्ते = समीपे यत्र

---

देवमनुष्य—द्वितीयान्त तथा सप्तम्यन्त देव, मनुष्य, पुरुष, पुरु तथा मर्त्य शब्दों से बहुल करके त्रा प्रत्यय होता है ।

अव्यक्तानुकरणात्—द्वित्व करने के बाद जिसके आधे भाग में कम से कम दो स्वर हों वैसे अव्यक्तशब्दानुकरणवृत्ति प्रातिपदिकों से डाच् प्रत्यय होता है यदि 'इति' शब्द परवर्त्ती न हो ।

कृञो द्वितीय—द्वितीय, तृतीय, शम्ब तथा बीज शब्दों से कृषि अर्थ में डाच् प्रत्यय होता है 'कृञ्' धातुके योग होने पर ।

संख्यायाश्च—संख्यावाचकशब्दसमीपस्थ गुण शब्द से कृषि अर्थ में डाच् प्रत्यय होता है 'कृञ्' धातु के योग में ।

---

(१) गुणेति शब्दग्रहणम्, व्याख्यानात् । (श्रीना०)

सम्भवति सा संख्या गुणान्तेत्युच्यते, तादृशात् प्रातिपदिकात् कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे। द्विगुणं विलेखनं करोति क्षेत्रस्य द्विगुणाकरोति क्षेत्रम्। त्रिगुणाकरोति। कृषाविति किम्? द्विगुणां करोति रज्जुम्॥

## समयाच्च यापनायाम्॥ ६०॥

कृञ इत्येव। कृषाविति निवृत्तम्। कर्तव्यस्यावसरप्राप्तिः समयस्तस्यातिक्रमणं यापना। समयशब्दाद्यापनायां गम्यमानायां डाच् प्रत्ययो भवति कृञो योगे। समयाकरोति। समयं यापयति, कालक्षेपं करोतीत्यर्थः। यापनायामिति किम्? समयं करोति॥

## सपत्रनिष्पत्रादतिव्यथने॥ ६१॥

कृञ इत्येव। सपत्रनिष्पत्रशब्दाभ्यामतिव्यथने डाच् प्रत्ययो भवति कृञो योगे सति। अतिव्यथनमतिपीडनम्। सपत्राकरोति मृगं व्याधः। सपत्रं शरमस्य शरीरे प्रवेशयतीत्यर्थः। निष्पत्राकरोति। शरीराच्छरमपरपार्श्वे निष्क्रामयतीत्यर्थः। अतिव्यथन इति किम्? सपत्रं वृक्षं करोति जलसेचकः, निष्पत्रं वृक्षतलं करोति भूमिशोधकः॥

## निष्कुलान्निष्कोषणे॥ ६२॥

कृञ इत्येव। निष्कुलशब्दान्निष्कोषणे वर्त्तमानात् कृञो योगे डाच् प्रत्ययो भवति। निष्कोषणमन्तरवयवानां बहिर्निष्कासनम्। निष्कुलाकरोति पशून्। निष्कुष्णातीत्यर्थः। निष्कोषण इति किम्? निष्कुलान् करोति शत्रून्॥

## सुखप्रियादानुलोम्ये॥ ६३॥

सुखप्रियशब्दाभ्यामानुलोम्ये वर्त्तमानाभ्यां कृञो योगे डाच् प्रत्ययो भवति। आनुलोम्यमनुकूलता, आराध्यचित्तानुवर्त्तनम्। सुखाकरोति। प्रियाकरोति। स्वाम्यादेश्चित्तमाराधयतीत्यर्थः। सुखं प्रियं वा कुर्वन्नप्यानुलोम्येऽवस्थित एवमुच्यते। आनुलोम्य इति किम्? सुखं करोति, प्रियं करोत्यौषधपानम्॥

## दुःखात् प्रातिलोम्ये॥ ६४॥

कृञ इत्येव। दुःखशब्दात् प्रातिपदिकात् प्रातिलोम्ये गम्यमाने डाच् प्रत्ययो भवति कृञो योगे। प्रातिलोम्यं प्रतिकूलता, स्वाम्यादेश्चित्तपीडनम्। दुःखाकरोति भृत्यः। प्रातिलोम्य इति किम्? दुखं करोति कदन्नम्॥

## शूलात् पाके॥ ६५॥

कृञ इत्येव। शूलशब्दात् पाकविषये डाच् प्रत्यो भवति कृञो योगे। शूले पचति शूलाकरोति मांसम्। पाक इति किम्? शूलं करोति कदन्नम्॥

---

समयाच्च—यापना के गम्यमान होनेपर समय शब्द से डाच् प्रत्यय होता है कृञ् धातु के योग में।

सपत्र—कृञ् धातु के योग में सपत्र तथा निष्पत्र शब्दों से डाच् प्रत्यय होता है अत्यन्त व्यथा के गम्यमान होने पर।

निष्कुलात्—कृञ् धातु के योग में निष्कोषणार्थक निष्कुल शब्द से डाच् प्रत्यय होता है।

सुखप्रियात्—अनुकूलता में वर्त्तमान सुख तथा प्रिय शब्दों से कृञ् धातु के योग में डाच् प्रत्यय होता है।

दुःखात्—प्रतिकूलता अर्थ में वर्तमान दुःख शब्द से डाच् प्रत्यय होता है कृञ् धातु के योग रहने पर।

शूलात्—पाकविषय में वर्तमान शूल ( Iron-spit ) शब्द से कृञ् धातु के योग में डाच् प्रत्यय होता है।

## सत्यादशपथे ॥ ६६ ॥

कृञ इत्येव । सत्यशब्दादशपथे डाच् प्रत्ययो भवति कृञो योगे । सत्यशब्दोऽनृतप्रतिपक्षवचनः, कचित्तु शपथे च वर्त्तते—सत्येन शापयेद्विप्रमिति, तस्यायं प्रतिषेधः । सत्याकरोति वणिक् भाण्डम् । मयैतत्क्रेतव्यमिति तथ्यं करोति । अशपथ इति किम् ? सत्यं करोति ब्राह्मणः ॥

## मद्रात् परिवापणे ॥ ६७ ॥

कृञ इत्येव । मद्रशब्दात् परिवापणे डाच् प्रत्ययो भवति कृञो योगे । परिवापणं मुण्डनम् । मद्रशब्दो मङ्गलार्थः । मङ्गलं मुण्डनं करोति मद्राकरोति । ॐभद्राच्चेति वक्तव्यम्ॐ । भद्राकरोति नापितः कुमारम् । परिवापण इति किम् ? भद्रं करोति ॥

## समासान्ताः ॥ ६८ ॥

अधिकारोयम् । आपादपरिसमाप्तेर्ये प्रत्यया विहितास्ते समासस्यान्तावयवा एकदेशा भवन्ति, तद्ग्रहणेन गृह्यन्त इति वेदितव्यम् । प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः । उपराजम् । अधिराजम् । नाव्ययीभावादित्येष विधिर्भवति । अनश्चेति टच् । द्विपुरी, त्रिपुरीति । द्विगोरिति ङीब्भवति । कटकवलयिनी । शङ्खनूपुरिणी(१) । द्वन्द्वोपतापगर्ह्यादितीनिर्भवति । विधुरः । प्रधुरः । तत्पुरुषे तुल्येत्येष स्वरो भवति । उच्चैर्धुरः । बहुव्रीहौ प्रकृत्या पूर्वपदमित्येतद्भवति ॥

## न पूजनात् ॥ ६९ ॥

यान् शब्दानुपादाय समासान्ता विधीयन्ते, राजाहःसखिभ्यष्टजित्येवमादीन्, यदा ते पूजनात् पूजनवचनात्परे भवन्ति तदा समासान्तो न भवति । सुराजा । अतिराजा । सुगौः । अतिगौः । ॐपूजायां स्वतिग्रहणं कर्तव्यम्ॐ । इह मा भूत्—परमराजः, परमगव इति । ॐप्राग्बहुव्रीहिग्रहणं च कर्त्तव्यम्ॐ । बहुव्रीहौ सक्थ्यक्ष्णोरित्येवमादौ प्रतिषेधो न भवति । सुसक्थः । अतिसक्थः । स्वक्षः । अत्यक्षः ॥

## किमः क्षेपे ॥ ७० ॥

क्षेपे यः किंशब्दस्ततः परस्य समासान्तो न भवति । किंराजा यो न रक्षति । किंसखा

---

सत्यात्—कृञ् धातु का योग रहने पर अशपथार्थक सत्य शब्द से डाच् प्रत्यय होता है ।

मद्रात्—मङ्गलार्थक मद्र शब्द से मुण्डन अर्थ में डाच् प्रत्यय होता है कृञ् धातु का योग रहने पर ।

भद्राच्चेति—भद्र शब्द से भी मुण्डनार्थ में डाच् प्रत्यय समझना चाहिए यदि कृञ् धातु का योग हो तो ।

समासान्ताः—यहाँ से उत्तर पञ्चमाध्यायसमाप्तिपर्यन्त जितने प्रत्यय विहित होने वाले हैं उन्हे समास का अन्तिम अवयव समझना चाहिए ।

न पूजनात्—पूजनार्थकशब्दोत्तरवर्त्ती होने पर समासान्त प्रत्यय की प्रकृति के रूप में निर्दिष्ट शब्दों—राजन्, अहन् आदि—से समासान्त प्रत्यय नहीं होता है ।

पूजायाम्—पूजार्थक शब्दों में केवल सु तथा अति शब्दों का ही ग्रहण करना चाहिए ।

प्राग्बहुव्रीहि—बहुव्रीहौ सक्थ्यक्ष्णोः सूत्र से पहले तक ही न पूजनात् का क्षेत्र समझना चाहिए ।

किमः क्षेपे—क्षेपार्थक किम् शब्द से उत्तरवर्त्ती शब्द से समासान्त प्रत्यय नहीं होता है ।

---

(१) कोषनिषदिनी । स्रकृत्वचिनी इति पाठान्तरम् ।

योऽभिद्रुह्यति । किंगौर्यो न वहति । किं क्षेप इति समासः । क्षेप इति किम् ? कस्य राजा किंराजः । किंसखः । किंगवः ॥

### नञस्तत्पुरुषात् ॥ ७१ ॥

नञः परे वक्ष्यमाणा ये राजादयस्तदन्तात् तत्पुरुषात् समासान्तो न भवति । अराजा । असखा । अगौः । तत्पुरुषादिति किम् ? अनृचो माणवकः । अधुरं शकटम् ॥

### पथो विभाषा ॥ ७२ ॥

नञस्तत्पुरुषादिति वर्त्तते । नञः परो यः पथिन्शब्दस्तदन्तात्तत्पुरुषात् समासान्तो विभाषा न भवति । पूर्वेण नित्यः प्रतिषेधः प्राप्तो विकल्प्यते । अपथम् । अपन्थाः ॥

### बहुव्रीहौ संख्येये डजबहुगणात् ॥ ७३ ॥

संख्येये यो बहुव्रीहिर्वर्त्तते तस्मादबहुगणान्ताड्डच् प्रत्ययो भवति । संख्ययाव्यया-सन्नेति यो बहुव्रीहिस्तस्येदं ग्रहणम् । उपदशाः । उपविंशाः । उपत्रिंशाः । आसन्नदशाः । अदूरदशाः । अधिकदशाः । द्वित्राः । पञ्चषाः । पञ्चदशाः । संख्येय इति किम् ? चित्रगुः, शबलगुः । अबहुगणादिति किम् ? उपबहवः । उपगणाः । अत्र स्वरे विशेषः । *डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं कर्तव्यं निस्त्रिंशाद्यर्थम्* । निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि देवदत्तस्य । निश्चत्वारिंशानि यज्ञदत्तस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ॥

### ऋक्पूरब्धूःपथामानक्षे ॥ ७४ ॥

बहुव्रीहाविति न स्वर्यते । सामान्येन विधानम् । ऋक् पुर् अप् धुर् पथिन् इत्येव-मन्तानां समासानामकारः प्रत्ययो भवति समासान्तोऽक्षे न । सामर्थ्याद्धुर एतद्विशेषण-मृगादीनाञ्च भवति । अक्षसंबन्धिनी या धूस्तदन्तस्य न भवति । अनृचः । बह्वृचः । अर्द्धर्चः । पुर्—ललाटपुरम् । नान्दीपुरम् । अप्—द्वीपम् । अन्तरीपम् । समीपम् । धुर्—राजधुरा । महाधुरा । पथिन्—जलपथः । अनक्ष इति किम् ? अक्षस्य धूः अक्षधूः । दृढधूरक्षः । अनृचो माणवको ज्ञेयो बह्वृचश्चरणाख्यायाम् । अनृचो माणवकः । बह्वृचो ब्राह्मणः । अनृक्कं साम । बह्वृक्कं सूक्तमित्यत्र न भवति ॥

### अच् प्रत्यन्ववपूर्वात् सामलोम्नः ॥ ७५ ॥

प्रति अनु अव इत्येवंपूर्वात् सामान्ताल्लोमान्ताच्च समासादच् प्रत्ययो भवति । प्रति-सामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् ॥

---

नञस्तत्पुरुषात्—नञ्पूर्वक तत्पुरुष समास से समासान्त प्रत्यय नहीं होता है ।

पथो विभाषा—नञ्पूर्वक जो पथिन् शब्द तदन्त तत्पुरुष से समासान्त प्रत्यय का प्रतिषेध विकल्प से होता है ।

बहुव्रीहौ—संख्येयविहित बहुव्रीहि में बहुशब्दान्त एवम् गणशब्दान्त बहुव्रीहि को छोड़कर अन्य से समासान्त डच् प्रत्यय होता है ।

डच् प्रकरणे—'निस्त्रिंश' आदि शब्दों की सिद्धि के लिए तत्पुरुषसमासावयव संख्यावाचक उत्तरपद से भी डच् प्रत्यय का प्रतिपादन करना चाहिए ।

ऋक्पूरब्धूः—ऋक्शब्दान्त, पुर्शब्दान्त, अप्शब्दान्त, धुर्शब्दान्त तथा पथिन्शब्दान्त समास से समासान्त 'अ' प्रत्यय होता है, परन्तु अक्षार्थक धुर्शब्दान्त से नहीं ।

अच् प्रत्यन्वव—प्रतिपूर्वक, अनुपूर्वक तथा अवपूर्वक सामशब्दान्त, लोमशब्दान्त समासों से समासान्त अच् प्रत्यय होता है ।

कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥

कृष्णभूमः । पाण्डुभूमः । उदग्भूमः । पञ्चनदम् । सप्तगोदावरम् । नदीभिश्च इत्यव्ययीभावः । भूमेरपि संख्यापूर्वाया अच् प्रत्यय इष्यते । द्विभूमः प्रासादः । त्रिभूमः । दशभूमकं सूक्तम् । अन्यत्रापि च दृश्यते । पद्मनाभः । ऊर्णनाभः । दीर्घरात्रः । समरात्रः । अरात्रः । तदेतत् सर्वमिह अच् इति योगविभागं कृत्वा साधयन्ति ॥

अक्ष्णोऽदर्शनात् ॥ ७६ ॥

अजित्यनुवर्त्तते । दर्शनादन्यत्र योऽक्षिशब्दस्तदन्तादच् प्रत्ययो भवति । लवणाक्षम् । पुष्कराक्षम् । उपमितं व्याघ्रादिभिरिति समासः । अदर्शनादिति किम् ? ब्राह्मणाक्षि । कथं कवराक्षं गवाक्षमिति, अश्वादीनां सुखप्रच्छादनार्थं बहुच्छिद्रं कवराक्षं तेनापि हि दृश्यते गवाक्षेण च ? नैष दोषः । चक्षुःपर्यायवचनो दर्शनशब्दः, प्राण्यङ्गवचन इहाश्रीयते ॥

अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाऽक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ ७७ ॥

अच्प्रत्ययान्ता एते शब्दा निपात्यन्ते । समासे व्यवस्थापि निपातनादेव प्रतिपत्तव्या । आद्यास्त्रयो बहुव्रीहयः—अविद्यमानानि वा चत्वारि यस्य सोऽचतुरः । विगतानि चत्वारि यस्य स विचतुरः । शोभनानि चत्वारि यस्य स सुचतुरः । ततः परे एकादश द्वन्द्वाः—स्त्री च पुमांश्च स्त्रीपुंसौ । इह न भवति—स्त्रियाः पुमान् स्त्रीपुमानिति । धेनुश्च अनड्वांश्च धेन्वनडुहौ । ऋक्च साम च ऋक्सामे । वाक्च मनश्च वाङ्मनसे । अक्षि च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् । टिलोपो निपात्यते । पादौ च अष्ठीवन्तौ च पदष्ठीवम् । पादस्य पद्भावो निपात्यते । नक्तं च दिवा च नक्तंदिवम् । सप्तम्यर्थवृत्त्योरव्यययोः समासोऽपि निपातनादेव । रात्रौ च दिवा च रात्रिंदिवम् । पूर्वपदस्य मान्तत्वं निपात्यते । अहनि च दिवा च अहर्दिवम् । ननु च पर्यायावेतौ, कथमनयोर्द्वन्द्वः ? वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । एकोऽव्ययीभावः । साकल्ये—सरजसमभ्यवहरति । बहुव्रीहौ न भवति—सह रजसा सरजः पङ्कजमिति । ततस्तत्पुरुषः—निश्चितं श्रेयो निःश्रेयसम् । निःश्रेयस्कः पुरुष इत्यत्र न भवति । ततः षष्ठीसमासः—पुरुषस्यायुः पुरुषायुषम् । द्वन्द्वे न भवति—पुरुषश्च आयुश्च पुरुषायुषी । ततो द्विगू—द्वे आयुषी समाहृते द्व्यायुषम् । त्र्यायुषम् । इह न भवति—द्वयोरायुः द्व्यायुस्त्र्यायुरिति । ततो द्वन्द्वः—ऋक्च यजुश्च ऋग्यजुषस्योन्मुग्धस्य ऋग्यजुरुन्मुग्धः । जातादिपूर्वपदा उक्षन्शब्दान्तास्त्रयः कर्मधारयाः—जातोक्षः । महोक्षः । वृद्धोक्षः । बहुव्रीहौ न भवति—जातोक्षा ब्राह्मणः, महोक्षा, वृद्धोक्षेति । ततोऽव्ययीभावः—शुनः समीपमुपशुनम् । टिलोपाभावः संप्रसारणं च निपातनादेव । ततः सप्तमीसमासः—गोष्ठश्वः । ॐचतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्ॐ । त्रिचतुराः । उपचतुराः ॥

---

अक्ष्णोऽदर्शनात्—अदर्शनार्थक अक्षिशब्दान्त समास से समासान्त अच् प्रत्यय होता है ।

अचतुर—अच् प्रत्ययान्त अचतुर, विचतुर आदि शब्दों का निपातन होता है ।

चतुरोच्—चतुर्शब्दान्त अच्प्रत्ययान्त शब्दों के निपातन के प्रसङ्ग में त्रिचतुर तथा उपचतुर शब्दों का भी समावेश समझना चाहिए ।

## ब्रह्महस्तिभ्यां वर्च्चसः ॥ ७८ ॥

ब्रह्महस्तिभ्यां परो यो वर्च्चःशब्दस्तदन्तात् समासादच् प्रत्ययो भवति । ब्रह्मवर्च्चसम् । हस्तिवर्च्चसम् । ॐपल्यराजभ्यांचेति वक्तव्यम्ॐ। पल्यवर्च्चसम् । राजवर्च्चसम् ॥

## अवसमन्धेभ्यस्तमसः ॥ ७९ ॥

अव सम् अन्ध इत्येतेभ्यो यः परस्तमःशब्दस्तदन्तात् समासादच् प्रत्ययो भवति । अवतमसम् । सन्तमसम् । अन्धतमसम् ॥

## श्वसो वसीयःश्रेयसः ॥ ८० ॥

श्वसः परौ यौ वसीयःश्रेयःशब्दौ तदन्तात् समासादच् प्रत्ययो भवति । श्वोवसीयसम् । श्वःश्रेयसम् । मयूरव्यंसकादित्वात् समासः । स्वभावाच्चेह श्वःशब्द उत्तरपदार्थस्य प्रशंसामाशीर्विषयामाचष्टे । श्वःश्रेयसं ते भूयात् । शोभनं श्रेयस्ते भूयादित्यर्थः । श्वोवसीयसमित्यस्यैव पर्यायः ॥

## अन्ववतप्ताद्रहसः ॥ ८१ ॥

अनु अव तप्त इत्येतेभ्यः परो यो रहश्शब्दस्तदन्तात् समासादच् प्रत्ययो भवति । अनुरहसम् । अवरहसम् । तप्तरहसम् ॥

## प्रतेरुरसः सप्तमीस्थात् ॥ ८२ ॥

प्रतेः परो य उरःशब्दस्तदन्तात् समासादच् प्रत्ययो भवति स चेदुरःशब्दः सप्तमीस्थो भवति । सप्तम्यर्थे वर्त्तत इत्यर्थः । उरसि वर्त्तते—विभक्त्यर्थे अव्ययमिति समासः, प्रत्युरसम् । सप्तमीस्थादिति किम् ? प्रतिगतमुरः प्रत्युरः ॥

## अनुगवमायामे ॥ ८३ ॥

अनुगवमित्यच्प्रत्ययान्तं निपात्यते आयामेऽभिधेये । अनुगवं यानम् । यस्य चायाम इति समासः । आयाम इति किम् ? गवां पश्चादनुगु ॥

## द्विस्तावा त्रिस्तावा वेदिः ॥ ८४ ॥

द्विस्तावा त्रिस्तावेति निपात्यते वेदिश्चेदभिधेया भवति । अच्प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिस्ततो द्विगुणा वा त्रिगुणा वा कस्याञ्चिद्विकृतौ तत्रेदं निपातनम् । द्विस्तावा वेदिः । त्रिस्तावा वेदिः । वेदिरिति किम् ? द्विस्तावती, त्रिस्तावती रज्जुः ॥

## उपसर्गादध्वनः ॥ ८५ ॥

उपसर्गात्परो योऽध्वन्शब्दस्तदन्तात् समासात् अच् प्रत्ययो भवति । प्रगतोऽध्वानं

---

ब्रह्महस्तिभ्याम्—ब्रह्मवर्चस् तथा हस्तिवर्चस् शब्दों से समासान्त अच् प्रत्यय होता है ।

पल्य—पल्यवर्चस् तथा राजवर्चस् शब्दों से भी समासान्त अच् प्रत्यय का विधान समझना चाहिए ।

अवसम—अवतमस्, सन्तमस् तथा अन्धतमस् शब्दों से समासान्त अच् प्रत्यय होता है ।

श्वसो—श्वोवसीयस् तथा श्वःश्रेयस् शब्दों से समासान्त अच् प्रत्यय होता है ।

अन्वव—अनुरहस्, अवरहस् तथा तप्तरहस् शब्दों से समासान्त अच् प्रत्यय होता है ।

प्रतेरुरसः—प्रतिशब्दपूर्वक सप्तम्यर्थवृत्ती उरस्शब्दान्त समास से अच् प्रत्यय होता है ।

अनुगवमायामे—आयाम ( दैर्घ्य ) अर्थ में अच् प्रत्ययान्त अनुगव शब्द निपातित होता है ।

द्विस्तावा—वेदी अर्थ में अजन्त द्विस्तावा तथा त्रिस्तावा शब्दों का निपातन होता है ।

उपसर्गादध्वनः—उपसर्गादिक अध्वन्शब्दान्त समास से समासान्त अच् प्रत्यय होता है ।

प्राध्वो रथः। प्राध्वं शकटम्। निरध्वम्। प्रत्यध्वम्। उपसर्गादिति किम्? परमाध्वा, उत्तमाध्वा॥

## तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः॥ ८६॥

अङ्गुलिशब्दान्तस्य तत्पुरुषस्य संख्यादेरव्ययादेश्चाच् प्रत्ययो भवति। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। त्र्यङ्गुलम्। तद्धितार्थ इति समासः। प्रमाणे लो द्विगोर्नित्यमिति मात्रचो लोपः। अव्ययादेः—निर्गतमङ्गुलिभ्यो निरङ्गुलम्। अत्यङ्गुलम्। तत्पुरुषस्येति किम्? पञ्चाङ्गुलिः, अत्यङ्गुलिः पुरुषः। तत्पुरुषाधिकारश्च द्वन्द्वाच्चुदषहान्तादिति यावत्॥

## अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः॥ ८७॥

अहरादिभ्यः परो यो रात्रिशब्दस्तस्य तत्पुरुषस्याच् प्रत्ययो भवति चकारात् संख्यादेरव्ययादेश्च। अहर्ग्रहणं द्वन्द्वार्थम्। अहश्च रात्रिश्च अहोरात्रः। सर्वरात्रः। एकदेशे—पूर्वं रात्रेः पूर्वरात्रः, अपररात्रः। पूर्वपरावरेति समासः। संख्याता रात्रिः संख्यातरात्रः। विशेषणं विशेष्येणेति समासः। एवं पुण्या रात्रिः पुण्यरात्रः। संख्याव्ययादेः खल्वपि—द्वे रात्री समाहृते द्विरात्रः, त्रिरात्रः, अतिक्रान्तो रात्रिमतिरात्रः, नीरात्रः॥

## अह्नोऽह्न एतेभ्यः॥ ८८॥

राजाहःसखिभ्यष्टजिति वक्ष्यति। तस्मिन् परभूते अहन्नित्येतस्याह्न इत्ययमादेशो भवति एतेभ्य उत्तरस्य। संख्याव्ययादयः प्रक्रान्ताः सर्वनाम्ना प्रत्यवमृश्यन्ते। सामर्थ्याच्चाहःशब्दः पूर्वत्वेन नाश्रीयते। परिशिष्टानां ग्रहणम्। न ह्यहःशब्दात् परोऽहःशब्दः संभवति। संख्यायास्तावत्—द्वयोरह्नोर्भवः द्व्यह्नः। त्र्यह्नः। अव्ययात्—अहरतिक्रान्तः अत्यह्नः। निरह्नः। सर्वाह्णः। पूर्वाह्णः। अपराह्णः। संख्याताह्नः। पुण्यशब्दात् प्रतिषेधं वक्ष्यति॥

## न संख्यादेः समाहारे॥ ८९॥

संख्यादेस्तत्पुरुषस्य समाहारे वर्त्तमानस्याहःशब्दस्याह्नादेशो न भवति। पूर्वेण प्राप्तः प्रतिषिद्ध्यते। द्वे अहनी समाहृते द्व्यहः। त्र्यहः। समाहार इति किम्? द्वयोरह्नोर्भवो द्व्यह्नः। त्र्यह्नः। तद्धितार्थ इति समासे कृतेऽण आगतस्य द्विगोरिति लुक्॥

## उत्तमैकाभ्यां च॥ ९०॥

उत्तमैकशब्दाभ्यां च परस्याहःशब्दस्याह्न इत्ययमादेशो न भवति। उत्तमशब्दोऽन्त्यवचनः पुण्यशब्दमाचष्टे, पुण्यग्रहणमेव न कृतं वैचित्र्यार्थम्। पुण्याहः। एकाहः। केचित्तु

---

तत्पुरुष—संख्यावाचकादि तथा अव्ययादि अङ्गुलिशब्दान्त तत्पुरुष से समासान्त अच् प्रत्यय होता है।

अहः—अहर्-शब्दपूर्वपदक, सर्वशब्दपूर्वपदक, एकदेशवाचकशब्दपूर्वपदक, संख्यातशब्दपूर्वपदक तथा पुण्यपूर्वपदक रात्रिशब्दान्त तत्पुरुष से भी अच् प्रत्यय होता है।

अह्नोऽह्नः—सर्वशब्दपूर्वपदक, एकदेशवाचकशब्दपूर्वपदक, संख्यातपूर्वपदक, संख्यावाचकपूर्वपदक तथा अव्ययपूर्वपदक अहन्‌शब्दान्त समास के अवयव अहन् शब्द के स्थान में टच् प्रत्यय के परे अह्न आदेश हो जाता है।

न संख्यादेः—समाहारविहित संख्यापूर्वपदक तत्पुरुष के अवयव अहन् शब्द के स्थान में टच् के परे रहने पर भी अह्न आदेश नहीं होता है।

उत्तमैकाभ्याम्—उत्तम तथा एक शब्द से उत्तरवर्त्ती अहन् शब्द के स्थान में टच् प्रत्यय के परे होने पर भी अह्न आदेश नहीं होता है।

रणं भवति। शीनं घृतम्, शीना वसा, शीनं मेदः। द्रवावस्थायाः काठिन्यं गतमित्यर्थः। श्योऽस्पर्श इति निष्ठानत्वम्। स्पर्शे शीतं वर्त्तते। शीतो वायुः। शीतमुदकम्। गुणमात्रे तद्वति चास्य शीतशब्दस्य वृत्तिर्द्रष्टव्या। द्रवमूर्त्तिस्पर्शयोरिति किम्? संश्यानो वृश्चिकः।

## प्रतेश्च ॥ २५ ॥

श्य इति वर्त्तते। प्रतेरुत्तरस्य श्यायतेर्निष्ठायां परतः संप्रसारणं भवति। प्रतिशीतः। प्रतिशीनवान्। द्रवमूर्त्तिस्पर्शाभ्यामन्यत्रापि यथा स्यादिति सूत्रारम्भः।

## विभाषाऽभ्यवपूर्वस्य ॥ २६ ॥

श्य इति वर्त्तते। अभि अव इत्येवंपूर्वस्य श्यायतेर्निष्ठायां विभाषा संप्रसारणं भवति। अभिशीनम्। अभिश्यानम्। अवशीनम्। अवश्यानम्। द्रवमूर्त्तिस्पर्शविवक्षायामपि विकल्पो भवति। अभिशीनं घृतम्। अभिश्यानं घृतम्। अवशीनं मेदः। अवश्यानं मेदः। अभिशीतो वायुः। अभिश्यानः। अवशीतमुदकम्। अवश्यानमुदकम्। सेयमुभयत्र विभाषा द्रष्टव्या। पूर्वग्रहणस्य च प्रयोजनं समभिश्यानम्, समवश्यानमित्यत्र मा भूदिति केचिद्व्याचक्षते। न किलायमभ्यवपूर्वः समुदाय इति। योऽत्राभ्यवपूर्वः समुदायस्तदाश्रयो विकल्पः कस्मान्न भवति? तस्मादत्र भवितव्यमेव। यदि तु नेष्यते ततो यत्नान्तरमास्थेयमस्माद्विभाषाविज्ञानात् व्यवस्थेयम्। पूर्वग्रहणस्य चान्यत् प्रयोजनं वक्तव्यम्—अभिसंशीनमभिसंश्यानं वा, अवसंशीनमवसंश्यानं वा। अत्र विकल्पो यथा स्याद् इति पूर्वग्रहणं स्त्यः प्रपूर्वस्येतिवत्।

## श्रृतं पाके ॥ २७ ॥

विभाषेत्यनुवर्त्तते। श्रा पाके इत्येतस्य धातोर्ण्यन्तस्याण्यन्तस्य च पाकेऽभिधेये क्तप्रत्यये परतः श्रृभावो निपात्यते विभाषा। श्रृतं क्षीरम्। श्रृतं हविः। व्यवस्थितविभाषा चेयम्। तेन क्षीरहविषोर्नित्यं श्रृभावो भवति। अन्यत्र न भवति—श्राणा यवागूः, श्रपिता यवागूरिति। यदापि बाह्ये प्रयोजके द्वितीयो णिजुत्पद्यते तदापि नेष्यते-श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति। श्रातिरयमकर्मकः कर्मकर्तृविषयस्य पचेरर्थे वर्त्तते, स ण्यन्तः प्राकृतं पच्यर्थमाह। तदत्र द्वयोरपि श्रृतमितीष्यते। श्रृतं क्षीरं स्वयमेव। श्रृतं क्षीरं देवदत्तेन। पाकग्रहणं निपातनविषयप्रदर्शनार्थम्, तेन क्षीरहविषोरेव॥

## प्यायः पीः ॥ २८ ॥

विभाषेत्येव। ओप्यायी वृद्धावित्यस्य धातोर्निष्ठायां विभाषा पीत्ययमादेशो भवति। पीनं मुखम्। पीनौ बाहू। पीनमुरः। इयमपि व्यवस्थितविभाषा। तेनानुपसर्गस्य नित्यं भवति, सोपसर्गस्य तु नैव भवति। आप्यानश्चन्द्रमाः। आङ्पूर्वस्यान्धूधसोर्भवत्येव—आपीनोऽन्धुः, आपीनमूध इति॥

---

प्रतेश्च—प्रति-पूर्वक 'श्या' धातु के यकार के स्थान में भी 'निष्ठा' प्रत्यय के परे सम्प्रसारण (=इ) हो जाता है।

विभाषा—अभिपूर्वक तथा अवपूर्वक 'श्या' धातु के यण् के स्थान में 'निष्ठा' प्रत्यय के परे सम्प्रसारण विकल्प से होता है।

श्रृतं पाके—ण्यन्त तथा अण्यन्त 'श्रा' धातु के स्थान में विकल्प से 'श्रृ' आदेश हो जाता है 'निष्ठा' प्रत्यय के परे, यदि प्रत्ययान्त पाक-वाचक हो।

प्यायः—'निष्ठा' प्रत्यय के परे 'ओप्यायी' धातु के स्थान में विकल्प से 'पी' आदेश हो जाता है।

## लिड्यङोश्च ॥ २९ ॥

विभाषेति निवृत्तम् । प्यायः पीत्येतच्चशब्देनानुकृष्यते । लिटि यङि च परतः प्यायः पीत्ययमादेशो भवति । आपिप्ये । आपिप्याते । आपिप्यिरे । परत्वात् पीभावे कृते पुनः प्रसङ्गविज्ञानाद् द्विर्वचमेरनेकाच इति यणादेशः । यङि—आपेपीयते । आपेपीयन्ते ॥

## विभाषा श्वेः ॥ ३० ॥

लिड्यङोरिति वर्त्तते, संप्रसारणमिति च । लिटि यङि च श्वयतेर्धातोर्विभाषा संप्रसारणं भवति । शुशाव । शिश्वाय । शुशुवतुः । शिश्वियतुः । यङि—शोशूयते । शेश्वीयते । तदत्र यङि संप्रसारणमप्राप्तं विभाषा विधीयते । लिटि तु किति यजादित्वात् नित्यं प्राप्तं तत्सर्वत्र विकल्पेन भवतीत्येषोभयत्र विभाषा । यदा च धातोर्न भवति तदा लिटयभ्यासस्योभयेषा-मित्यभ्यासस्यापि न भवति ॥

## णौ च संश्चङोः ॥ ३१ ॥

विभाषा श्वेरिति वर्त्तते । सन्परे चङ्परे च णौ परतः श्वयतेर्द्धातोर्विभाषा संप्रसारणं भवति । शुशावयिषति । चङि—अशूशवत् । अशिश्वयत् । संप्रसारणं संप्रसारणाश्रयं च बलीयो भवतीति वचनादन्तरङ्गमपि वृद्ध्यादिकं संप्रसारणेन बाध्यते । कृते तु संप्रसारणे वृद्धिरावादेशश्च । तत ओः पुयण्ज्यपर इत्येतद्वचनं ज्ञापकं णौ कृतस्थानिवद्भावस्येति स्थानिवद्भावात् शुशब्दो द्विरुच्यते ॥

## ह्वः संप्रसारणम् ॥ ३२ ॥

णौ च संश्चङोरिति वर्त्तते । सन्परे चङ्परे च णौ परतो ह्वः संप्रसारणं भवति । जुहा-वयिषति । जुहावयिषतः । जुहावयिषन्ति । अजूहवत् । अजूहवताम् । अजूहवन् । संप्रसा-रणस्य बलीयस्त्वात् शाच्छासाह्वाव्यावेपां युगिति प्रागेव युङ्न भवति । संप्रसारणमिति वर्त्तमाने पुनः संप्रसारणमित्युक्तं विभाषेत्यस्य निवृत्त्यर्थम् । ह्वः संप्रसारणमभ्यस्तस्येत्येक-योगेन सिद्धे पृथग्योगकरणमनभ्यस्तनिमित्तप्रत्ययव्यवधाने संप्रसारणाभावज्ञापनार्थम्—ह्वायकमिच्छति ह्वायकीयति । ह्वायकीयतेः सन्—जिह्वायकीयिषति ॥

## अभ्यस्तस्य च ॥ ३३ ॥

ह्व इति वर्त्तते, तदभ्यस्तस्य चेत्यनेन व्यधिकरणम्—अभ्यस्तस्य यो ह्वयतिः । कश्चाभ्य-स्तस्य ह्वयतिः ? कारणम्, तेनाभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात् संप्रसारणं भवति । जुहाव । जोहूयते । जुहूषति ॥

---

लिड्यङोश्च—लिट् लकार तथा यङ् प्रत्यय के परे भी 'ओप्यायी' ( प्याय् ) धातु के स्थान में 'पी' आदेश हो जाता है ।

विभाषा—लिट् लकार तथा यङ् प्रत्यय के परे 'श्वि' धातु के यण् के स्थान में विकल्प से सम्प्रसारण होता है ।

णौ च—सन्-परक तथा चङ्-परक णिच् प्रत्यय के परे भी 'श्वि' धातु के यण् के स्थान में विकल्प से सम्प्रसारण होता है ।

ह्वः सम्प्र—सन्-परक तथा चङ्-परक णिच् प्रत्यय के परे 'ह्वेञ्' धातु के यण् के स्थान में भी सम्प्रसारण हो जाता है ।

अभ्यस्तस्य—भावी 'अभ्यस्त' संज्ञा के कारण ( आश्रय ) 'ह्वेञ्' धातु के यण् के स्थान में भी द्विर्वचन से पूर्व ही सम्प्रसारण हो जाता है ।

## बहुलं छन्दसि ॥ ३४ ॥

ह्व इति वर्त्तते। छन्दसि विषये ह्वयतेर्धातोर्बहुलं संप्रसारणं भवति। इन्द्राग्नी हुवे। देवीं सरस्वतीं हुवे। ह्वेञो लट्यात्मनेपदोत्तमैकवचने। बहुलं छन्दसीति शपो लुकि कृते संप्रसारणमुवङादेशश्च। न च भवति—ह्वयामि मरुतः शिवान्, ह्वयामि विश्वान् देवान् ॥

## चायः की ॥ ३५ ॥

बहुलं छन्दसीति वर्त्तते। चायतेर्धातोश्छन्दसि विषये बहुलं कीत्ययमादेशो भवति। विधुनं निचिक्युः। नान्यं चिक्युर्न निचिक्युरन्यम्। लिट्युसि रूपम्। न भवति—अग्निर्ज्योतिर्निचाय्यः ॥

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताःश्रितमाशीराशीर्त्ताः ॥ ३६ ॥

छन्दसीति वर्त्तते। अपस्पृधेथामिति—स्पर्द्ध संघर्षे इत्यस्य लङि आथामि द्विर्वचनं रेफस्य संप्रसारणमकारलोपश्च निपातनात्। इन्द्रश्च विष्णो यदपस्पृधेथाम्। अस्पर्धेथामिति भाषायाम्। अपर आह—स्पर्द्धेरपपूर्वस्य लङ्याथामि संप्रसारणमकारलोपश्च निपातनात्। बहुलं छन्दस्यमाङ्योगेपीत्यडागमाभावः। अत्र प्रत्युदाहरणमपास्पर्द्धेथामिति भाषायाम्। आनृचुरानृहुरिति—अर्च्च पूजायाम्, अर्ह पूजायामित्यनयोर्द्धात्वोर्लिट्युसि संप्रसारणमकारलोपश्च निपातनात्। ततो द्विर्वचनमुरदत्वमत आदेरिति दीर्घत्वम्। तस्मान्नुड् द्विहल इति नुडागमः। यज्ञा अर्कमानृचुः। न वसून्यानृहुः। आनर्चुः, आनर्हुरिति भाषायाम्। चिच्युषे। च्युङ् गतावित्यस्य धातोर्लिटि सेशब्देऽभ्यासस्य संप्रसारणमनिट् च निपातनात्। चिच्युषे। चुच्युविष इति भाषायाम्। तित्याज। त्यज हानावित्यस्य धातोर्लिट्यभ्यासस्य संप्रसारणं निपात्यते। तित्याज। तत्याजेति भाषायाम्। श्राता इति। श्रीञ् पाकइत्येतस्य धातोर्निष्ठायां श्राभावः। श्रातास्त इन्द्रसोमाः। श्रितमिति। तस्यैव श्रीणातेर्ह्रस्वत्वम्। सोमो गौरी अधिश्रितः। श्रिता नो गृहाः। अनयोः श्राभावश्रिभावयोर्विषयविभागमिच्छन्ति—सोमेषु बहुषु श्राभाव एव, अन्यत्र श्रिभाव एव। सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावो दृश्यते—यदि श्रातो जुहोतन। तस्य श्राता इति बहुवचनस्याविवक्षितत्वादुपसंग्रहो द्रष्टव्यः। आशीराशीर्त्त इति। तस्यैव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठायां च शीरादेशो निष्ठायाश्च नत्वाभावो निपातनात्। तामाशीरा दुहन्ति। आशीर्त्त ऊर्ज्जम्। क्षीरैर्मध्यत आशीर्त्तः ॥

## न संप्रसारणे संप्रसारणम् ॥ ३७ ॥

संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न भवति। व्यध—विद्धः। व्यच—विचितः। व्येञ्—संवीतः। एकयोगलक्षणमपि संप्रसारणमत एव वचनात् प्रथमं परस्य यणः क्रियते, पूर्वस्य च प्रसक्तं प्रतिषिद्ध्यते। संप्रसारणग्रहणं विदेशस्थस्यापि संप्रसारणस्य प्रतिषेधो यथा स्यादिति—श्वयुवमघोनामतद्धिते। यूनः। यूना। संप्रसारणग्रहणसामर्थ्यादेव पूर्वस्य प्रतिषेधे वक्तव्ये सवर्णदीर्घत्वमेकादेशो न स्थानिवद्भवति। सति वा स्थानिवत्त्वे व्यवधान-

---

बहुलम्—छन्दो-विषय में 'ह्वेञ्' धातु के यण् के स्थान में बहुल करके सम्प्रसारण होता है।

चायः की—छन्दो-विषय में 'चायृ' धातु के स्थान में बहुल रूप में 'की' आदेश होता है।

अपस्पृधेथाम्—छन्दो-विषय में 'अपस्पृधेथाम्', 'आनृचुः', 'आनृहुः', 'चिच्युषे', 'तित्याज', 'श्राताः', 'श्रितम्' 'आशीः' तथा 'आशीर्त्त' शब्दों का निपातन होता है।

न सम्प्रसारणे—सम्प्रसारण के परे पूर्ववर्त्ती यण् के स्थान में सम्प्रसारण नहीं हो सकता है।

मेतावदाश्रयिष्यते। ॐऋचि त्रेरुत्तरपदादिलोपश्छन्दसिॐ। ऋचि परतस्त्रेः संप्रसारणं भवति, उत्तरपदादिलोपश्च छन्दसि विषये। तिस्र ऋचो यस्मिन् तत् तृचं साम। ऋक्पूरब्धूःपथामानक्ष इति समासान्तः। छन्दसीति किम्? त्र्यृचं कर्म। ॐरयेर्मतौ बहुलम्ॐ। रयिशब्दस्य छन्दसि विषये मतौ परतो बहुलं संप्रसारणं भवति। आ रेवानेतु नो विशः। न च भवति–रयिमान् पुष्टिवर्द्धनः॥

## लिटि वयो यः॥ ३८॥

न सम्प्रसारणमित्यनुवर्त्तते। लिटि परतो वयो यकारस्य संप्रसारणं न भवति। उवाय। ऊयतुः। ऊयुः। लिड्ग्रहणमुत्तरार्थम्॥

## वश्चास्यान्यतरस्यां किति॥ ३९॥

अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवत्यन्यतरस्याम्। ऊवतुः। ऊवुः। ऊयतुः। ऊयुः। कितीति किम्? (१) उवाय, उवयिथ॥

## वेञः॥ ४०॥

लिटीत्यनुवर्त्तते। वेञ् तन्तुसंतान इत्यस्य धातोर्लिटि परतः संप्रसारणं न भवति। ववौ। ववतुः। ववुः। किति यजादित्वाद्धातोः प्राप्तमकित्यपि लिट्यभ्यासस्योभयेषामित्यभ्यासस्यात उभयं प्रतिषिद्ध्यते॥

## ल्यपि च॥ ४१॥

वेञ इत्यनुवर्त्तते। ल्यपि च परतो वेञः संप्रसारणं न भवति। प्रवाय। उपवाय। पृथग्योगकरणमुत्तरार्थम्॥

## ज्यश्च॥ ४२॥

ल्यपीत्येव। ज्या वयोहानावित्यस्य धातोर्ल्यपि परतः संप्रसारणं न भवति। प्रज्याय। उपज्याय॥

## व्यश्च॥ ४३॥

---

ऋचि—छन्दो-विषय-प्रयोग में ऋक् शब्द के परे 'त्रि' शब्द के यण् के स्थान में सम्प्रसारण तथा उत्तरपद (ऋक्) के आदि (=ऋ) का लोप भी हो जाता है—ऐसा समझना चाहिए।

रयेः—मतुप् प्रत्यय के परे रयि शब्द के यण् (=य) के स्थान में बहुलता से सम्प्रसारण होता है छन्दो-विषय-प्रयोग में।

लिटि—लिट् प्रत्यय के परे 'वय' के यकार के स्थान में सम्प्रसारण नहीं होता है।

वश्चास्यान्य—इस 'वय' धातु के यकार के स्थान में कित् लिट् प्रत्यय के परे विकल्प से वकारादेश हो जाता है।

वेञः—तन्तुसन्तानार्थक 'वेञ्' धातु के वकार के स्थान में लिट् लकार के परे सम्प्रसारण नहीं होता है।

ल्यपि च—ल्यप् प्रत्यय के परे भी 'वेञ्' धातु के वकार के स्थान में सम्प्रसारण नहीं होता है।

ज्यश्च—वयोहान्यर्थक 'ज्या' धातु के यकार के स्थान में भी ल्यप् प्रत्यय के परे सम्प्रसारण नहीं होता है।

व्यश्च—सम्वरणार्थक 'व्येञ्' धातु के वकार के स्थान में भी ल्यप् प्रत्यय के परे सम्प्रसारण नहीं होता है।

---

(१) उवाच, उवचिथ इति प्राचीनपुस्तके पाठः, स न युक्तः।

ल्यपीत्येव । व्येञ् संवरण इत्येतस्य धातोर्ल्यपि संप्रसारणं न भवति । प्रव्याय । योगविभाग उत्तरार्थः ॥

## विभाषा परेः ॥ ४४ ॥

ल्यपि च व्यश्चेत्यनुवर्त्तते । परेरुत्तरस्य व्येञित्येतस्य धातोर्ल्यपि परतो विभाषा संप्रसारणं न भवति । परिवीय यूपम् । परिव्याय । संप्रसारणे कृते परपूर्वत्वे च ह्रस्वस्य इति तुक् प्राप्नोति । स हल इति दीर्घत्वेन परत्वाद् बाध्यते ॥

## आदेच उपदेशेऽशिति ॥ ४५ ॥

धातोरिति वर्त्तते । एजन्तो यो धातुरुपदेशे तस्याकारादेशो भवति, शिति तु प्रत्यये न भवति । ग्लै–ग्लाता । ग्लातुम् । ग्लातव्यम् । शो–निशातुम् । निशातव्यम् । एच इति किम् ? कर्त्ता । हर्त्ता । उपदेश इति किम् ? चेता । स्तोता । अशितीति किम् ? ग्लायति । म्लायति । कथं जग्ले, मम्ले ? नैवं विज्ञायते शकार इद्यस्य सोयं शिदिति, किं तर्हि ? श एव इत् शित्, तत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति शिदादौ प्रत्यये प्रतिषेधः । एश् शकारान्तो भवति । अशितीति च प्रसज्यप्रतिषेधोऽयम् । तेनैतदात्वमनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर्भवतीति–सुग्लः, सुम्ल इति । आतश्चोपसर्गे इति कप्रत्ययः । सुग्लानः, सुम्लान इति ओतो युच् इत्येवमादि सिद्धं भवतीति । आकारस्त्वयं नित्यं स्मयतेः इति यावत् ॥

## न व्यो लिटि ॥ ४६ ॥

व्येञ् इत्येतस्य धातोर्लिटि परत आकारादेशो न भवति । संविव्याय । संविव्ययिथ । लिट्यभ्यासस्योभयेषामित्यभ्यासस्य संप्रसारणम् । णलि अचो ञ्णिति इति वृद्धिः ॥

## स्फुरतिस्फुलत्योर्घञि ॥ ४७ ॥

आदेच इति वर्त्तते । स्फुर स्फुल चलन इत्येतयोर्द्धात्वोरेचः स्थाने घञि परत आकारादेशो भवति । विस्फारः । विस्फालः । विष्फारः । विष्फालः । स्फुरतिस्फुलत्योर्निर्निविभ्यः इति वा षत्वम् ॥

## क्रीङ्जीनां णौ ॥ ४८ ॥

डुक्रीञ् द्रव्यविनिमये, इङ् अध्ययने, जि जये इत्येतेषां धातूनामेचः स्थाने णौ परत आकारादेशो भवति । क्रापयति । अध्यापयति । जापयति ॥

## सिध्यतेरपारलौकिके ॥ ४९ ॥

णाविति वर्त्तते । षिधु हिंसासंराद्धयोरित्यस्य धातोरपारलौकिकेऽर्थे वर्त्तमानस्यैचः

---

विभाषा—परिपूर्वक 'व्येञ्' धातु के वकार के स्थान में ल्यप् प्रत्यय के परे विकल्प से सम्प्रसारण नहीं होता है ।

आदेच—इत्संज्ञक-शकार-विशिष्ट प्रत्ययों से भिन्न प्रत्यय के परे उपदेशकाल में एजन्त धातु को आकारादेश हो जाता है ।

न व्यो—लिट् प्रत्यय के परे 'व्येञ्' धातु के स्थान में आकारादेश नहीं होता है ।

स्फुरति—चलनार्थक 'स्फुर' तथा 'स्फुल' धातुओं के अनौपदेशिक एच् के स्थान में भी घञ् प्रत्यय के परे आकारादेश हो जाता है ।

क्रीङ्—'क्री', 'इङ्' तथा 'जि' धातुओं के एच् के स्थान में णिच् प्रत्यय के परे आकारादेश हो जाता है ।

सिध्यतेरपार—अपारलौकिक अर्थ में वर्त्तमान 'षिधु' ( सिध् ) धातु के एच् के स्थान में णिच् प्रत्यय के परे रहते आकारादेश हो जाता है ।

स्थाने णौ परत आकारादेशो भवति। अन्नं साधयति। ग्रामं साधयति। अपारलौकिक इति किम् ? तपस्तापसं सेधयति। स्वान्येवैनं कर्माणि सेधयन्ति। अत्र हि सिध्यतिः पारलौकिके ज्ञानविशेषे वर्त्तते। तापसः सिध्यति। ज्ञानविशेषमासादयति। तं तपः प्रयुङ्क्ते। स च ज्ञानविशेष उत्पन्नः परलोके जन्मान्तरे फलमभ्युदयलक्षणमुपसंहरन् परलोकप्रयोजनो भवति। इह कस्मान्न भवति—अन्नं साधयति, ब्राह्मणेभ्यो दास्यामीति ? सिधेरत्रार्थो निष्पत्तिः। तस्याः प्रयोजनमन्नम्। तस्य यद्दानं तत्पारलौकिकम्, न पुनः सिद्धिरेवेति न आत्वं पर्युदस्यते। साक्षात्परलोकप्रयोजने च सिध्यर्थे कृतावकाशं वचनमेवं विषयं नावगाहते। सिध्यतेरिति श्यना निर्देशः षिधु गत्यामित्यस्य औणादिकस्य निवृत्त्यर्थः॥

## मीनातिमिनोतिदीङां ल्यपि च॥ ५०॥

आदेच उपदेश इति वर्त्तते। मीञ् हिंसायाम्, डुमिञ् प्रक्षेपणे, दीङ् क्षय इत्येतेषां धातूनां ल्यपि विषये चकारादेचश्च(१) विषये उपदेश एव प्राक्प्रत्ययोत्पत्तेरलोऽन्त्यस्य स्थाने आकारादेशो भवति। प्रमाता। प्रमातव्यम्। प्रमातुम्। प्रमाय। निमाता। निमातुम्। निमातव्यम्। निमाय। उपदाता। उपदातव्यम्। उपदातुम्। उपदाय। उपदेश एवात्वविधानादिवर्णान्तलक्षणः प्रत्ययो न भवति। आकारान्तलक्षणश्च भवति—उपदायो वर्त्तते। ईषदुपदानमिति खल्युचौ भवतः॥

## विभाषा लीयतेः॥ ५१॥

ल्यपीति वर्त्तते, आदेच उपदेश इति च। लीङ् श्लेषण इति दिवादिः, ली श्लेषण इति क्र्यादिस्तयोरुभयोरपि यका(२) निर्देशः स्मर्यते। लीयतेर्द्धातोर्ल्यपि च एचश्च विषये उपदेश एवालोऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति। विलाता। विलातुम्। विलातव्यम्। विलाय। विलेता। विलेतुम्। विलेतव्यम्। विलीय। ॐनिमिमीलियां खलचोः प्रतिषेधो वक्तव्यःॐ। ईषन्निमयो निमयः। ईषत्प्रमयः प्रमयो वर्त्तते। ईषद्विलयो विलयो वर्त्तते। अत्र लियो व्यवस्थितविभाषाविज्ञानात् सिद्धम्। एवं च प्रलम्भनशालिनीकरणयोश्च णौ नित्यमात्वं भवति—कस्त्वामुल्लापयते, श्येनो वर्त्तिकामुल्लापयते॥

## खिदेश्छन्दसि॥ ५२॥

विभाषेति वर्त्तते। खिद दैन्य इत्यस्य धातोरेचः स्थाने छन्दसि विषये विभाषा

---

सीनाति—हिंसार्थक 'मी', प्रक्षेपणार्थक 'मि' तथा क्षयार्थक 'दी' धातुओं के अन्त्य अल् (ई, इ, ई) के स्थान में प्रत्ययोत्पत्ति से पूर्व ही उपदेशकाल में आकारादेश हो जाता है ल्यप् प्रत्यय तथा एच्-स्थानीय आकारादेश के निमित्त अशित् प्रत्ययों के परे भी।

विभाषा—एज्विषय में तथा ल्यप् प्रत्यय के परे भी 'ली' धातु तथा 'लीङ्' धातुओं के अन्त्य अल् के स्थान में विकल्प से आकारादेश हो जाता है।

निमिमीलियाम्—नि+'मि', 'मी' तथा 'ली' एवम् 'लीङ्' धातुओं को खल् तथा अच् प्रत्ययों के परे आकारादेश नहीं होता है।

खिदेः—छन्दोविषय में दैन्यार्थक 'खिद' धातु के एच् को विकल्प से आत्व होता है।

---

(१) 'एचः स्थाने विधीयमानस्यातो विषये अशिति प्रत्यये परे' इत्यर्थः। (श्रीना०)

(२) अत एव लीलीङोर्ग्रहणम्। श्यना निर्देशस्तु नात्र कृतः, तथा सति 'विभाषा लिङः' इत्येतावदेव पर्याप्तं स्यात्, क्र्यादेः निरनुबन्धकतयैव व्युदासादिति भावः। (श्रीना०)

आकार आदेशो भवति। चित्तं चिखाद। चित्तं चिखेद। छन्दसीति किम्? चित्तं खेदयति॥

## अपगुरो णमुलि॥ ५३॥

गुरी उद्यमन इत्यस्य धातोरपपूर्वस्य णमुलि परत एचः स्थाने विभाषा आकार आदेशो भवति। अपगारमपगारम्। अपगोरमपगोरम्। आभीक्ष्ण्ये णमुल्चेति णमुल्। अस्यपगारं युध्यन्ते, अस्यपगोरं युध्यन्त इत्यत्र द्वितीयायां चेति णमुल्॥

## चिस्फुरोर्णौ॥ ५४॥

चिञ् स्फुर इत्येतयोर्द्धात्वोर्णौ परत एचः स्थाने विभाषा आकारादेशो भवति। चापयति। चाययति। स्फारयति। स्फोरयति॥

## प्रजने वीयतेः॥ ५५॥

णाविति वर्त्तते। वी गतिप्रजनकान्त्यसनखादनेषु इत्यस्य धातोः प्रजने वर्त्तमानस्य णौ परतो विभाषा आकारादेशो भवति। पुरोवातो गाः प्रवापयति। पुरोवातो गाः प्रवाययति। गर्भं ग्राहयतीत्यर्थः। प्रजनो हि जन्मन उपक्रमो गर्भग्रहणम्॥

## बिभेतेर्हेतुभये॥ ५६॥

णाविति वर्त्तते, विभाषेति च। हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकः, ततो यद्भयं स यस्य साक्षाद्धेतुः तद्भयं हेतुभयम्। तत्र वर्त्तमानस्य ञिभी भये इत्यस्य धातोर्णौ परतो विभाषा आकारादेशो भवति। मुण्डो भापयते। मुण्डो भीषयते। जटिलो भापयते। जटिलो भीषयते। भीस्म्योर्हेतुभये इत्यात्मनेपदम्। भियो हेतुभये षुक्, स षात्वपक्षे न भवति। लिभियोरीकारप्रश्लेषनिर्देशादीकारान्तस्य भियः षुग्विधीयते। हेतुभय इति किम्? कुञ्चिकयैनं भाययति। अत्र हि कुञ्चिकातो भयं करणाच्च हेतोर्देवदत्तात्॥

## नित्यं स्मयतेः॥ ५७॥

णाविति वर्त्तते, हेतुभय इति च। नित्यग्रहणाद्विभाषेति निवृत्तम्। स्मिङ् ईषद्धसन इत्यस्य धातोर्हेतुभयेऽर्थे णौ परतो नित्यमाकारादेशो भवति।। मुण्डो विस्मापयते। जटिलो विस्मापयते। भय इति किम्? कुञ्चिनयैनं विस्माययति। भयशब्देन हेत्वर्थसामान्यादिह स्मयतेरर्थोऽभिधीयते। न हि मुख्ये भये स्मयतेर्वृत्तिरस्ति॥

## सृजिदृशोर्झल्यमकिति॥ ५८॥

---

अपगुरो—'अप'पूर्वक 'गुरी' धातु के एच् के स्थान में णमुल् के परे विकल्प से आकारादेश होता है।

चिस्फुरोर्णौ—'चि' तथा 'स्फुर्' धातुओं के एच् के स्थान में विकल्प से आत्व हो जाता है णि के परे।

प्रजने वीयतेः—'वी' धातु के अन्त्य अल् को आत्व हो जाता है यदि धात्वर्थ गर्भग्रहणस्वरूप हो।

बिभेतेः—प्रयोजकहेतुकभयार्थक 'भी' धातु के अन्त्य अल् के स्थान में विकल्प से आत्व हो जाता है णिप्रत्यय के परे।

नित्यम्—'स्मीङ्' धातु के अन्त्य अल् के स्थान में णिप्रत्यय के परे नित्य आत्व हो जाता है यदि प्रयोजक से भय (=विस्मय) होता हो।

सृजि—झलादि अकित् प्रत्ययों के परे 'सृज्' तथा 'दृश्' धातुओं को अम् का आगम हो जाता है।

सृज विसर्गे, दृशिर् प्रेक्षणे इत्येतयोर्धात्वोर्झलादावकिति प्रत्यये परतोऽमागमो भवति। स्रष्टुम्। स्रष्टव्यम्। द्रष्टुम्। द्रष्टव्यम्। लघूपधगुणापवादोयममागमः। अस्राक्षीत्। अद्राक्षीत्। सिचि वृद्धिरमि कृते भवति, पूर्वं तु बाध्यते। झलीति किम्? सर्ज्जनम्, दर्शनम्। अकितीति किम्? सृष्टः, दृष्टः। धातो स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिह न भवति-रज्जुसृड्भ्याम्, देवदृग्भ्यामिति॥

## अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्॥ ५९॥

उपदेश इति वर्त्तते, झल्यमकितीति च। उपदेशेऽनुदात्तस्य धातोर्ऋकारोपधस्य झलादावकिति प्रत्यये परतोऽन्यतरस्याममागमो भवति। त्रप्ता। तर्पिता। तर्प्ता। द्रप्ता। दर्पिता। दर्प्ता। तृप प्रीणने, दृप हर्षणमोचनयोः इत्येतौ रधादी धातू, तयोरिडागमो रधादिभ्यश्चेति विकल्प्यते। अनुदात्तोपदेशः पुनरमर्थं एव। अनुदात्तस्येति किम्? वर्द्धा, वर्द्धुम्, वर्द्धव्यम्। वृहू उद्यमन इत्ययमुदात्तोपदेशः, ऊदित्वाच्चास्येड् विकल्प्यते। ऋदुपधस्येति किम्? भेत्ता, छेत्ता। झलीत्येव—तर्प्पणम्, दर्प्पणम्। अकितीत्येव—तृप्तः, दृप्तः॥

## शीर्षंश्छन्दसि॥ ६०॥

शीर्षन्निति शब्दान्तरं शिरःशब्देन समानार्थं छन्दसि विषये निपात्यते, न पुनरयमादेशः शिरःशब्दस्य। सोऽपि हि छन्दसि प्रयुज्यत एव। शीर्ष्णा हि तत्र सोमं क्रीतं हरन्ति। यत्ते शीर्ष्णो दौर्भाग्यम्। छन्दसीति किम्? शिरः॥

## ये च तद्धिते॥ ६१॥

शीर्षन्निति वर्त्तते। आदेशोऽयमिष्यते। स कथम्? तद्धित इति हि परं निमित्तमुपादीयते, स तदनुरूपां प्रकृतिं शिरःशब्दमाक्षिपति। यकारादौ तद्धिते परतः शिरः शब्दस्य शीर्षन्नादेशो भवति। शीर्षण्यो हि मुख्यो भवति। शीर्षण्यः स्वरः। शिरसि भव इति शरीरावयवाच्चेति यत्। ये चाभावकर्मणोरिति प्रकृतिभावः। तद्धित इति किम्? शिर इच्छति शिरस्यति। क्वा केशेषु। शिरसः शीर्षन्नादेशो वक्तव्यः। शीर्षण्याः केशाः। शिरस्याः केशाः॥

## अचि शीर्षः॥ ६२॥

अजादौ तद्धिते शीर्षशब्द आदेशो भवति। हस्तिशिरसो हास्तिशीर्षिः(१) बाह्वादिभ्यश्चेति इञ्। स्थूलशिरस इदं स्थौलशीर्षम्। शीर्षन्भावे हि अन्निति प्रकृतिभावः स्यात्। हास्तिशीर्षिशब्दात् स्त्रियामणिञोरनार्षयोः ष्यङादेशे कृते शीर्षस्य शिरःशब्दग्रणेन ग्रहणात् शीर्षन्नादेशः प्राप्नोति। तत्र प्रकृतिभावे सति 'हास्तिशीर्षण्येत्यनिष्टं रूपं स्यात्। इष्यते तु हास्तिशीर्ष्येति। तत्कथम्? कर्त्तव्योऽत्र यत्नः।

---

अनुदात्तस्य—उपदेश में अनुदात्त ऋकारोपध धातु को झलादि अकित् प्रत्यय के परे विकल्प से अम् का आगम हो जाता है।

शीर्षंश्छन्दसि—शिरःशब्दसमानार्थक 'शीर्षन्' शब्द का छन्दोविषय में निपातन समझना चाहिए।

ये च—यकारादि तद्धित प्रत्यय के परे शिरस् शब्द के स्थान में शीर्षन् आदेश हो जाता है।

वा केशेषु—केशार्थक शिरस् शब्द के स्थान में यकारादि तद्धितप्रत्यय के परे भी विकल्प से शीर्षन् आदेश होता है—ऐसा समझना चाहिए।

अचि—अजादि तद्धित के परे शिरस् शब्द के स्थान में शीर्ष आदेश होता है।

---

(१) पैलुशीर्षिरित्यधिकं पुस्तकान्तरे।

अणिजन्ताद् वा परः प्रत्ययः व्यवाश्रयितव्यः, तत्र यस्येति लोपस्य स्थानिवद्भावाद् व्यवधानम् ॥

## पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥ ६३ ॥

पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृद्, शकृत्, उदक, आसन इत्येषां शब्दानां स्थाने शस्प्रभृतिप्रत्ययेषु परतः पद्, दत्, नस्, मास्, हृत्, निश्, असन्, यूषन्, दोषन्, यकन्, शकन्, उदन्, आसन् इत्येते आदेशा यथासंख्यं भवन्ति । पद्—निपदश्चतुरो जहि । पदा वर्त्तय गोदुहम् । पादस्य पत् । दत्—या दतो धावति तस्यै श्यावदन् । नस्—सूकरस्त्वखनन्नसा । मास्—मासि त्वा पश्यामि चक्षुषा । हृद्—हृदा पूतेन मनसा जातवेदसम् । निश्—अमावास्यायां निशि यजेत । असन्—असिक्तोऽस्नावरोहति । यूषन्—या पात्राणि यूष्ण आसेचनानि । दोषन्—यत्ते दोष्णो दौर्भाग्यम् । यकन्—यक्नोऽवद्यति । शकन्—शक्नोऽवद्यति । उदन्—उद्नो दिव्यस्य नावा ते । आसन्—आसनि किं लभे मधूनि । शस्प्रभृतिष्विति किम्? पादौ ते प्रतिपीड्यौ, नासिके ते कृशे । केचिदत्र छन्दसीत्यनुवर्त्तयन्ति । अपरे पुनरविशेषेणेच्छन्ति । तथाहि—भाषायामपि पदादयः शब्दाः प्रयुज्यन्ते ॥

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥

इत्येवमादयः । अन्यतरस्यामित्येतदनुवर्तयन्ति । तेन पादादयोपि प्रयुज्यन्ते । शस्प्रभृतिष्विति प्रकारे प्रभृतिशब्द इति शला दोषणी इत्यत्रापि दोषन्नादेशो भवति । ॐपदादिषु मांस्पृत्स्नूनामुपसंख्यानम्ॐ । मांस, पृतना, सानु इत्येतेषां स्थाने यथासंख्यं मांस्, पृत्, स्नु इत्येते आदेशा भवन्ति । मांस्पचन्या उखायाः । मांसपचन्या इति प्राप्ते । पृत्सु मर्त्यम् । पृतनासु मर्त्यमिति प्राप्ते । न ते दिवो न पृथिव्या अधि स्नुषु । अधि सानुष्विति प्राप्ते । ॐनस् नासिकाया यत्तस्क्षुद्रेषुॐ । नासिकाया नस्भावो वक्तव्यो यत् तस्क्षुद्र इत्येतेषु परतः । नस्यम् । नस्तः । नस् क्षुद्रः । ॐयति वर्णनगरयोर्नेति वक्तव्यम्ॐ । नासिक्यो वर्णः । नासिक्यं नगरम् ॥

## धात्वादेः षः सः ॥ ६४ ॥

धातोरादेः षकारस्य स्थाने सकारादेशो भवति । षह—सहते । षिच—सिञ्चति । धातुग्रहणं किम्? षोडश, षडिकः, षण्डः । आदेरिति किम्? कर्षति, कृषति । आदेशप्रत्यययोरित्यत्र षत्वव्यवस्थार्थं षादयो धातवः केचिदुपदिष्टाः । के पुनस्ते? ये तथा पठ्यन्ते । अथवा लक्षणं क्रियते—अज्दन्त्यपराः सादयः षोपदेशाः, स्मिस्विदिस्वदिस्विञ्जिस्वपित-

---

पद्दन्नोमास्—शस्-प्रभृति प्रत्ययों के परे पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष, यकृत्, शकृत्, उदक और आसन शब्दों के स्थान में क्रमशः पद्, दत्, नस्, मास्, हृत्, निश्, असन्, यूषन्, दोषन्, यकन्, शकन्, उदन् तथा आसन् आदेश हो जाते हैं ।

पदादिषु—इस सूत्र से मांस, पृतना तथा सानु शब्दों के स्थान में क्रमशः मांस्, पृत् तथा स्नु आदेशों का भी प्रतिपादन कर्त्तव्य है ।

नस् नासिकायाः—यत्, तस् तथा क्षुद्र शब्दों के परे नासिका शब्द के स्थान में नस् आदेश समझना चाहिए ।

यति—वर्णार्थ तथा नगरार्थ में यत् प्रत्यय के परे होने पर भी नासिका शब्द के स्थान में नस् आदेश नहीं होता है ।

धात्वादेः—धातु के आदि षकार के स्थान में सकारादेश हो जाता है ।

यश्च। (१)मकारवकारयोरनज्दन्त्यत्वान्न भवतीति अप्राप्ते विधानम्, सृपिसृजिस्तृस्त्या-सेकृस्रवर्जम् । ❀सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः❀ । षोडीयति । षण्डीयति । ष्वष्कते । ष्ठिवु इत्यस्य द्वितीयस्थकारष्ठकारश्चेष्यते । तेन तेष्ठीव्यते टेष्ठीव्यते इति चाभ्या-सरूपं द्विधा भवति ॥

## णो नः ॥ ६५ ॥

धातोरादेरित्यनुवर्त्तते। धातोरादेर्णकारस्य नकार आदेशो भवति । णीञ्—नयति। णम—नमति। णह—नह्यति। धात्वादेरित्येव। अणति। सुब्धातोरयमपि नेष्यते। णकार-मिच्छति णकारीयति। उपसर्गादसमासेऽपि णोपदेशस्येत्यत्र णत्वविधेर्व्यवस्थार्थं णादयो णोपदेशाः, नृनन्दिनर्दिनक्कनाटिनाथनाधवर्जम् ॥

## लोपो व्योर्वलि ॥ ६६ ॥

धातोरिति प्रकृतं यत् तद् धात्वादेरिति पुनर्द्धातुग्रहणान्निवृत्तम्। तेन धातोर-धातोश्च वकारयकारयोर्वलि परतो लोपो भवति। दिव—दिदिवान्। दिदिवांसौ। दिदिवांसः। ऊयी—ऊतम्। क्नूयी—क्नूतम्। गोधाया ढ्रक्—गौधेरः। पचेरन्। यजेरन्। वकारस्य—जीवेरदानुक्—जीरदानुः। स्त्रिवेः—आस्रेमाणम्। उणादयो बहुलमिति बहुल-वचनाच्छ्वोः शूडनुनासिके चेति ऊठ् न भवति। वलीति किम्? ऊय्यते। पूर्वं लोप-ग्रहणं किम्? वेरपृक्तलोपात् पूर्वं वलिलोपो यथा स्यात्—कण्डूयतेः क्विप्—कण्डूः। लोलूयतेः—लोलूः। व्रश्चादीनामुपदेशसामर्थ्यात् वलि लोपो न भवति। वृश्चति, वव्रश्चेत्यत्रापि हि संप्रसारणहलादिःशेषयोर्बहिरङ्गत्वात् प्राप्नोति ॥

## वेरपृक्तस्य ॥ ६७ ॥

लोप इति वर्त्तते। वेरिति क्विबादयो विशेषाननुबन्धानुत्सृज्य सामान्येन गृह्यन्ते। वेरपृक्तस्य लोपो भवति। ब्रह्मभ्रूणवृत्रेषु क्विप्—ब्रह्महा। भ्रूणहा। स्पृशोऽनुदके क्विन्—घृतस्पृक्। तैलस्पृक्। भजो ण्विः—अर्द्धभाक्। पादभाक्। तुरीयभाक्। अपृक्तस्येति किम्? दृभ्यां विन्—दर्विः। कॄगॄशॄवृजागृभ्यः क्विः—जागृविः ॥

## हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ॥ ६८ ॥

लोप इति वर्त्तते। तदिह लौकिकेनार्थेनार्थवत् कर्मसाधनं द्रष्टव्यम्—लुप्यत इति लोपः। हलन्ताद् ङ्यन्तादाबन्ताच्च(२)दीर्घात्परं सु ति सि इत्येतदपृक्तं हल् लुप्यते। हलन्तात् सुलोपः—राजा। तक्षा। उखास्रत्। पर्णध्वत्। ङ्यन्तात्—कुमारी। गौरी। शार्ङ्गरवी। आबन्तात्—खट्वा। बहुराजा। कारीषगन्ध्या। हलन्तादेव तिलोपः सिलोपश्च।

---

सुब्धातु—नामधातु, 'ष्ठिवु' तथा 'ष्वष्क' धातुओं के आदि षकार के स्थान में सकारादेश का प्रतिषेध समझना चाहिए।

णो नः—धात्वादि णकार के स्थान में नकारादेश हो जाता है।

लोपो—धातु तथा अधातु के वकार एवं यकार का लोप हो जाता है 'वल्' (प्रत्याहारघटक-वर्ण) के परे रहते।

वेरपृक्तस्य—अपृक्तसंज्ञक (क्विप् आदि) 'वि' का लोप हो जाता है।

हल्ङ्याब्भ्यो—हलन्त, दीर्घ ङ्यन्त तथा आबन्त से परवर्ती अपृक्तसंज्ञक हल्-सु, ति तथा सि का लोप हो जाता है।

---

(१) मकारवकारयोरित्यारम्य विधानमित्यन्तः पाठो बहुषु पुस्तकेषु नास्ति।

(२) दीर्घादिति ङ्यापोरेव विशेषणम्, नतु हलन्तस्य, असम्भवादिति ध्येयम्। (श्रीना०)

तत्र तिलोपस्तावत्—अबिभर्भवान्। भृञो लङि तिपि श्लौ भृञामित् इत्यभ्यासस्येत्त्वम्। अजागर्भवान्। सिलोपः—अभिनोऽत्र, अच्छिनोऽत्र। दस्य रेफः। हल्ङ्याब्भ्य इति किम्? ग्रामणीः। सेनानीः। दीर्घादिति किम्? निष्कौशाम्बिः। अतिखट्वः। सुतिसीति किम्? अभैत्सीत्। तिपा सहचरितस्य सिशब्दस्य ग्रहणात्सिचो ग्रहणं नास्ति। अपृक्तमिति किम्? भिनत्ति। छिनत्ति (१)। हलिति किम्? बिभेद। चिच्छेद। अथ किमर्थं हलन्तात् सुतिसीनां लोपो विधीयते, संयोगान्तलोपेनैव सिद्धम्? न सिद्ध्यति। राजा, तक्षेत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न स्यात्। उखास्रत्, पर्णध्वदित्यत्रापदान्तत्वाद्दत्वं च न स्यात्। अभिनोऽत्रेत्यत्रातो रोरप्लुतादप्लुते इत्युत्वं न स्यात्। अबिभर्भवानित्यत्र तु रात्सस्येति नियमाल्लोप एव न स्यात्॥

संयोगान्तस्य लोपे हि नलोपादिर्न सिद्ध्यति॥
रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते॥

## एङ्ह्रस्वात् सम्बुद्धेः ६९॥

लोप इति वर्त्तते, हलिति च। अपृक्तमिति नाधिक्रियते। तथा च पूर्वसूत्रे पुनरपृक्तग्रहणं कृतम्। एङन्तात्प्रातिपदिकाद् ह्रस्वान्ताच्च परो हल्लुप्यते स चेत् संबुद्धेर्भवति। एङन्तात्—हे अग्ने, हे वायो। ह्रस्वान्तात्—हे देवदत्त, हे नदि, हे वधु, हे कुण्ड। कुण्डशब्दात् अतोम्ःइत्यम्। अमि पूर्वः इति पूर्वत्वे कृते हल्मात्रस्य मकारस्य लोपः। हे कतरदित्यत्र डिद्यमद्डादेशस्तत्र टिलोपे सति ह्रस्वाभावान्नास्ति संबुद्धिलोपः। एङ्ग्रहणं क्रियते, संबुद्धिगुणबलीयस्त्वात्॥

## शेश्छन्दसि बहुलम्॥ ७०॥

शि इत्येतस्य बहुलं छन्दसि विषये लोपो भवति। या क्षेत्रा। या वना। यानि क्षेत्राणि। यानि वनानि॥

## ह्रस्वस्य पिति कृति तुक्॥ ७१॥

पिति कृति परतो ह्रस्वस्य तुगागमो भवति। अग्निचित्। सोमसुत्। प्रकृत्य। प्रहृत्य। उपस्तुत्य। ह्रस्वस्येति किम्? आलूय, ग्रामणीः। पितीति किम्? कृतम्। कृतीति किम्? पटुतरः, पटुतमः। ग्रामणिकुलमित्यत्र ह्रस्वस्य बहिरङ्गस्यासिद्धत्वात् तुग्न भवति॥

## संहितायाम्॥ ७२॥

अधिकारोऽयमनुदात्तं पदमेकवर्जमिति यावत्। प्रागेतस्मात् सूत्रादित उत्तरं यद्वक्ष्यामः संहितायामित्येवं तद्वेदितव्यम्। वक्ष्यति—इको यणचि—दध्यत्र, मध्वत्र। संहितायामिति किम्? दधि अत्र, मधु अत्र॥

## छे च॥ ७३॥

ह्रस्वस्य तुगिति वर्त्तते। छकारे परतः संहितायां विषये ह्रस्वस्य तुगागमो भवति।

---

एङ्ह्रस्वात्—एङन्त तथा ह्रस्वान्त प्रातिपदिकों से परवर्त्ती सम्बुद्ध्यङ्गभूत हल् का लोप हो जाता है।

शेश्छन्दसि—छन्दोविषय में 'शि' का बाहुल्येन लोप हो जाता है।

ह्रस्वस्य—पित् कृत् प्रत्यय के परे ह्रस्वान्त अङ्ग को तुक् का आगम हो जाता है।

संहितायाम्—"अनुदात्तं पदमेकवर्जम्" सूत्रपर्यन्त "संहितायाम्" का अधिकार है।

छे च—ह्रस्वान्त अङ्ग को भी तुक् का आगम हो जाता है छकार के परे संहिता में।

---

(१) बिभर्तीत्यधिकमेकस्मिन्पुस्तके।

इच्छति। गच्छति । ह्रस्व एवात्रागमी, न त्वदन्तः । तेन चिच्छिदतुश्चिच्छिदुरित्यत्र तुगभ्यासस्य ग्रहणेन न गृह्यत इति हलादिः शेषेण न निवर्त्यते। नावयवावयवः समुदायावयवो भवतीति ॥

## आङ्माङोश्च ॥ ७४ ॥

तुगित्यनुवर्त्तते, छ इति च। आङो ङित ईषदादिषु चतुर्ष्वर्थेषु(१)वर्त्तमानस्य माङश्च प्रतिषेधवचनस्य छकारे परतस्तुगागमो भवति। पदान्ताद्वेति विकल्पे प्राप्ते नित्यं तुगागमो भवति। ईषदर्थे–ईषच्छाया आच्छाया। क्रियायोगे–आच्छादयति। मर्यादाभिविध्योः–आच्छायायाः, आच्छायम्। माङः खल्वपि–मा च्छैत्सीव, मा च्छिदत्। ङिद्विशिष्टग्रहणं किम्? आछाया, प्रमाछन्दः, प्रमाच्छन्दः॥

## दीर्घात् ॥ ७५ ॥

छे तुगिति वर्त्तते। दीर्घात्परो यश्छकारस्तस्मिन् पूर्वस्य तस्यैव दीर्घस्य तुगागमो भवति। ह्रीच्छति। म्लेच्छति। अपचाच्छायते। विचाच्छायते॥

## पदान्ताद्वा ॥ ७६ ॥

दीर्घाच्छे तुगिति वर्त्तते। पदान्ताद्दीर्घात्परो यश्छकारस्तस्मिन् पूर्वस्य तस्यैव दीर्घस्य पूर्वेण नित्यं प्राप्तो वा तुगागमो भवति। कुटीच्छाया। कुटीछाया। कुवलीच्छाया। कुवलीछाया। ॐविश्वजनादीनां छन्दसि वा तुगागमो भवतीति वक्तव्यम्ॐ। विश्वजनच्छत्रम्। विश्वजनछत्रम्। नच्छायां कुरवोपराम्। नछायां कुरवोपराम्॥

## इको यणचि ॥ ७७ ॥

अचि परत इको यणादेशो भवति। दध्यत्र। मध्वत्र। कर्त्रर्थम्। हर्त्रर्थम्। लाकृतिः। ॐइकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थः(२) यणादेशो वक्तव्यःॐ। भो३ इ इन्द्रम्, भो३ यिन्द्रम्। अचीति चायमधिकारः संप्रसारणाच्च इति यावत्॥

---

आङ्माङोश्च—ईषत्, क्रियायोग, मर्यादा तथा अभिविधि अर्थों में वर्त्तमान ङित् आ तथा प्रतिषेधार्थक ङित् मा शब्द को भी तुक् का आगम हो जाता है छकार के परे संहिताविषय में।

दीर्घात्—दीर्घ से परवर्त्ती छकार के परे दीर्घ को ही तुक् का आगम हो जाता है।

पदान्ताद्वा—पदान्त दीर्घ से परवर्त्ती छकार के परे पूर्वपदान्त दीर्घ—को विकल्प से तुक् का आगम होता है।

विश्वजनादीनाम्—छन्दोविषय में छकार के परे विश्वजन आदि शब्दों को विकल्प से तुक् का आगम समझना चाहिए।

इको—इक् के स्थान में यण् आदेश हो जाता है संहिताविषय में।

इकः—प्लुतपूर्वक इक् के स्थान में भी सवर्णदीर्घबाधनार्थ यणादेश का विधान समझना चाहिए।

---

(१) ईषदर्थे क्रिया योगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् इत्यनुसारेणाह—चतुर्थं इति। (श्रीना०)

(२) यद्यपि 'इ' इत्यस्य एकाज् निपातत्वेन निपात एकाजनाङिति प्रगृह्यतया प्रकृतिभावे सति 'इ' इन्द्रम् इत्यत्र सवर्णदीर्घस्य न प्राप्तिः तथापि ततः प्रथमतः सवर्णदीर्घप्राप्तिमभिप्रेत्यैतदुक्तमिति ध्येयम्। (श्रीना०)

## एचोऽयवायावः ॥ ७८ ॥

एचः स्थानेऽचि परतोऽय्, अव्, आय्, आव् इत्येते आदेशा यथासंख्यं भवन्ति। चयनम्। लवनम्। चायकः। लावकः। कयेते। व्ययेते। यावचरुणद्धि ॥

## वान्तो यि प्रत्यये ॥ ७९ ॥

योऽयमेचः स्थाने वान्तादेश ओकारस्य अव् औकारस्याव् स यकारादौ प्रत्यये परतो भवति। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। नाव्यो ह्रदः। वान्त इति किम्? रायमिच्छति रैयति। यीति किम्? गोभ्याम्, नौभ्याम्। प्रत्यय इति किम्? गोयानम्, नौयानम्। *गोर्यूतौ छन्दसि*। गोशब्दस्य यूतौ परतश्छन्दसि विषये वान्तादेशो वक्तव्यः। आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। छन्दसीति किम्? गोयूतिः। *अध्वपरिमाणे च*। गोर्यूतौ परतो वान्तादेशो वक्तव्यः। गव्यूतिमात्रमध्वानं गतः ॥

## धातोस्तन्निमित्तस्यैव ॥ ८० ॥

एच इति वर्त्तते, वान्तो यि प्रत्यय इति च। धातोर्य एच् तन्निमित्तो यकारादिप्रत्ययनिमित्तस्तस्य यकारादौ प्रत्यये परतो वान्तादेशो भवति। लव्यम्। पव्यम्। अवश्यलाव्यम्। अवश्यपाव्यम्। धातोरिति किम्? प्रातिपदिकस्य नियमो मा भूत्। तत्र को दोषः? बाभ्रव्य इत्यत्रैव स्याद्, इह न स्याद्—गव्यम्, नाव्यमिति। तन्निमित्तस्येति किम्? अतन्निमित्तस्य मा भूत्—ओयते, औयत, लौयमानिः, पौयमानिः। अत इञ्। एवकारकरणं किम्? धात्ववधारणं यथा स्यात्, तन्निमित्तावधारणं मा भूदिति। तन्निमित्तस्य हि धातोश्चाधातोश्च भवति—बाभ्रव्यः, अवश्यलाव्यम्, लव्यम् ॥

## क्षय्यजय्यौ शक्यार्थे ॥ ८१ ॥

क्षि जि इत्येतयोर्धात्वोर्यति प्रत्यये परतः शक्यार्थे गम्यमाने एकारस्यायादेशो निपात्यते। शक्यः क्षेतुं क्षय्यः। शक्यो जेतुं जय्यः। शक्यार्थे इति किम्? क्षेयं पापम्, जेयो वृषलः ॥

## क्रय्यस्तदर्थे ॥ ८२ ॥

---

एचोर—एच् के स्थान में क्रमशः अय्, अव्, आय तथा आव् आदेश हो जाते हैं संहिता-विषय में।

वान्तो यि—यकारादि प्रत्यय के परे ओ तथा औ के स्थान में भी क्रमशः अव् तथा आव् आदेश होते हैं।

गोर्यूतौ—छन्दोविषय-प्रयोग में यूति शब्द के परे गोशब्द के अन्त्य ओकार के स्थान में अवादेश हो जाता है।

अध्वपरिमाणे—मार्ग के परिमाण अर्थ में भी गो शब्द के ओकार के स्थान में यूति शब्द के परे अव् आदेश समझना चाहिए।

धातोः—धातु के एच् के स्थान में भी वान्त आदेश होता है यकारादि प्रत्ययों के परे यदि वह धात्ववयव एच् की उपपत्ति के निमित्त वे ही यकारादि प्रत्यय हों (जिनके परे आदेश का विधान होता है)।

क्षय्यजय्यौ—शक्धात्वर्थ के गम्यमान होने पर यत् प्रत्यय के परे 'क्षि' तथा 'जि' धातुओं के एच् (क्षे, जे) के स्थान में अय् आदेश हो जाता है।

क्रय्यस्तदर्थे—'क्री' धातु के कर्म कारक के अभिधायक यत् प्रत्यय के परे 'क्री' धातु के एच् के स्थान में अयादेश का निपातन होता है।

क्षीणातेर्धातोरतदर्थे क्रयार्थं यत्तस्मिन्नभिधेये यति प्रत्यये परतोऽयादेशो निपात्यते। क्रय्यो गौः। क्रय्यः कम्बलः। क्रयार्थं यः प्रसारितः स उच्यते। तदर्थ इति किम्? क्रेयं नो धान्यम्, न चास्ति क्रय्यम्॥

भय्यप्रवय्ये च च्छन्दसि॥ ८३॥

बिभेतेर्धातोः प्रपूर्वस्य च वी इत्येतस्य यति प्रत्यये परतश्छन्दसि विषयेऽयादेशो निपात्यते। भय्यं किलासीत्। वत्सरी प्रवय्या। भय्येति कृत्यल्युटो बहुलमित्यपादाने यत् प्रत्ययः। बिभेत्यस्मादिति भय्यम्। प्रवय्या इति स्त्रियामेव निपातनम्। अन्यत्र प्रवेयमित्येव भवति। छन्दसीति किम्? भेयम्। प्रवेयम्। ॐहृदय्या आप उपसंख्यानम्ॐ। हृदय्या आपः। हृदे भवाः, भवे छन्दसीति यत्प्रत्ययः॥

एकः पूर्वपरयोः॥ ८४॥

अधिकारोऽयम्। ख्यत्यात् परस्येति प्रागेतस्मात् सूत्रादित उत्तरं यद्वक्ष्यामस्तत्र पूर्वस्य परस्य द्वयोरपि स्थाने एकादेशो भवतीत्येतद्वेदितव्यम्। वक्ष्यति—आद्गुण इति। तत्राचि पूरस्यावर्णाच्च परस्य स्थाने एको गुणो भवति। खट्वेन्द्रः। मालेन्द्रः। पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम्। एकैकस्यैव हि स्यात्। नोभे सप्तमीपञ्चम्यौ युगपत् प्रकल्पिके भवत इति। एकग्रहणं पृथगादेशनिवृत्त्यर्थं स्थानिभेदाद्धि भिन्नादिषु नत्ववद् द्वावादेशौ स्याताम्॥

अन्तादिवच्च॥ ८५॥

एक इति वर्त्तते, पूर्वपरयोरिति च। एकः पूर्वपरयोरिति योऽयमेकादेशो विधीयते स पूर्वस्यान्तवद्भवति, परस्यादिवद्भवति। यथा तस्यान्त आदिर्वा तदन्तर्भूतस्तद्ग्रहणेन गृह्यते तद्वदेकादेशोऽपि तद्ग्रहणेन गृह्यत इत्येषोऽतिदेशार्थः। ब्रह्मबन्धूरित्यत्र ब्रह्मबन्ध्वति प्रातिपदिकम्, ऊङित्यप्रातिपदिकम्, तयोः प्रातिपदिकाप्रातिपदिकयोर्यः एकादेशः स प्रातिपदिकस्यान्तवद्भवति। यथा शक्यते कर्त्तुं ङ्याप्प्रातिपदिकादिति स्वादिविधिः। वृक्षाचित्यत्र सुबौकारः, असुबकारः, तयोः सुबसुपोरेकादेशः सुप आदिवद्भवति। यथा शक्यते वक्तुं सुबन्तं पदमिति। वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यते, तथाच खट्वाभिरित्यत्रान्तवद्भावाभावादतो भिस् ऐसिति न भवति। ह्वयतेर्जुहावेति संप्रसारणपूर्वत्वस्यादिवद्भावाभावादात औ णल इति न भवति। अस्यै अश्वः, अस्या अश्व इति वृद्धिरेचीति वृद्धिरेङः पदान्तादतीत्यत्र विधावादिवन्न भवति। पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्त्यते, तन्नावयवयोरानुमानिकं स्थानित्वमिति तदाश्रयं कार्यं स्थानिवद्भावाद् प्राप्तमित्यन्तादिवद्भावो विधीयते॥

---

भय्य—छन्दोविषय-प्रयोग में यत् प्रत्यय के परे 'भी' धातु तथा प्र+'वी' धातु के एच् के स्थान में अयादेश का निपातन होता है।

हृदय्या—छन्दोविषयप्रयोग में आप् (जल) के विशेषणीभूत (आवर्थवृत्ती) 'हृदय्या' शब्द के निपातन का भी प्रतिपादन करना चाहिए।

एकः—अब से 'ख्यत्यात्परस्य' सूत्र तक जितने आदेशों का विधान होनेवाला है उन आदेशों के विषय में यह समझना चाहिए कि पूर्व तथा पर स्थानियों के स्थान में एक ही आदेश (=एकादेश—अ+उ=ओ) होते हैं।

अन्तादिवच्च—पूर्व तथा पर स्थानियों के स्थान में विहित एकादेश अपने पूर्वस्थानी (से घटित पूर्व शब्द) के अन्त्यावयव की तरह तथा अपने पर स्थानी (से घटित पर शब्द) के आद्यावयव की तरह माने जाते हैं।

## षत्वतुकोरसिद्धः ॥ ८६ ॥

षत्वे तुकि च कर्त्तव्ये एकादेशोऽसिद्धो भवति, सिद्धकार्यं न करोतीत्यर्थः। असिद्ध-वचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च। कोऽसिचदित्यत्र एङः पदान्तादती-त्येकादेशस्य परं प्रत्यादिवत्त्वादपदादेरिण उत्तरस्यादेशस्य सकारस्य षत्वं प्राप्नोति, तदसिद्धत्वान्न भवति। कोऽस्य, योऽस्य, कोऽस्मै इत्येकादेशस्यासिद्धत्वात् इण इति षत्वं न भवति। तुग्विधौ—अधीत्य, प्रेत्येत्यत्रैकादेशस्यासिद्धत्वाद्, ह्रस्वस्य पिति कृति तुक् इति तुग्भवति। ॐसंप्रसारणङीट्सु प्रतिषेधो वक्तव्यःॐ। संप्रसारणे-ब्रह्महूसु, वरिवीषु। संप्रसारणपूर्वत्वस्यासिद्धत्वात् षत्वं न प्राप्नोति। ङौ-वृक्चेच्छत्रम्, वृक्च छत्रम्। इटि-अपचेच्छत्रम्, अपचे छत्रम्। आद्गुणस्यासिद्धत्वाद् ह्रस्वलक्षणो नित्योऽत्र तुक् प्राप्नोति, दीर्घात् पदान्ताद्वा इति तुग् विकल्प इष्यते॥

## आद् गुणः ॥ ८७ ॥

अचीत्यनुवर्त्तते। अवर्णात् परो योऽच् अचि च पूर्वो योऽवर्णस्तयोः पूर्वपरयोरवर्णाचोः स्थाने एको गुण आदेशो भवति। तवेदम्। खट्वेन्द्रः। मालेन्द्रः। तवेहते। खट्वेहते। तवोदकम्। खट्वोदकम्। तवर्श्यः। खट्वर्श्यः। तवल्कारः। खट्वल्कारः। ऌकारस्य स्थाने योऽण् तस्य लपरत्वमिष्यते॥

## वृद्धिरेचि ॥ ८८ ॥

आदिति वर्त्तते। अवर्णात् परो य एच् एचि पूर्वो योऽवर्णस्तयोः पूर्वपरयोरवर्णैचोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणस्यापवादः। ब्रह्मैडका। खट्वैडका। ब्रह्मैतिकायनः। खट्वैतिकायनः। ब्रह्मौदनः। खट्वौदनः। ब्रह्मौपगवः। खट्वौपगवः।

## एत्येधत्यूठ्सु ॥ ८९ ॥

वृद्धिरेचीति वर्त्तते, आदिति च। तदेतदेज्ग्रहणमेतेरेव विशेषणं न पुनरेधतेरव्यभि-चारादूठश्चासंभवात्। इण् गताविर्त्येतस्मिन् धातोरेचि, एध वृद्धावित्येतस्मिन्, ऊठि च पूर्वं यदवर्णं ततश्च परो योऽच् तयोः पूर्वपरयोरवर्णाचोः स्थाने वृद्धिरेकादेशो भवति। उपैषि। उपैमि। उपैधते। प्रैधते। प्रष्ठौहः। प्रष्ठौहा। प्रष्ठौहे। ऊठ्याद्गुणापवादो वृद्धि-र्विधीयते। एत्येधत्योस्त्वेङि पररूपापवादः। ओमाङोश्चेत्येतत्तु पररूपं न बाध्यते, येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति इति, पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् इति वा। तेनेह न भवति-उप आ इत उपेत इति। एचीत्येव—

---

षत्व—षत्व तथा तुक् के विधेय होने पर एकादेश असिद्ध हो जाता है।

सम्प्रसारण—सम्प्रसारण, ङि तथा इट् के परे विहित एकादेश षत्व तथा तुक् के विधेय होने पर भी असिद्ध नहीं माने जाते हैं।

आद्—अवर्णपरवर्त्ती अच् तथा अच् के परे पूर्व जो अवर्ण (अ, आ) उन दोनों के स्थान में 'गुण' एकादेश होता है।

वृद्धिरेचि—अवर्ण से परवर्त्ती जो एच् तथा एच् के परे पूर्ववर्त्ती जो अवर्ण उन दोनों के स्थान में 'वृद्धि' एकादेश होता है।

एत्येधत्येठ्सु—एजादि 'इण्' धातु, 'एध' धातु तथा ऊठ् शब्दों के अवयवभूत अच् से पूर्व अवर्ण यदि हो तो पूर्व अवर्ण तथा पर अच् के स्थान में भी 'वृद्धि' एकादेश हो जाता है।

उप इतः उपेतः। ॐअक्षादूहिन्यां वृद्धिर्वक्तव्या॥। अक्षौहिणी। ॐस्वादीरेरिण्योर्वृद्धिर्वक्तव्या॥(१)। स्वैरम्। स्वैरिणी। ॐप्रादूढोढ्येषैष्येषु वृद्धिर्वक्तव्या॥। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः(२)। ॐऋते च तृतीयासमासेऽवर्णाद् वृद्धिर्वक्तव्या॥। सुखेन ऋतः सुखार्तः। दुःखेन ऋतो दुःखार्तः। ऋत इति किम्? सुखेन इतः सुखेतः। तृतीयेति किम्? परमर्तः। समास इति किम्? सुखेनर्तः। ॐप्रवत्सतरकम्बलवसनानामृणे वृद्धिर्वक्तव्या॥। प्र, प्रार्णम्। वत्सतर, वत्सतरार्णम्। कम्बल, कम्बलार्णम्। वसन, वसनार्णम्। ॐऋणदशाभ्यां वृद्धिर्वक्तव्या॥। ऋणार्णम्। दशार्णम्॥

## आटश्च॥ ९०॥

एचीति निवृत्तम्। अचीत्यनुवर्त्तते। आटः परो योऽच् अचि च पूर्वो य आट् तयोः पूर्वपरयोराडचोः स्थाने वृद्धिरेकादेशो भवति। ऐचिष्ट। ऐक्षत। ऐक्षिष्यत। औभीत्। आर्ध्नोत्। औब्जीत। चकारोऽधिकविधानार्थः—उस्योमाङोश्च पररूपबाधनार्थः। औस्रीयत्। औङ्कारीयत। आ ऊढा ओढा, तामैच्छत् औढीयत्॥

## उपसर्गादृति धातौ॥ ९१॥

आदित्येव। अवर्णान्तादुपसर्गादृकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणापवादः। उपार्च्छति। उपार्ध्नोति। उपसर्गादिति किम्? खट्वर्च्छति। मालर्च्छति। प्रगता ऋच्छका अस्माद्देशात् प्रर्च्छको देशः। यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका इति। ऋतीति किम्? उप इत उपेतः। तपरकरणं किम्? उप ऋकारीयति उपर्कारीयति। वा सुप्यापिशलेरिति विकल्पः स्यात्। उपसर्गग्रहणादेव धातुग्रहणे सिद्धे धातुग्रहणं शाकल्यनिवृत्त्यर्थम्। सत्यक इति हि शाकल्यस्य प्रकृतिभावः प्राप्नोति॥

---

अक्षादूहिन्याम्—अक्षशब्दावयव अन्त्य अच् तथा ऊहिनी शब्दावयव आद्य अच्—ऊ—के स्थान में एकादेश 'वृद्धि' का विधान करना चाहिए।

स्वादीरे—स्वशब्दावयव अच् तथा (अव्यवहितोत्तरवर्त्ती) ईर एवम् ईरिन् शब्दों के आद्य अवयव अच् के स्थान में एकादेश 'वृद्धि' का विधान करना चाहिए।

प्रादूढो—प्रशब्दावयव अच् तथा ऊढ, ऊढि, एष तथा एष्य शब्दों के आद्यावयव अच् के स्थान में एकादेश 'वृद्धि' का विधान करना चाहिए।

ऋते च—तृतीयासमास में पूर्वशब्दान्त्यावयव अवर्णात्मक अच् तथा ऋत शब्द के आद्यावयव ऋ के स्थान में एकादेश 'वृद्धि' का विधान करना चाहिए।

प्रवत्सतर—प्र, वत्सतर, कम्बल तथा वसन शब्दों के अन्त्यावयव अवर्ण तथा ऋण शब्द के आद्यावयव ऋ के स्थान में एकादेश वृद्धि का विधान करना चाहिए।

ऋण—ऋण तथा दश शब्दों के अन्त्य अवर्ण तथा ऋण शब्द के आद्य ऋवर्ण के स्थान में भी एकादेश 'वृद्धि' का विधान करना चाहिए।

आटश्च—(आगम) आट्पूर्वक अच् तथा अच्परक आट् के स्थान में भी एकादेश 'वृद्धि' होती है।

उपसर्गाद्—परवर्त्ती ऋकारादि धातु के आद्यावयव ऋकार तथा पूर्ववर्त्ती अवर्णान्त उपसर्ग के अन्त्य अवर्ण के स्थान में एकादेश 'वृद्धि' होती है।

---

(१) स्वादीरेरिणोर्वृद्धिर्वक्तव्या। स्वैरः, स्वैरी इति पाठान्तरम्।
(२) ग्रन्थान्तरे ऊहग्रहणविशिष्टवार्तिकमुपलभ्यते, तथोदाहरणमपि प्रौह इति।

## वा सुप्यापिशलेः ॥ ९२ ॥

आदिति, उपसर्गादिति धाताविति च वर्तते। सुबन्तावयवे धातावृकारादौ परतोऽवर्णन्तादुपसर्गात् पूर्वपरयोरापिशलेराचार्यस्य मतेन वा वृद्धिरेकादेशो भवति। उपर्षभीयति। उपार्षभीयति। उपल्कारीयति। उपाल्कारीयति। ऋकारऌकारयोः सावर्ण्यविधिरिति ऋतीति ऌकारोऽपि गृह्यते। आपिशलिग्रहणं पूजार्थम्। वेति ह्युच्यत एव॥

## ओतोऽम्शसोः ॥ ९३ ॥

ओतोऽमि शसि च परतः पूर्वपरयोराकार एकादेशो भवति। गां पश्य। गाः पश्य। द्यां पश्य। द्याः पश्य। द्योशब्दोऽप्योकारान्त एव विद्यते, ततोऽपि परं सर्वनामस्थानं णिदिष्यते, तेन नाम्नाद्यायां वृद्धावयमाकारो विधीयमानस्तां बाधते। अमिति द्वितीयैकवचनं गृह्यते, शसा साहचर्यात्, सुपीति चाधिकारात्। तेनाचिनवमसुनवमित्यत्र न भवति॥

## एङि पररूपम् ॥ ९४ ॥

आदिति वर्तते, उपसर्गाद्धाताविति च। अवर्णान्तादुपसर्गादेङादौ धातौ पूर्वपरयोः पररूपमेकादेशो भवति। वृद्धिरेचीत्यस्यापवादः। उपेलयति। प्रेलयति। उपोषति। प्रोषति। केचित्(१)वा सुप्यापिशलेः इत्यनुवर्त्तयन्ति। तद्वाक्यभेदेन सुब्धातौ विकल्पं करोति–उपेडकीयति, उपैडकीयति; उपोदनीयति, उपौदनीयति। ॐशकन्ध्वादिषु पररूपं वक्तव्यम्ॐ। शक अन्धुः शकन्धुः। कुल अटा कुलटा। ॐसीमन्तः केशेषुॐ। सीम्नोऽन्तः सीमन्तः, अन्यत्र सीमान्तः। ॐएवे चानियोगे(२) पररूपं वक्तव्यम्ॐ। इह एव इहेव। अद्य एव अद्येव। अनियोग इति किम्? इहैव भव माऽन्यत्र गाः। ॐओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्ॐ। स्थूल ओतुः स्थूलोतुः। स्थूलौतुः। बिम्बौष्ठी। बिम्बोष्ठी। समासे

---

वा सुपि—सुबन्तावयव ऋकारादि धातु के ऋकार के परे अवर्णान्त उपसर्ग के होनेपर उपसर्गान्त्यावयव अवर्ण तथा सुबन्तावयधात्वाद्यावयव ऋकार के स्थान में एकादेश 'वृद्धि' होती है विकल्प से 'आपिशलि' आचार्य के मत में।

ओतोम्—ओत् से परे यदि अम् अथवा शस् हो तो पूर्वपर के स्थान में एकादेश 'आकार' हो जाता है।

एङि—अवर्णान्त उपसर्ग से परे एङादि धातु के होने पर पूर्वपर के स्थान में 'पररूप' एकादेश हो जाता है।

शकन्ध्वादिषु—शकन्धु आदि शब्दों की सिद्धि के लिए शक+अन्धु आदि स्थिति में भी पूर्वपर के स्थान में पररूपात्मक एकादेश समझना चाहिए।

सीमन्तः—केश अर्थ में सीमन्त शब्द के निष्पत्त्यर्थ भी 'पररूप' का विधान करना चाहिए।

एवे—नियोग ( =अवश्यम्भाव, नियम ) अर्थ से भिन्न अर्थ में वर्त्तमान एव शब्द के परे भी अवर्णात्मक पूर्वस्थानी तथा एकारात्मक पर स्थानी के स्थान में एकादेश 'पररूप' का विधान करना चाहिए।

ओत्वोष्ठयोः—समासावयव ओतु ( =बिलाड़ ) तथा ओष्ठ शब्द के परे पूर्वपर के स्थान में विकल्प से 'पररूप' एकादेश का विधान करना चाहिए।

---

( १ ) अत्र व्याख्यानमेव शरणम् इति पदमञ्जरी।

( २ ) नियोगः = नियमो व्यवस्था वा। ( श्रीना० )

इति किम् ? तिष्ठ देवदत्तौष्ठं पश्य । ॐएमन्नादिषु छन्दसि पररूपं वक्तव्यम्ॐ । अपां त्वा एमन्, अपां त्वेमन् । अपां त्वा ओद्मन्, अपां त्वोद्मन् ॥

## ओमाङोश्च ॥ ९५ ॥

आदित्येव । अवर्णान्तादोमि आङि च परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । का ओमित्यवोचत् कोमित्यवोचत् । योमित्यवोचत् । आङि खल्वपि-आ ऊढा ओढा, अद्य ओढा अद्योढा । कदा ओढा कदोढा । तदा ओढा तदोढा । वृद्धिरेचीत्यस्यापवादः । इह तु आ ऋश्यान् अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यादिति, अकः सवर्णे दीर्घत्वं बाध्यते ॥

## उस्यपदान्तात् ॥ ९६ ॥

आदित्येव । अवर्णादपदान्तादुसि पूर्वपरयोः पररूपमेकादेशो भवति । आद्गुणापवादः । भिन्द्या उस्, भिन्द्युः । छिन्द्या उस्, छिन्द्युः । अदा उस्, अदुः । अया उस् अयुः । अपदान्तादिति किम् ? का उस्रा कोस्रा । का उषिता कोषिता । आदित्येव—चक्रुः । अबिभयुः ॥

## अतो गुणे ॥ ९७ ॥

अपदान्तादिति वर्त्तते । अकारादपदान्ताद् गुणे परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । पचन्ति । यजन्ति । अकः सवर्णे दीर्घस्यापवादः । पचे, यजे इत्यत्र वृद्धिरेचीति वृद्धिः प्राप्नोति । अत इति किम् ? यान्ति । वान्ति । गुण इति किम् ? अपचे । अयजे । अपदान्तादित्येव । दण्डाग्रम् । यूपाग्रम् ॥

## अव्यक्तानुकरणस्यात इतौ ॥ ९८ ॥

अव्यक्तम् अपरिस्फुटवर्णं तदनुकरणं परिस्फुटवर्णमेव केनचित् सादृश्येन तदव्यक्तमनुकरोति, तस्य योऽच्छब्दस्तस्मादितौ पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । पटत् इति पटिति । घटत् इति, घटिति । झटत् इति, झटिति । छमित् इति, छमिति । अव्यक्तानुकरणस्येति किम् ? जगत् इति, जगदिति । अत इति किम् ? गरट् इति, गरडिति । इताविति किम् ? पटत् अत्र, पटदत्र । ॐअनेकाच इति वक्तव्यम्ॐ । इह मा भूत्–स्रत् इति, स्रदिति । कथं घटदिति गम्भीरमम्बुदैर्नदितमिति ? दकारान्तमेतदनुकरणं द्रष्टव्यम् ॥

---

एमन्नादिषु—एमन् आदि वैदिक-प्रयोग की सिद्धि के लिए भी 'पररूप' एकादेश का विधान करना चाहिए।

ओमाङोश्च—अवर्णान्त शब्द से पर में 'ओम्' तथा 'आङ्' के होने पर पूर्व-पर के स्थान में 'पररूप' एकादेश होता है।

उस्यपदान्तात्—अपदान्त अवर्ण से पर 'उस्' के होने पर पूर्वपर के स्थान में 'पररूप' एकादेश होता है।

अतो गुणे—अपदान्त अकार से पर गुण ( अत्, एङ् ) के होने पर पूर्व-पर के स्थान में 'पररूप' एकादेश होता है।

अव्यक्तानु—अव्यक्तवर्ण अनुकरण के 'अत्' के परे 'इति' शब्द के होने से पूर्व-पर के स्थान में 'पररूप' एकादेश होता है।

अनेकाच—अनेकाच् अव्यक्तानुकरणघटक 'अत्' शब्द के परे 'इति' शब्द के होने पर 'पररूप' होता है—यह अवगन्तव्य है।

## नाम्रेडितस्यान्त्यस्य तु वा ॥ ९९ ॥

अव्यक्तानुकरणस्याम्रेडितस्य योऽच्छब्द इतौ तस्य पररूपं न भवति तस्य योन्त्यस्तकारस्तस्य वा भवति। पटत्पटदिति, पटत्पटेति करोति। नित्यवीप्सयोरिति द्विर्वचनम्। यदा तु समुदायानुकरणं तदा भवत्येव पूर्वेण पररूपम्—पटत्पटिति करोति ॥

## नित्यमाम्रेडिते डाचि(१) ॥ १०० ॥

अव्यक्तानुकरणस्यातोऽन्त्यस्येति चानुवर्त्तते। डाच्परं यदाम्रेडितं तस्मिन् पूर्वस्याव्यक्तानुकरणस्याच्छब्दस्य योन्त्यस्तकारस्तस्य पूर्वस्य परस्य चाद्यस्य वर्णस्य नित्यं पररूपमेकादेशो भवति। पटपटा करोति। दमदमा करोति(२)। पटदित्यस्मादव्यक्तानुकरणादिति डाचि विहिते डाचि बहुलमिति द्विर्वचनं तच्च टिलोपात् पूर्वमेवेष्यते ॥

## अकः सवर्णे दीर्घः ॥ १०१ ॥

अकः सवर्णेऽचि परतः पूर्वपरयोः स्थाने दीर्घ एकादेशो भवति। दण्डाग्रम्। दधीन्द्रः। मधूदके। होतॄश्यः। अक इति किम्? अग्नये। सवर्ण इति किम्? दध्यत्र। अचीत्येव—कुमारी शेते। नाज्झलावित्यत्र यदजिति प्रत्याहारग्रहणं तत्र ग्रहणकशास्त्रस्यानभिनिर्वृत्तत्वात् सवर्णा न गृह्यन्त इति सवर्णत्वमीकारशकारयोरप्रतिषिद्धम्। ॐसवर्णदीर्घत्वे ऋति ऋ(३) वा वचनम्ॐ। ऋति सवर्णे परभूते तत्र ऋ वा भवतीति वक्तव्यम्। होतृ ऋकारः, होतृकारः। यदा न ऋ तदा दीर्घ एव होतॄकारः। ॐऌति ऌ(४) वा वचनम्ॐ सवर्णे परतो ऌ वा भवतीति वक्तव्यम्। होतृ ऌकारः होतॢकारः। होतॄकारः। ऋकारऌका-

---

नाम्रेडित—अव्यक्तानुकरण के आम्रेडित 'अत्' शब्द के परे 'इति' शब्द के होने पर भी पररूप एकादेश नहीं होता है किन्तु 'अत्' शब्दघटक तकारमात्र तथा इति के आद्यावयव—इ—के स्थान में विकल्प से 'पररूप' होता है।

नित्यम्—डाच्-प्रत्ययविशिष्ट अव्यक्तानुकरणघटक आम्रेडित 'अत्' शब्द के परे 'इति' शब्द के होने पर पूर्वपर के स्थान में नित्य 'पररूप' एकादेश होता है।

अकः—अक् से परे सवर्ण अच् के परे होने पर पूर्वपर के स्थान में दीर्घ एकादेश होता है।

सवर्णदीर्घत्वे—ऋकारस्वरूप अक् से परे ऋकारस्वरूप सवर्ण अक् के होनेपर पूर्वपर के स्थान में विकल्प से 'ऋ' आदेश होता है।

ऌति—ऋकारस्वरूप अक् से परे लकारात्मक सवर्ण अच् के होने पर विकल्प से 'ऌ' आदेश होता है।

---

(१) वार्तिके दर्शनादपाणिनीयमेतत्। "वार्तिकमेवेदं वृत्तिकृता सूत्ररूपेण पठित"मिति पदमञ्जरीकृदुक्तिरपि प्रमाणम्।

(२) मटमटा करोतीत्यधिकं पुस्तकान्तरे।

(३) अत्र ऋकारयोः स्थाने नापि ह्रस्वः नापि दीर्घ आदेशः अपि तु विलक्षण एवोभाभ्याम् ह्रस्वदीर्घाभ्याम् स इति "तुल्यास्य" सूत्रे भाष्यकैयटयोः स्पष्टम्। स्वरूपं च—मध्ये व्यञ्जनं रेफद्वयम्—र्र्—इति, एतयोः द्वयोः सम्बन्धः एकेन ह्रस्वेन ऋकारेण। परन्तु अस्य ऋकारस्य अंशद्वयम् क्रमेण रेफद्वयस्य पुरस्तात् उपरिष्टाच्च वर्त्तमानम्। तथा च व्यञ्जनयोरेका मात्रा एका च ऋकारस्येति आदेशो द्विमात्रिक एव यद्यपि तथापि दीर्घऋकारविलक्षणत्वं स्फुटमेव। (श्रीना०)

(४) अत्रापि पूर्वादेशवत् लद्वयम्—ल् ल्—इति। ततश्च लकारद्वयस्य पुरस्तादुपरिष्टाच्च ऌकारस्यैकमात्रिकस्य द्वावंशाविति अर्धमात्रिकव्यञ्जनयोरेका मात्रा एका च ऌकारस्येति सङ्कलने द्विमात्रिकोप्यादेशो दीर्घऋकारविलक्षण एव। प्राचीनास्तु सवर्णदीर्घत्वे प्राप्ते वार्तिकद्वयेन ह्रस्वादेशो विधीयते इत्याहुः, तच्चिन्त्यम्। (श्रीना०)

रयोः सवर्णविधिरुक्तः, दीर्घपक्षे तु समुदायान्तरतमस्य लृवर्णस्य दीर्घस्याभावात् ऋकारः क्रियते ॥

## प्रथमयोः पूर्वसवर्णः ॥ १०२ ॥

अक इति दीर्घ इति च वर्त्तते । प्रथमाशब्दो विभक्तिविशेषे रूढस्तत्साहचर्यात् द्वितीयापि प्रथमेत्युक्ता । तस्यां प्रथमायां द्वितीयायां च विभक्तावचि अचः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घ एकादेशो भवति । अग्नी । वायू । वृक्षाः । प्लक्षाः । वृक्षान् । प्लक्षान् । अतो गुण इति यदकारे पररूपं तदकः सवर्णे दीर्घत्वमेव बाधते, न तु पूर्वसवर्णदीर्घत्वं, पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् इति । अचीत्येव—वृक्षः । प्लक्षः । अक इत्येव—नावौ । पूर्वसवर्णग्रहणं किम् ? अग्नी इत्यत्र पक्षे परसवर्णो मा भूत् । दीर्घग्रहणं किम् ? त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्यर्थम् ॥

## तस्माच्छसो नः पुंसि ॥ १०३ ॥

तस्मात् पूर्वसवर्णदीर्घादुत्तरस्य शसोऽवयवस्य सकारस्य पुंसि नकारादेशो भवति । वृक्षान् । अग्नीन् । वायून् । कर्तॄन् । हर्तॄन् । पण्डकान् । स्थूरान् । अरकान् पश्य । सर्व एते पुँल्लिङ्गविशिष्टं स्वार्थं प्रतिपादयन्ति । इह तु चञ्चेव चञ्चा, लुम्मनुष्य इति कनो लुपि कृते लुपि युक्तवद्व्यक्तिवचन इति पुंसोऽपि स्त्रीलिङ्गता, तेन नत्वं न भवति, चञ्चाः पश्य, वध्रिकाः पश्येति । तस्मादिति किम् ? एतांश्चरतो गाः पश्य । शस इति किम् ? वृक्षाः । प्लक्षाः । पुंसीति किम् ? धेनूः । बह्वीः । कुमारीः ॥

## नादिचि ॥ १०४ ॥

अवर्णादिचि पूर्वसवर्णदीर्घो न भवति । वृक्षौ । प्लक्षौ । खट्वे । कुण्डे । आदिति किम् ? अग्नी । इचीति किम् ? वृक्षाः ॥

## दीर्घाज्जसि च ॥ १०५ ॥

दीर्घाज्जसि इचि च परतः पूर्वसवर्णदीर्घो न भवति । कुमार्यौ । कुमार्यः । ब्रह्मबन्ध्वौ । ब्रह्मबन्ध्वः ॥

## वा छन्दसि ॥ १०६ ॥

दीर्घाच्छन्दसि विषये जसि च इचि च परतो वा पूर्वसवर्णदीर्घो न भवति । मारुतीश्चतस्रः । पिण्डीः । मारुत्यश्चतस्रः । पिण्ड्यः । वाराही । उपानही । वाराह्यौ । उपानह्यौ ॥

## अमि पूर्वः ॥ १०७ ॥

---

प्रथमयोः—अक् से परे प्रथमा, द्वितीया के सम्बन्धी अच् के परे होने पर पूर्वपर के स्थान में पूर्वस्थानी के सवर्ण दीर्घ एकादेश होता है ।

तस्मात्—पूर्वस्थानी के सवर्ण दीर्घ से उत्तरवर्त्ती शस् विभक्ति के अवयव 'स्' के स्थान में पुल्लिङ्ग में 'न्' आदेश हो जाता है ।

नादिचि—अवर्ण से पर प्रथमा तथा द्वितीया के सम्बन्धी 'इच्' के होने पर पूर्वसवर्णदीर्घ नहीं होता है ।

दीर्घाज्जसि—दीर्घ अक् से पर जस् तथा 'इच्' के परे होने पर भी पूर्वसवर्ण दीर्घ नहीं होता है ।

वा छन्दसि—दीर्घ अक् से पर जस् तथा 'इच्' के परे होने पर भी वेद-प्रयोग में विकल्प से पूर्वसवर्णदीर्घ एकादेश हो जाता है ।

अमि—अक् से परे अम् के होने पर पूर्वपर के स्थान में 'पूर्वरूप' एकादेश हो जाता है ।

अक इत्येव। अमि परतोऽकः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। वृक्षम्। प्लक्षम्। अग्निम्। वायुम्। पूर्वग्रहणं किम्? पूर्वं एव यथा स्यात्, पूर्वसवर्णोऽन्तरतमो मा भूदिति कुमारीमित्यत्र हि त्रिमात्रः स्यात्। वा छन्दसीत्येव—शर्मीं च। शम्यं च। गौरीं च। गौर्यं च॥

## संप्रसारणाच्च॥ १०८॥

पूर्वं इत्येव। संप्रसारणादचि परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। यजि-इष्टम्। वपि-उप्तम्। ग्रहि-गृहीतम्। संप्रसारणविधानसामर्थ्याद्धिगृहीतस्य श्रवणे प्राप्ते पूर्वत्वं विधीयते। वा छन्दसीत्येव—मित्रावरुणौ यज्यमानौ, पूर्वत्वविधाने सत्यर्थवत्सं- प्रसारणविधानम् इष्ट इत्येवमादिषु इति पूर्वत्वाभावे यणादेशो भवत्येव, अन्तरङ्गे चाविकृतार्थं वचनमिति बाह्ये पश्चात्संनिपतिते पूर्वत्वं न भवति-शकह्वौ। शकह्वर्थम्॥

## एङः पदान्तादति॥ १०९॥

एङ् यः पदान्तस्तस्मादति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। अग्नेऽत्र। वायोऽत्र। अयवादेशयोरयमपवादः। एङ इति किम्? दध्यत्र। मध्वत्र। पदान्तादिति किम्? चयनम्। लवनम्। अतीति किम्? वायो इति। भानो इति। वायविति। भानविति। तपरकरणं किम्? वायवाबाहि॥

## ङसिङसोश्च॥ ११०॥

एङ इति वर्तते, अतीति च। एङ उत्तरयोर्ङसिङसोरति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। अग्नेरागच्छति। वायोरागच्छति। अग्नेः स्वम्। वायोः स्वम्। अपदान्तार्थं आरम्भः॥

## ऋत उत्॥ १११॥

ङसिङसोरित्येव। ऋकारान्तादुत्तरयोर्ङसिङसोरति परतः पूर्वपरयोरुकार एकादेशो भवति। होतुरागच्छति। होतुः स्वम्। द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यः स लभतेऽन्तरव्यपदेशमिति, उरण् रपर इति रपरत्वमत्र कृत्वा रात्सस्येति सलोपः कर्तव्यः॥

## ख्यत्यात् परस्य॥ ११२॥

ङसिङसोरिति वर्तते, उदिति च। ख्यत्यादिति खिशब्दखीशब्दयोस्तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणं, ताभ्यां परस्य ङसिङसोरत उकारादेशो भवति। सख्युरागच्छति। पत्युः स्वम्। खीशब्दस्योदाहरणम्—सह खेन वर्तत इति सखस्तमिच्छतीति क्यच् सखीयति, सखीयतेः क्विप् सखीस्तस्य ङसिङसोः सख्युरिति। तीशब्दस्यापि लूनमिच्छति, लूनीयति, लूनीयतेः क्विपि लुसे, लूव्युरागच्छति। लूव्युः स्वम्। निष्ठानत्वं पूर्वत्रा-

---

सम्प्रसारणाच्च—सम्प्रसारण से परे भी अच् के होने पर भी पूर्वपर के स्थान में 'पूर्वरूप' एकादेश होता है।

एङः—पदान्त एङ् से परे अत् के होने पर पूर्वपर के स्थान में 'पूर्वरूप' एकादेश होता है।

ङसि—एङ् से परे ङसि तथा ङस् के सम्बन्धी अत् के होने पर भी पूर्वपर के स्थान में 'पूर्वरूप' एकादेश होता है।

ऋत उत्—ऋकार से परे ङसि तथा ङस् के सम्बन्धी अत् के होने पर भी पूर्वपर के स्थान में पूर्वरूप एकादेश होता है।

ख्यत्यात्—कृतयणादेश खि, खी, ति तथा ती शब्दों से परे ङसि तथा ङस् के सम्बन्धी अत् के स्थान में उकारादेश हो जाता है।

सिद्धमित्यसिद्धम् । विकृतनिर्द्देशादेवेह न भवति—अतिसखेरागच्छति, सेनापतेरागच्छतीति । सखिशब्दस्य केवलस्य घिसंज्ञा प्रतिषिध्यते न तदन्तस्य ॥

## अतो रोरप्लुतादप्लुते ॥ ११३ ॥

अतीति, उदिति च वर्त्तते । आकारादप्लुतादुत्तरस्य रोरेफस्य उकारानुबन्धविशिष्टस्य अकारेऽप्लुते परत उकारादेशो भवति । वृक्षोऽत्र । भोभगोअघोअपूर्वस्य योऽशीत्यस्मिन् प्राप्ते उत्वं विधीयते । रुत्वमस्याश्रयत्वात् पूर्वत्रासिद्धमित्यसिद्धं न भवति । अत इति किम् ? अग्निरत्र । तपरकरणं किम् ? वृक्षा अत्र । सानुबन्धग्रहणं किम् ? स्वरत्र । प्रातरत्र । अतीत्येव—वृक्ष इति । तस्यापि तपरत्वादत्र न भवति—वृक्ष आश्रितः । अप्लुतादिति किम् ? सुस्रोता ३ अत्र न्वसि । अप्लुत इति किम् ? तिष्ठतु पय आ३ शिवन् । अत्र प्लुतस्यासिद्धत्वादुत्वं प्राप्नोतीत्यप्लुतादप्लुत इत्युच्यते ॥

## हशि च ॥ ११४ ॥

हशि च परतोऽत उत्तरस्य रोरुकारादेशो भवति । पुरुषो याति । पुरुषो हसति । पुरुषो ददाति ।

## प्रकृत्यान्तः पादमव्यपरे ॥ ११५ ॥

एङोऽतीत्येव । एङ इति यत्पञ्चम्यन्तमनुवर्त्तते तदर्थादिह प्रथमान्तं भवति । प्रकृतिरिति स्वभावः कारणं वाऽभिधीयते । अन्तरित्यव्ययमधिकरणभूतं मध्यमाचष्टे । पादशब्देन च ऋक्पादस्यैव ग्रहणमिष्यते न तु श्लोकपादस्य । अवकारयकारपरेऽति परत एङ् प्रकृत्या भवति, स्वभावेनावतिष्ठते कारणाऽऽत्मना वा भवति न विकारमापद्यते, तौ चेन्निमित्तकार्यिणावन्तः पादमृक्पादमध्ये भवतः । ते अग्रे अश्वमायुञ्जन् , ते अस्मिन् जवमादधुः । उपप्रयन्तो अध्वरम् । शिरो अपश्यम् । सुजाते अश्वसूनृते । अध्वर्यो अद्रिभिः सुतम् । अन्तःपादमिति किम् ? कया मती कुत एतास एतेऽर्चयन्ति । अव्यपर इति किम् ? तेऽवदन् । तेऽयस्मयम् । एङिति किम् ? अन्वग्निरुषसामग्रमख्यत् । केचिदिदं सूत्रम्—नान्तः पादमव्यपरे इति पठन्ति, ते संहितायामिह यदुच्यते तस्य सर्वस्य प्रतिषेधं वर्णयन्ति ॥

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ११६ ॥

अव्यात् , अवद्यात् , अवक्रमु, अव्रत, अयम् , अवन्तु, अवस्यु इत्येतेषु यकारवकारपरेऽत्वति परतोऽन्तः पादमेङ् प्रकृत्या भवति । अग्निः प्रथमो वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रताः । शतधारो अयं मणिः । ते नो अवन्तु पितरः । कुशिकासो अवस्यवः ॥

---

अतो—अप्लुत अकार से परे अप्लुत अकार के होने पर उकारानुबन्ध विशिष्ट र् (= रु) के स्थान में उकारादेश हो जाता है ।

हशि—अप्लुत अकार से परे हश् के होने पर भी रु के स्थान में अकारादेश हो जाता है ।

प्रकृत्या—वकारपूर्वस्थ तथा यकारपूर्वस्थ से भिन्न अत् के परे पूर्व एङ् प्रकृति-स्थित (एकादेशाभाववान्) ही रह जाता है यदि प्रकृतिस्थिति का आश्रय तथा उसका निमित्त अत् ऋक्पादमध्यस्थ हो ।

अव्याद्—अव्यात , अवद्यात , अवक्रमु, अव्रत, अयम् , अवन्तु तथा अवस्यु शब्दों के वकारपूर्वस्थ तथा यकारपूर्वस्थ अत् के परे होने पर भी एङ् प्रकृति-स्थित ही रह जाता है ।

## यजुष्युरः ॥ ११७ ॥

उरःशब्द एङन्तो यजुषि विषयेऽति प्रकृत्या भवति। उरो अन्तरिक्षम्। अपरे यजुष्युरो इति सूत्रं पठन्ति। उकारान्तमुरुशब्दं संबुद्ध्यन्तमधीयते त इदमुदाहरन्ति—उरो अन्तरिक्षं सजूरिति। यजुषि पादानामभावादनन्तःपादार्थं वचनम्।

## आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बालेऽम्बिकेपूर्वे ॥ ११८ ॥

यजुषीत्येव। आपो, जुषाणो, वृष्णो, वर्षिष्ठे इत्येते शब्दा अम्बे अम्बाले इत्येतौ च यावम्बिकेशब्दात् पूर्वौ यजुषि पठितौ ते अति परतः प्रकृत्या भवन्ति। आपो अस्मान्मातरः शुन्धयन्तु। जुषाणो अप्तुराज्यस्य। वृष्णो अंशुभ्यां गभस्तिभिः। वर्षिष्ठे अधिनाके। अम्बे अम्बाले अम्बिके। यजुषीदमीदृशमेव पठ्यते, अस्मादेव निपातनात् अम्बार्थनद्योर्ह्रस्वः इति ह्रस्वत्वं न भवति॥

## अङ्ग इत्यादौ च ॥ ११९ ॥

अङ्गशब्दे(१) य एङ् तदादौ चाकारे यः पूर्वः स यजुषि विषयेऽति प्रकृत्या भवति। ऐन्द्रः प्राणो अङ्गे अङ्गे अदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे अशोचिषम्॥

## अनुदात्ते च कुधपरे ॥ १२० ॥

यजुषीत्येव। अनुदात्ते चाति कवर्गधकारपरे परतो यजुषि विषये एङ् प्रकृत्या भवति। अयं सो अग्निः। अयं सो अध्वरः। अनुदात्त इति किम्? अधोग्रे। अग्रशब्द आद्युदात्तो निपात्यते। कुधपर इति किम्? सोऽयमग्निः सहस्रियः॥

## अवपथासि च ॥ १२१ ॥

यजुषीत्येव। अनुदात्त इति चशब्देनानुकृष्यते। अवपथाः शब्देऽनुदात्तेऽकारादौ परतो यजुषि विषय एङ् प्रकृत्या भवति। त्री रुद्रेभ्यो अवपथाः। चपेर्लङि थासि तिङ्ङतिङ इति निघातेनानुदात्तत्वम्। अनुदात्त इत्येव—यद्रुद्रेभ्योऽवपथा। निपातैर्यद्यदिहन्तेति निघातः प्रतिषिद्ध्यते॥

## सर्वत्र विभाषा गोः ॥ १२२ ॥

सर्वत्र, छन्दसि भाषायां चाति परतो गोरेङ् प्रकृत्या भवति विभाषा। गो अग्रम्। गोऽग्रम्। छन्दसि-अपशवो वा अन्ये गोअश्वेभ्यः, पशवो गोश्वाः॥

---

यजुष्युरः—अत् के परे होने पर भी एङन्त उरस् शब्द भी यजुर्वेद में प्रकृति-स्थित ही बना रह जाता है।

आपो—अत् के परे होने पर भी यजुर्वेद में आपो, जुषाणो, वृष्णो, वर्षिष्ठे तथा अम्बिके शब्द से पूर्ववर्त्ती अम्बे तथा अम्बाले शब्द प्रकृति-स्थित ही रहते हैं।

अङ्ग—अङ्गशब्दघटक एङ् अङ्गशब्दावयवय अत् के परे तथा अङ्गशब्दावयव एङ् किसी अत् के परे होने पर प्रकृतिस्थित ही रह जाता है यजुर्वेद में।

अनुदात्ते—कवर्गपरक तथा धकारपरक अनुदात्त अत् के परे भी पूर्व एङ् प्रकृति-स्थित ही रहता है यजुर्वेद में।

अव—अवपथाःशब्दघटक अनुदात्त अत् के परे भी पूर्व एङ् प्रकृति-स्थित रहता है।

सर्वत्र—लोक तथा वेद में अत् के परे होने से गोशब्दघटक एङ् प्रकृति-स्थित रहता है।

---

(१) अङ्गशब्दे (वर्त्तमानः) य एङ् स अति प्रकृत्या, तदादौ (अङ्गशब्दादौ) अकारे (परे) यः पूर्वः (एङ्) स अति (सामर्थ्यादङ्गशब्दावयवे) प्रकृत्येति च अन्वयः। (मीना०)

## अवङ् स्फोटायनस्य ॥ १२३ ॥

अतीति निवृत्तम्। अचीत्येतत्त्वनुवर्त्तत एव। अचि परतो गोः स्फोटायनस्याचार्यस्य मतेनावङादेशो भवति। गवाग्रम्। गोऽग्रम्। गवाजिनम्। गोऽजिनम्। गवौदनम्। गवोदनम्। गवोष्ट्रम्। गवुष्ट्रम्। आद्युदात्तश्चायमादेशो निपात्यते। स निपातनस्वरो बहुव्रीहौ प्रकृतिस्वरविधाने भवति—गावो अग्रमस्य गवाग्र इति। अन्यत्र तु समासान्तोदात्तत्वेन बाध्यते। स्फोटायनग्रहणं पूजार्थम्, विभाषेत्येव हि वर्तते। व्यवस्थितविभाषेयम्। तेन गवाक्ष इत्यत्र नित्यमवङ् भवति॥

## इन्द्रे च(१) नित्यम् ॥ १२४ ॥

इन्द्रशब्दस्थेऽचि परतो गोर्नित्यमवङादेशो भवति। गवेन्द्रः। गवेन्द्रयज्ञस्वरः (२)॥

## प्लुतप्रगृह्या अचि ॥ १२५ ॥

प्लुताश्च प्रगृह्याश्चाचि प्रकृत्या भवन्ति। देवदत्ता ३ अत्र न्वसि। यज्ञदत्ता ३ इदमानय। आश्रयादत्र प्लुतः सिद्धः। प्रगृह्याः—अग्नी इति। वायू इति। खट्वे इति। माले इति। अचीत्यनुवर्त्तमाने पुनरज्ग्रहणमादेशनिमित्तस्याचः परिग्रहार्थम्। तेनेह न भवति—जानु उ अस्य रुजति, जान्वस्य रुजति। प्रगृह्यादुकारात् परस्याकारस्य सवर्णदीर्घत्वं प्रत्ययनिमित्तत्वादत्र प्रकृतिभावो न भवति। नित्यग्रहणमिहानुवर्त्तते। प्लुतप्रगृह्याणां नित्यमयमेव प्रकृतिभावो यथा स्याद्; इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च इत्येतन्मा भूदिति॥

## आङोऽनुनासिकश्छन्दसि ॥ १२६ ॥

आङोऽचि परतः संहितायां छन्दसि विषयेऽनुनासिकादेशो भवति, स च प्रकृत्या भवति। अभ्रआँ अपः। गभीरआँ उग्रपुत्रे जिघांसत। केचित् आङोऽनुनासिकश्छन्दसि बहुलम् इत्यधीयते। तेनेह न भवति—इन्द्रो बाहुभ्यामातरत्, आ अतरत्॥

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२७ ॥

इकोऽसवर्णेऽचि परतः शाकल्यस्याचार्यस्य मतेन प्रकृत्या भवन्ति, ह्रस्वश्च तस्येकः स्थाने भवति। दधि अत्र। दध्यत्र। मधु अत्र। मध्वत्र। कुमारि अत्र। कुमार्यत्र। किशोरि अत्र। किशोर्यत्र। इक इति किम्? खट्वेन्द्रः। असवर्ण इति किम्? कुमारीन्द्रः। शाकल्यस्य ग्रहणं पूजार्थम्। आरम्भसामर्थ्यादेव हि यणादेशेन सह विकल्पः सिद्धः।

---

अवङ्—अच् के परे गोशब्द को अवङ् आदेश हो जाता है 'स्फोटायन' आचार्य के मत में।

इन्द्रे च—इन्द्रशब्दघटक अच् के परे भी गोशब्द के स्थान में नित्य अवङ् आदेश हो जाता है।

प्लुत—अच् के परे होने पर प्लुत तथा प्रगृह्यसंज्ञक शब्द प्रकृति-स्थित बने रहते हैं।

आङो—अच् के परे होने पर आङ् भी प्रकृतिस्थित रह जाता है संहिता में छन्दोविषय में।

इकोऽसवर्णे—असवर्ण अच् के परे होने पर इक् भी 'शाकल्य' आचार्य के मत में प्रकृति-स्थित रहता है, परन्तु यदि इक् दीर्घ रहता है तो उसके स्थान में ह्रस्वादेश हो जाता है।

---

(१) यद्यपि नव्यवैयाकरणमते 'नित्यम्' इत्यंशः उत्तरसूत्रान्त्यावयवः, पदमञ्जरी चात्रानुकूला तथापि न्यासाद्यनुरोधाद् अस्माभिः अत्रैव सन्निवेशितः, कथमन्यथा इन्द्रशब्दे नित्य आदेशः स्यात्? (श्रीना०)

(२) यज्ञचरः इति पाठान्तरम्।

॥सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः॥। सिति-अयं ते योनिर्ऋत्वियः(१)। नित्यसमासे-व्याकरणम्, कुमार्यर्थम्। ॥ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रं वक्तव्यम्॥। ईषा अक्षः। का ईमरे पिशङ्गिला। पथा अगमन्॥

## ऋत्यकः ॥ १२८ ॥

शाकल्यस्य ह्रस्वश्चेत्येतदनुवर्तते। ऋकारे परतः शाकल्यस्याचार्यस्य मतेनाकः प्रकृत्या भवन्ति, ह्रस्वश्च तस्याकः स्थाने भवति। खट्व ऋश्यः। माल ऋश्यः। कुमारि ऋश्यः। होतृ ऋश्यः(२)। ऋतीति किम्? खट्वेन्द्रः। अक इति किम्? वृक्षावृश्यः। सवर्णार्थमनिगर्थं च वचनम्॥

## अप्लुतवदुपस्थिते ॥ १२९ ॥

उपस्थितं नामाऽनार्ष इतिकरणः समुदायादवच्छिद्य पदं येन स्वरूपेऽवस्थाप्यते तस्मिन् परतः प्लुतोऽप्लुतवद्भवति। प्लुतकार्यं प्रकृतिभावं न करोति। सुश्लोका ३ इति, सुश्लोकेति। सुमङ्गला ३ इति सुमङ्गलेति। वत्करणं किम्? अप्लुत इत्युच्यमाने प्लुत एव प्रतिषिध्येत। तत्र को दोषः? प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्—अग्नी ३ इति, वायू ३ इति॥

## ई ३ चाक्रवर्मणस्य ॥ १३० ॥

ई ३ कारः प्लुतोऽचि परतश्चाक्रवर्मणस्याऽऽचार्यस्य मतेनाप्लुतवद्भवति। अस्तु हीत्यब्रवीत्। अस्तु ही ३ इत्यब्रवीत्। चिनु हीदम्। चिनुही ३ इदम्। चाक्रवर्मणग्रहणं विकल्पार्थम्। तदुपस्थिते निवृत्त्यर्थम् अनुपस्थिते प्राप्त्यर्थमित्युभयत्र विभाषेयम्। इकारादन्यत्राऽप्ययमप्लुतवद्भाव इष्यते। वशा ३ इयम्। वशेयम्॥

## दिव उत् ॥ १३१ ॥

एङः पदान्तादतीत्यतः पदग्रहणमनुवर्तते। दिव इति प्रातिपदिकं गृह्यते, न धातुः, सानुबन्धकत्वात्। दिवः पदस्य उकारादेशो भवति। दिवि कामो यस्य द्युकामः। द्युमान्। विमलद्यु दिनम्। द्युभ्याम्। द्युभिः। निरनुबन्धकग्रहणादिह न भवति-अक्षद्यूभ्याम्, अक्षद्यूभिरिति। तपरकरणमूठो निवृत्त्यर्थम्—द्युभ्यां द्युभिरिति। अत्र हि परत्वादूठ् प्राप्नोति। पदस्येति किम्? दिवौ, दिवः॥

---

सिन्नित्य—सित् प्रत्यय के परे तथा नित्यसमासविषय में शाकल्यमतानुसारी विधि का प्रतिषेध समझना चाहिए।

ईषा—'ईषा अक्ष' आदि वैदिक प्रयोगों की उपपत्ति के लिए केवल प्रकृतिस्थिति का विधान समझना चाहिए, ह्रस्वविधान नहीं।

ऋत्यकः—ऋकार के परे अक् प्रकृतिस्थित ही रहता है और यदि वह अक् दीर्घ हो तो उसे ह्रस्व आदेश भी हो जाता है 'शाकल्य' आचार्य के मत में।

अप्लुत—अनार्ष 'इति' शब्द के परे प्लुत को अप्लुतवद्-भाव हो जाता है।

ई चाक्र—अच् के परे ईकारात्मक प्लुत अप्लुतवत् हो जाता है 'चाक्रवर्मण' आचार्य के मत में।

दिव—दिव् शब्द को उकार अन्तादेश हो जाता है।

---

(१) ऋतुः प्राप्तोऽस्येति विग्रहे 'ऋतोरण्' इत्यण्, 'छन्दसि घस्' इत्यनेन तस्य घसादेशे इयादेशे रूपम्। (श्रीना०)

(२) पोतृ ऋश्य इत्यधिकं पुस्तकान्तरे।

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ १३२ ॥

एतत्तदौ यावककारौ नञ्समासे न वर्त्तेते तयोर्यः सुशब्दः; कश्च तयोः सुशब्दः ? यस्तदर्थेन संबद्धस्तस्य संहितायां विषये हलि परतो लोपो भवति । एष ददाति । स ददाति । एष भुङ्क्ते । स भुङ्क्ते । एतत्तदोरिति किम् ? यो ददाति । यो भुङ्क्ते । सुग्रहणं किम् ? एतौ गावौ चरतः । अकोरिति किम् ? एषको ददाति । सको ददाति । तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति रूपभेदेऽपि साकचूकावेतत्तदावेव भवतः । अनञ्समास इति किम् ? अनेषो ददाति । असो ददाति । उत्तरपदार्थप्रधानत्वान्नञ्समासस्यैतत्तदोरेवात्र संबद्धः सुशब्दः । हलीति किम् ? एषोऽत्र । सोऽत्र ॥

## स्यश्छन्दसि बहुलम् ॥ १३३ ॥

स्य इत्येतस्य छन्दसि हलि परतो बहुलं सोर्लोपो भवति । एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि । एष स्य ते मधुमाँ इन्द्र सोमः । न च भवति—यत्र स्यो निपतेत् ॥

## सोऽचि लोपे चेत् पादपूरणम् ॥ १३४ ॥

स इत्येतस्याचि परतः सुलोपो भवति लोपे सति चेत्पादः पूर्यते । सेन्द्रु राजा क्षयति चर्षणीनाम् । सौषधीरनुरुध्यसे । लोपे चेत्पादपूर्णमिति किम् ? स इव व्याघ्रो भवेत् । अचीति विस्पष्टार्थम् । पादग्रहणेनात्र श्लोकपादस्यापि ग्रहणं केचिदिच्छन्ति । तेनेदमपि सिद्धं भवति—

सैष दाशरथी रामः सैष राजा युधिष्ठिरः ।
सैष कर्णो महात्यागी सैष भीमो महाबलः ॥

## सुट् कात् पूर्वः ॥ १३५ ॥

अधिकारोऽयं पारस्करप्रभृतीनि च संज्ञायामिति यावत् । इत उत्तरं यद्वक्ष्यामस्तत्र सुडिति कात् पूर्व इति चैतदधिकृतं वेदितव्यम् । वक्ष्यति—संपर्युपेभ्यः करोतौ भूषणे—संस्कर्ता । संस्कर्तुम् । संस्कर्तव्यम् । कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम् । तथाहि संस्क्रीष्ट, संस्क्रियत इति संयोगादिलक्षणाविड्गुणौ न भवतः । तिङ्ङतिङ इति निघातोऽपि तर्हि न प्राप्नोति, सुटा व्यवहितत्वात् ? स्वरविधौ व्यञ्जनमविद्यमानवदिति वचनान्नास्ति व्यवधानम् । संचस्करतुः, संचस्करुरिति गुणः कथम् ? तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति । संयोगोपधग्रहणं च ऋतश्च संयोगादेर्गुण इत्यत्र कर्तव्यम् । टित्करणं सुट्स्तुस्वञ्जामित्यत्र विशेषणार्थम् ॥

---

एतत्तदोः—ककाररहित एतत् तथा तत् शब्द यदि नञ् के साथ समस्त न हों तो उनसे सम्बद्ध 'सु' विभक्ति का हल् के परे रहने पर संहिताविषय में लोप हो जाता है ।

स्यश्छन्दसि—'स्यः' शब्द के 'सु' का छन्दोविषय-प्रयोग में संहिता-विषय में बाहुल्येन लोप हो जाता है ।

सोऽचि—'सः' के 'सु' का अच् के परे लोप हो जाता है यदि लोप होने पर छन्दः-पाद की पूर्ति होती हो ।

सुट् कात्—यहाँ से उत्तरवर्ती सूत्रों में "पारस्करप्रभृतीनि च संज्ञायाम्" सूत्र तक 'सुट्' एवम् 'कात्पूर्वः' ( 'क' से पूर्व होता है ) का अधिकार समझना चाहिए ।

## (१)अड्भ्यासव्यवायेऽपि ॥ १३६ ॥

अड्व्यवायेऽभ्यासव्यवाये सुट् कात् पूर्वो भवति । समस्करोत् । समस्कार्षीत् । संचस्कार । परिचस्कार । किमर्थं पुनरिदमुच्यते ? पूर्वं धातुरुपसर्गेण युज्यत इति । तत्र धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं सुट् क्रियते पश्चादड्भ्यासौ । अभक्तश्च सुडित्युक्तम् । ततः सकारादुत्तरावड्भ्यासावनिष्टे देशे स्याताम् । एतस्मिंस्तु सत्यत एव वचनात् कृतयोरड्भ्यासयोस्तद्व्यवायेपि सुट् कात् पूर्वः क्रियत इति सिद्धमिष्टं भवति ॥

## (२)संपर्युपेभ्यः करोतौ भूषणे ॥ १३७ ॥

सम् परि उप इत्येतेभ्यो भूषणेऽर्थे करोतौ परतः सुट् कात् पूर्वो भवति । संस्कर्त्ता । संस्स्कर्तुम् । संस्कर्तव्यम् । अत्र संपुंकानां सत्वमिति समो मकारस्य सकारः पूर्वस्य चाकारस्यानुनासिकः । परिष्कर्ता । परिष्कर्तुम् । परिष्कर्तव्यम् । सुट्स्तुस्वञ्जामिति षत्वम् । उपस्कर्त्ता । उपस्कर्त्तुम् । उपस्कर्तव्यम् । भूषण इति किम् ? उपकरोति । संपूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते—संस्कृतमन्नमिति ।

## समवाये च ॥ १३८ ॥

समवायः समुदायस्तस्मिंश्चार्थे करोतौ संपर्युपेभ्यः कात् पूर्वः सुडागमो भवति । तत्र नः संस्कृतम् , तत्र नः परिष्कृतम्, तत्र न उपस्कृतम् । समुदितमित्यर्थः ॥

## उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु(३) च ॥ १३९ ॥

सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः । विकृतमेव वैकृतम् । प्रज्ञादित्वादण् । गम्यमानार्थस्य वाक्यस्य स्वरूपेणोपादानं वाक्यस्याध्याहारः । एतेष्वर्थेषु गम्यमानेषु करोतौ धातौ परत उपात् सुट् कात् पूर्वो भवति । प्रतियत्ने तावत्—एधो दकस्योपस्कुरुते । काण्डगुणस्योपस्कुरुते । वैकृते—उपस्कृतं भुङ्क्ते । उपस्कृतं गच्छति । वाक्याध्याहारे—उपस्कृतं जल्पति । उपस्कृतमधीते । एतेष्विति किम् ? उपकरोति ।

---

अड्भ्यास—अट् तथा अभ्यास के व्यवधान होने पर क से पूर्व सुट् का आगम हो जाता है ।

संपर्युपेभ्यः—सम् , परि तथा उप उपसर्गों में किसी से भी परवर्त्ती 'कृञ्' धातु के होने पर ककार से पूर्व सुट् का आगम हो जाता है यदि समुदाय भूषणार्थक हो ।

समवाये—समवाय ( =सङ्घ ) के प्रतिपाद्य होने पर भी उक्त उपसर्ग से परे 'कृञ्' धातु के होने पर ककार से पूर्व सुट् का आगम हो जाता है ।

उपात्—गुणाधान, विकार, वाक्याध्याहार अर्थों के अभिधेय होने पर भी उप-उपसर्गविशिष्ट 'कृञ्' धातु के ककार से पूर्व सुट् का आगम हो जाता है ।

---

( १ ) एतच्च "सुट् कात्पूर्वः" इति सूत्रे भाष्ये वार्त्तिकरूपेण पठितम् । अत एव नव्यवैयाकरणैरपि एतस्य सूत्रत्वं नाङ्गीकृतम् ( श्रीना० )

( २ ) अत्र भाष्यादौ "सम्परिभ्याम् करोतौ भूषणे, समवाये च, उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च" इति पाठः । तत्र उपादिति योगे चकारेण उपात्परस्य करोतेः पूर्वोक्तार्थयोः भूषणसमवाययोः समावेशोऽवधेयः । नव्यैश्च अयमेव पन्था आक्रान्तः । वृत्तिस्थपाठे तु उभयत्र उपशब्दपाठे गौरवं स्पष्टम् इति सुधीभिर्विवेचनीयम् । हरदत्तस्तु उपघटितपाठे सूत्रकारस्य सम्मतिमन्यतैव । ( श्रीना० )

( ३ ) अत्र पदमञ्जरीप्रभृतिषु चकाररहितः पाठ उपलभ्यमानोऽपि स्पष्टत्वाद्बहुत्रोपलभ्यमानत्वाच्च चकारघटित एव अस्माभिरादृतः । ( श्रीना० )

## किरतौ लवने ॥ १४० ॥

उपादित्येव । उपादुत्तरस्मिन् किरतौ धातौ लवनविषये सुट् कात् पूर्वो भवति । उपस्कारं मद्रका लुनन्ति । उपस्कारं काश्मीरका लुनन्ति । विक्षिप्य लुनन्तीत्यर्थः ॥ णमुलत्र वक्तव्यः । लवन इति किम् ? उपकिरति देवदत्तः ॥

## हिंसायां प्रतेश्च ॥ १४१ ॥

किरतावित्येव । उपात् प्रतेश्चोत्तरस्मिन् किरतौ विषये सुट् कात् पूर्वो भवति । उपस्कीर्णं हं ते वृषल भूयात् । प्रतिस्कीर्णं हं ते वृषल भूयात् । तथा ते वृषल विक्षेपो भूयाद् यथा हिंसामनुबध्नातीत्यर्थः । हिंसायामिति किम् ? प्रतिकीर्णम् ॥

## अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ १४२ ॥

किरतावित्येव । अपादुत्तरस्मिन् किरतौ चतुष्पाच्छकुनिषु यदालेखनं तस्मिन् विषये सुट् कात् पूर्वो भवति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षयार्थी । अपस्किरते श्वा आश्रयार्थी । आलिख्य विक्षिपतीत्यर्थः । चतुष्पाच्छकुनिष्विति किम् ? अपकिरति देवदत्तः । ॐहर्षजीविकाकुलायकरणेष्विति वक्तव्यम्ॐ । इह मा भूत्—अपकिरति श्वा ओदनपिण्डमाशितः । ॐहर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदस्योपसंख्यानम्ॐ ॥

## कुस्तुम्बुरूणि जातिः ॥ १४३ ॥

कुस्तुम्बुरूणीति सुट् निपात्यते जातिश्चेद्भवति । कुस्तुम्बुरुर्नामौषधिजातिः धान्यकम् । तत्फलान्यपि कुस्तुम्बुरूणि । सूत्रनिर्देशे नपुंसकलिङ्गमविवक्षितम् । जातिरिति किम् ? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि । तुम्बुरुशब्देनात्र तिन्दुकीफलान्युच्यन्ते । समासेन तेषां कुत्सा ॥

## अपरस्पराः क्रियासातत्ये ॥ १४४ ॥

अपरस्परा इति सुट् निपात्यते क्रियासातत्ये गम्यमाने । अपरस्पराः सार्था गच्छन्ति । सन्ततमविच्छेदेन गच्छन्तीत्यर्थः । क्रियासातत्य इति किम् ? अपरपराः सार्था गच्छन्ति । अपरे परे च सकृदेव गच्छन्तीत्यर्थः । नात्र गमनस्य सातत्यप्रबन्धो विवक्षितः । किमिदं

---

किरतौ—उप उपसर्ग से परे लवनार्थक 'किर' धातु के होने पर भी ककार से पूर्व सुट् का आगम हो जाता है ।

हिंसायाम्—हिंसा के अभिधान के लिए उप तथा प्रति उपसर्गों से परे 'किर' धातु के होने पर भी ककार से पूर्व सुट् का आगम हो जाता है ।

अपात्—चतुष्पाद् जीव तथा शकुनि के द्वारा किए जाने वाले आलेखन (खरोच) के अभिधेय होने पर अप उपसर्ग से परवर्ती 'किर' धातु के ककार से पूर्व सुट् का आगम हो जाता है ।

हर्षजीविका—हर्ष, जीविका तथा कुलायकरण ( घोंसला बनाना ) अर्थों में भी अप+'किर' धातु के ककार से पूर्व सुट् का आगम प्रतिपाद्य है ।

हर्षजीविका—'किर' धातु से हर्ष, जीविका तथा कुलायकरण अर्थों में ही आत्मनेपद का विधान समझना चाहिए ।

कुस्तुम्बुरूणि—जाति के वाच्य होने पर 'कुस्तुम्बुरूणि' शब्द में ( कु+तुम्बुरूणि ) सुट् का निपातन होता है ।

अपरस्पराः—क्रियासातत्य के गम्यमान होने पर 'अपरस्पराः' शब्द में ( अपर+पराः ) सुट् का निपातन होता है ।

सातत्यमिति ? सततस्य भावः सातत्यम् । कथं सततम् ? समस्तते विकल्पेन मकारलोपो विधीयते ।

लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि ।
समो वा हिततत्तयोर्मांसस्य पचियुड्घञोः ॥

## गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४५ ॥

गोष्पदमिति सुट् निपात्यते, तस्य च षत्वं सेवितेऽसेविते प्रमाणे च विषये । गोष्पदो देशः । गावः पद्यन्ते यस्मिन् देशे स गोभिः सेवितो देशो गोष्पद इत्युच्यते । असेविते—अगोष्पदान्यरण्यानि । असेविते गोष्पदशब्दो (१)न सम्भवतीत्यगोष्पदशब्दार्थं निपातनम् । यद्येवं नार्थ एतेन, गोष्पदप्रतिषेधादगोष्पदं भविष्यति ? सत्यमेतत् । यत्र तु सेवितप्रसङ्गोऽस्ति तत्रैव स्यादगोष्पदमिति । यत्र त्वत्यन्तासम्भव एव तत्र न स्यादगोष्पदान्यरण्यानीति । असेवितग्रहणात्तत्रापि भवति । यानि हि महान्त्यरण्यानि येषु गवामत्यन्तासम्भवस्तान्येवमुच्यन्ते । प्रमाणे—गोष्पदमात्रं क्षेत्रम् । गोष्पदपूरं वृष्टो देवः । नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयते, किं तर्हि क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम् । सेवितासेवितप्रमाणेष्विति किम् ? गोः पदं गोपदम् ॥

## आस्पदं प्रतिष्ठायाम् ॥ १४६ ॥

आत्मयापनाय स्थानं प्रतिष्ठा, तस्यामास्पदमिति सुट् निपात्यते । आस्पदमनेन लब्धम् । प्रतिष्ठायामिति किम् ? आपदात् , आपदम् ॥

## आश्चर्यमनित्ये ॥ १४७ ॥

अनित्यतया विषयभूतयाऽद्भुतत्वमिह लक्ष्यते, तस्मिन्नाश्चर्यं निपात्यते । चरेराङि इति यत्प्रत्यये कृते निपातनम् सुट् । आश्चर्यं यदि स भुञ्जीत । आश्चर्यं यदि सोऽधीयीत । चित्रमद्भुतमित्यर्थः । अनित्य इति किम् ? आचर्यं कर्म शोभनम् ॥

## वर्चस्केऽवस्करः ॥ १४८ ॥

कुत्सितं वर्चो वर्चस्कमन्नमलम्, तस्मिन्नभिधेयेऽवस्कर इति निपात्यते । अवपूर्वस्य किरतेः कर्मणि ऋदोरप् इत्यप् निपातनात् सुट् । अवकीर्यत इत्यवस्करोऽन्नमलम् । तत्सम्बन्धाद्देशोऽपि तथोच्यते । वर्चस्क इति किम् ? अवकरः ॥

## अपस्करो रथाङ्गम् ॥ १४९ ॥

अपस्कर इति निपात्यते रथाङ्गं चेद्भवति । अपपूर्वात् किरतेर्ऋदोरबित्यप् , निपातनात् सुट् । अपस्करो रथावयवः । रथाङ्गमिति किम् ? अपकरः ॥

---

गोष्पदम्—सेवित, असेवित तथा प्रमाण ( लम्बाई-चौड़ाई, क्षेत्रफल ) अर्थों में 'गोष्पद' शब्द की सिद्धि के लिए ( गो+पद ) सुट् का निपातन होता है ।

आस्पदम्—प्रतिष्ठा अर्थ में 'आस्पद' शब्द की सिद्धि के लिए ( आ+पद् ) सुट् का निपातन होता है ।

आश्चर्यम्—अद्भुतत्व के द्योतन के निमित्त 'आश्चर्य' शब्द की सिद्धि के लिए (आ+चर्य) सुट् का निपातन होता है ।

वर्चस्के—अन्नमल के अर्थ में 'अवस्कर' शब्द की सिद्धि के लिए ( अव+कर ) सुट् का निपातन होता है ।

अपस्करो—रथाङ्ग अर्थ में 'अपस्कर' शब्द की सिद्धि के लिए ( अप+कर ) सुट् का निपातन होता है ।

---

( १ ) अप्राप्ते प्रतिषेधस्यानर्थक्यादिति तदाशयः । ( श्रीना० )

## विष्किरः शकुनिर्विकिरो वा ॥ १५० ॥

विकिर इति किरतेर्विपूर्वस्येगुपधज्ञाप्रीकिरः क इति कप्रत्यये विहिते सुट् निपात्यते शकुनिश्चेद्भवति। विकिरशब्दाभिधेयो वा शकुनिर्भवति।

सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते।

विष्किरो वा शकुनाविति वाग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणमिह तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत् ॥

## ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ १५१ ॥

चन्द्रशब्द उत्तरपदे ह्रस्वात् परः सुडागमो भवति मन्त्रविषये। सुश्चन्द्रो युष्मान्। ह्रस्वादिति किम् ? सूर्याचन्द्रमसाविव। मन्त्र इति किम् ? सुचन्द्रा पौर्णमासी। उत्तरपदं समास एव भवतीति प्रसिद्धम्, तत इह न भवति—शुक्रमसि चन्द्रमसि ॥

## प्रतिष्कशश्च कशेः ॥ १५२ ॥

कश गतिशासनयोरित्येतस्य धातोः प्रतिपूर्वस्य पचाद्यचि कृते सुट् निपात्यते, तस्यैव षत्वम्। ग्राममद्य प्रवेचयामि भव मे त्वं प्रतिष्कशः।

वार्तापुरुषः सहायः पुरोयायी वा प्रतिष्कश इत्यभिधीयते। कशेरिति किम् ? प्रतिगतः कशां प्रतिकशोऽश्वः। अत्र यद्यपि कशेरेव कशाशब्दस्तथापि कशेरिति धातोरुपादानं तदुपसर्गस्य प्रतेः प्रतिपत्त्यर्थम्। तेन धात्वन्तरोपसर्गान्न भवति ॥

## प्रस्कण्वहरिश्चन्द्रावृषी ॥ १५३ ॥

प्रस्कण्वो हरिश्चन्द्र इति सुट् निपात्यते ऋषी चेदभिधेयौ भवतः। प्रस्कण्व ऋषिः। हरिश्चन्द्र ऋषिः। हरिश्चन्द्रग्रहणममन्त्रार्थम्। ऋषी इति किम् ? प्रकण्वो देशः, हरिचन्द्रो माणवकः ॥

## मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ १५४ ॥

मस्कर मस्करिन् इत्येतौ यथासंख्यं वेणौ परिव्राजके च निपात्येते। मकरशब्दो ह्यव्युत्पन्नं प्रातिपदिकं तस्य वेणावभिधेये सुट् निपात्यते परिव्राजके त्विनिरपीति। मस्करो वेणुः। मस्करी परिव्राजकः। वेणुपरिव्राजकयोरिति किम् ? मकरो ग्राहः। मकरी समुद्रः। केचित्पुनरत्र माङ्युपपदे करोतेः करणेऽच्प्रत्ययमपि निपातयन्ति माङश्च ह्रस्वत्वं सुट् च। मा क्रियते येन प्रतिषिध्यते स मस्करो वेणुः। वेणुग्रहणं च प्रदर्शनार्थमन्यत्रापि भवति—मस्करो दण्ड इति। परिव्राजकेऽपि माङ्युपपदे करोतेस्ताच्छील्य इनिर्निपात्यते। माङो ह्रस्वत्वं सुट् च तथैव। माकरणशीलो मस्करी, कर्मापवादित्वात्परिव्राजक उच्यते। स ह्येवमाह—मा कुरुत कर्माणि, शान्तिर्वः श्रेयसीति ॥

---

विष्किरः—शकुनि ( पक्षी ) अर्थ में 'विष्किर' तथा 'विकिर' शब्दों का निपातन होता है।

ह्रस्वात्—चन्द्र शब्द के उत्तर पद होने पर ह्रस्व से पर सुट् का आगम हो जाता है यदि मन्त्र-विषयक प्रयोग हो।

प्रतिष्कशश्च—प्रतिपूर्वक 'कश' धातु से कप्रत्यय होने पर उपसर्ग से उत्तर में सुट् के आगम का निपातन होता है।

प्रस्कण्व—ऋषिविशेष के अर्थ में 'प्रस्कण्व' तथा 'हरिश्चन्द्र' शब्दों की सिद्धि के लिए ( प्र + कण्व, हरि + चन्द्र ) सुट् का निपातन होता है॥

मस्कर—वेणु के अर्थ में 'मस्कर' शब्द तथा परिव्राजक के अर्थ में 'मस्करिन्' शब्द की सिद्धि के लिए क्रमशः मकर तथा मस्कर शब्दों से सुट् तथा सुट् एवम् इनि प्रत्यय का निपातन होता है।

## कास्तीराजस्तुन्दे नगरे ॥ १५५ ॥

कास्तीर अजस्तुन्द इत्येतौ शब्दौ निपात्येते नगरेऽभिधेये। ईषत्तीरमस्य, अजस्येव तुन्दमस्येति व्युत्पत्तिरेव क्रियते नगरं तु वाच्यमेतयोः। कास्तीरं नाम नगरम्। अजस्तुन्दं नाम नगरम्। नगर इति किम्? मातीरम्। अजतुन्दम् ॥

## कारस्करो वृक्षः ॥ १५६ ॥

कारस्कर इति सुट् निपात्यते वृक्षश्चेद्भवति। कारं करोतीति दिवाविभानिशाप्रभाभास्करान्तेति टप्रत्ययान्तः। कारस्करो वृक्षः। वृक्ष इति किम्? कारकरः। केचिदिदं सूत्रं नाधीयते, पारस्करप्रभृतिष्वेव कारस्करो वृक्ष इति पठन्ति ॥

## पारस्करप्रभृतीनि च संज्ञायाम् ॥ १५७ ॥

पारस्करप्रभृतीनि च शब्दरूपाणि निपात्यन्ते संज्ञायां विषये। पारस्करो देशः। कारस्करो वृक्षः। रथस्था नदी। किष्कुः प्रमाणम्। किष्किंधा गुहा। तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च। तस्करश्चौरः। बृहस्पतिर्देवता। चोरदेवतयोरिति किम्? तत्करः, बृहत्पतिः। संज्ञाग्रहणादुपाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहणं प्रपञ्चार्थम्। ॐप्रात्तुम्पतौ गवि कर्तरिॐ। तुम्पतौ धातौ प्रशब्दात् परस्सुट् भवति गवि कर्तरि। प्रस्तुम्पति गौः। गवीति किम्? प्रतुम्पति वनस्पतिः। पारस्करप्रभृतिराकृतिगणः। अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः। प्रायश्चित्तम्। प्रायश्चित्तिः। यदुक्तं प्रायस्य चित्तिचित्तयोः सुडस्कारो वेति, तद् संगृहीतं भवति ॥

## अनुदात्तं पदमेकवर्जम् ॥ १५८ ॥

परिभाषेयं स्वरविधिविषया। यत्रान्यः स्वर उदात्तः स्वरितो वा विधीयते तत्रानुदात्तं पदमेकं वर्जयित्वा भवतीत्येतदुपस्थितं द्रष्टव्यम्। अनुदात्ताच्कमनुदात्तम्। कः पुनरेको वर्ज्यते, यस्यासौ स्वरो विधीयते? वक्ष्यति–धातोरन्त उदात्तो भवतीति—गोपायति, धूपायति। धातोरन्त्यमचं वर्जयित्वा परिशिष्टमनुदात्तं भवति। धातुस्वरं श्नास्वरो बाधते–लुनाति। श्नास्वरं तस्स्वरः–लुनीतः, पुनीतः। तस्स्वरमाम्स्वरः–लुनीतस्तराम्, पुनीतस्तराम् ॥

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥

आगमस्य, चतुरनडुहोरामुदात्तः–चत्वारः, अनड्वाहः। आगमस्वरः प्रकृतिस्वरं बाधते। विकारस्य—अस्थनि। दधनीत्यङ्स्वरः प्रकृतिस्वरं बाधते। प्रकृतेः–गोपायति, धूपायति। प्रकृतिस्वरः प्रत्ययस्वरं बाधते। प्रत्ययस्य–कर्त्तव्यम्, हर्त्तव्यम्। प्रत्ययस्वरः प्रकृतेः स्वरस्य बाधकः। परनित्यान्तरङ्गापवादैः स्वरव्यवस्था सतिशिष्टेन च। यो हि यस्मिन् सति शिष्यते स तस्य बाधको भवति, तथाहि—गोपायतीत्यत्र धातुस्वरापवादः

---

कास्तीराज—नगर के अर्थ में 'कास्तीर' तथा 'अजस्तुन्द' शब्दों का निपातन होता है।

कारस्करो—वृक्ष अर्थ में 'कारस्कर' शब्द का निपातन होता है।

पारस्कर—संज्ञा के रूप में 'पारस्कर' आदि शब्दों का निपातन होता है।

प्रात्तुम्पतौ—प्रपूर्वक तुम्प धातु के परे रहते प्र से पर सुट् का आगम हो जाता है यदि गो कर्त्ता कारक हो तो।

अनुदात्तम्—जहाँ उदात्त अथवा स्वरित स्वर का विधान किया जाएगा वहाँ एक विधीयमान (उदात्त आदि) स्वर को छोड़कर उस पद के सभी स्वर अनुदात्त हो जाते हैं—यह अर्थ भी समझना चाहिए।

प्रत्ययस्वरस्तेनैव धातुस्वरेण प्रत्ययान्तस्य धातोः सतिशिष्टत्वाद् बाध्यते । कार्ष्णोत्तरासंगपुत्र इत्यत्र च समासस्वरापवादो बहुव्रीहिस्वरः सतिशिष्टेन समासान्तोदात्तत्वेन बाध्यते । विकरणस्वरस्तु सतिशिष्टोऽपि सार्वधातुकस्वरं न बाधते—लुनीत इति तस एव स्वरो भवति । ॐविभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम्ॐ । अतिस्र इत्यत्र तिसृभ्यो जस इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते । ॐविभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम्ॐ । अचत्वारः । अनड्वाह इति । यस्य विभक्तिनिमित्तमामस्तस्य यदुदात्तत्वं तन्नञ्स्वरेण बाध्यते । पदग्रहणं किम् ? देवदत्त गामभ्याज शुक्लां दण्डेनेति वाक्ये हि प्रतिपदं स्वरः पृथग् भवति । परिमाणार्थं चेदं पदग्रहणं पदाधिकारस्य निवृत्तिं करोति । तेन प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेवशिष्टस्यानुदात्तत्वं भवति । तथा च कुवलया विकारः कौवलमित्यत्रानुदात्तादिलक्षणोऽञ् सिद्धो भवति । तथा गर्भिणीशब्दश्चानुदात्तादिलक्षणस्याञो बाधनार्थं भिक्षादिषु पठ्यते । कुवलगर्भशब्दावाद्युदात्तौ ॥

## कर्षात्वतो घञोऽन्त उदात्तः ॥ १५९ ॥

कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तो भवति । कर्षः । पाकः । त्यागः । रागः । दायः । धायः । ञ्नित्यादिर्नित्यमित्यस्याऽपवादः । कर्ष इति विकृतनिर्देशः कृषतेर्निवृत्त्यर्थः । तौदादिकस्य घञन्तस्य कर्ष इत्यस्याद्युदात्त एव भवति ॥

## उञ्छादीनां च ॥ १६० ॥

उञ्छ इत्येवमादीनामन्त उदात्तो भवति । उञ्छः । म्लेच्छः । जञ्जः । जल्पः । एते घञन्ता इति ञित्स्वरः प्राप्तः । जपः व्यध इत्यबन्तौ, तयोर्धातुस्वरः प्राप्तः । केचित्तु बध इति पठन्ति । युजेर्घञन्तस्य निपातनादगुणत्वं विशिष्टविषये च निपातनमिदमिष्यते । कालविशेषे रथाद्युपकरणे च युगशब्दस्य प्रयोगोऽन्यत्र हि योग एव भवति । ॐगरो दूष्येऽबन्तःॐ । गरशब्दोऽबन्तः, स दूष्य एवान्तोदात्तः—गरो विषम्(१) । अन्यत्राद्युदात्त एव । ॐवेदवेगवेष्टबन्धाः करणेॐ । हलश्चेति घञन्ता एते करणेऽन्तोदात्ता भवन्ति । भावे आद्युदात्ता एव । ॐस्तुयुद्रुवश्छन्दसि(२)ॐ । उपसमस्तार्थमेतत् । परिष्टुत् । संयुत् । परिद्रुत् । ॐवर्त्तनिः स्तोत्रेॐ । स्तोत्रं साम, तत्स्थो वर्त्तनिशब्दोऽन्तोदात्तो भवति, अन्यत्र मध्योदात्तः । ॐश्वभ्रे दरःॐ । श्वभ्रेऽभिधेये दरशब्दोऽन्तोदात्तोऽन्यत्राबन्तत्वा-

---

विभक्तिस्वरात्—विभक्तिस्वर से नञ्स्वर बलवान् होता है—यह समझना चाहिए।

विभक्तिनिमित्त—विभक्तिनिमित्तक स्वर से भी नञ्स्वर की बलवत्ता समझनी चाहिए।

कर्षात्वतो—'कर्ष' धातु ( =भ्वादिगणस्थ 'कृष' धातु ) तथा आकारवान् घञन्त शब्दों का अन्तोदात्त होता है।

उञ्छादीनाम्—उञ्छ आदि शब्दों का भी अन्त्यस्वर उदात्त हो जाता है।

गरो—गर शब्द का अन्तोदात्तत्व केवल दूष्य ( विष ) अर्थ में ही समझना चाहिए।

वेदवेग—वेद, वेग, वेष्ट तथा बन्ध शब्द करणार्थक प्रत्ययान्त होने पर ही अन्तोदात्त होते हैं।

स्तुयु—समस्त क्विप्प्रत्ययान्त 'स्तु', 'यु' तथा 'द्रु' धातुओं का भी अन्तोदात्त छन्दोविषय में ही समझना चाहिए।

वर्त्तनिः—स्तोत्र ( =साम ) के अन्तर्गत आनेवाला 'वर्त्तनि' शब्द भी अन्तोदात्त होता है।

श्वभ्रे—श्वभ्र अर्थ में 'दर' शब्द भी अन्तोदात्त होता है।

---

( १ ) तथा चात्र दूष्यशब्दो विषार्थक एवेति सूचितम्। ( श्रीना० )

( २ ) अत एव भाषायामपि स्वरोपयोगः सूचितः। ( श्रीना० )

दाद्युदात्तः। ॐसाम्बतापौ भावगर्हायाम्ॐ। अन्तोदात्तौ। अन्यत्राद्युदात्तौ। ॐउत्तमशश्वत्तमशब्दौ सर्वत्रॐ। केचित्तु भावगर्हायामित्यत्राप्यनुवर्त्तयन्ति। ॐभक्षमन्थभोगदेहाःॐ। एते घञन्ताः, भक्षिर्ण्यन्तोऽपि घञन्त एव, एरजण्यन्तानामिति वचनात्॥

## अनुदात्तस्य च यत्रोदात्तलोपः॥ १६१॥

उदात्त इति वर्त्तते। यस्मिन्ननुदात्ते परत उदात्तो लुप्यते तस्यानुदात्तस्यादिरुदात्तो भवति। कुमार ई, कुमारी। कुमारशब्दोऽन्तोदात्तस्तस्य ङीप्यनुदात्ते उदात्तो लुप्यते, अनुदात्तो ङीप् उदात्तः। भस्य टेर्लोपः। पथः। पथा। पथे। पथिन्शब्दोऽन्तोदात्तः। कुमुदनडवेतसेभ्यो ड्मतुप्। कुमुद्वान्। नड्वान्। वेतस्वान्। कुमुदादयोऽन्तोदात्ताः। ड्मतु बनुदात्तः। अनुदात्तस्येति किम्? प्रासङ्गं वहति प्रासङ्ग्यः। प्रासङ्गशब्दस्थाथादिस्वरेणान्तोदात्तः। तस्य यति, तित्स्वरितमिति स्वरिते उदात्तो लुप्यते। नैतदस्ति, स्वरिते हि विधीयमाने परिशिष्टमनुदात्तं तत् कुत उदात्तलोपः? तदेतदनुदात्तग्रहणमादेरनुदात्तार्थम्। अन्त इति हि प्रकृतत्वादन्तस्य स्यात्—मा हि धुक्षाताम्, मा हि धुक्षाथाम्। यत्रेति किम्? भार्गवः, भार्गवौ, भृगवः। प्राक् सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक्। उदात्तग्रहणं किम्? वैदी, और्वी (१)॥

## धातोः॥ १६२॥

अन्त इत्येव। धातोरन्त उदात्तो भवति। पचति। पठति। ऊर्णोति। गोपायति। याति॥

## चितः॥ १६३॥

चितोऽन्त उदात्तो भवति। भञ्जभासमिदो घुरच्—भङ्गुरम्। भासुरम्। मेदुरम्। आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्—कुण्डिनाः। चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्यान्त उदात्त इष्यते—बहुपटवः। उच्चकैः।

## तद्धितस्य॥ १६४॥

चित इत्येव। चितस्तद्धितस्यान्त उदात्तो भवति। गोत्रे कुञ्जादिभ्यश्च्फञ्। कौञ्जायनाः। मौञ्जायनाः। किमर्थमिदम्? परमपि ञित्स्वरं बाधित्वाऽन्तोदात्तत्वमेव यथा स्यादिति॥

## कितः॥ १६५॥

तद्धितस्येत्येव। तद्धितस्य कितोऽन्त उदात्तो भवति। नडादिभ्यः फक्। नाडायनः। चारायणः। प्राग्वहतेष्ठक्। आक्षिकः। शालाकिकः॥

---

साम्बतापौ—धात्वर्थगर्हा में 'साम्ब' तथा 'ताप' शब्द भी अन्तोदात्त होते हैं।

उत्तम—'उत्तम' तथा 'शश्वत्तम' शब्द भावगर्हा तथा अन्यत्र, छन्दोविषय तथा भाषा में, अन्तोदात्त होते हैं।

भक्ष मन्थ—'भक्ष', 'मन्थ', 'भोग' तथा 'देह' शब्द भी अन्तोदात्त होते हैं।

अनुदात्तस्य—जिस अनुदात्त शब्द के परे होने से पूर्व उदात्त का लोप होता है वह शब्द आद्युदात्त हो जाता है।

धातोः—धातु का अन्त्य स्वर उदात्त हो जाता है।

चितः—चित्प्रत्ययविशिष्ट शब्द का अन्त्यस्वर उदात्त हो जाता है।

तद्धितस्य—चित् तद्धित का भी अन्त्य स्वर उदात्त हो जाता है।

कितः—कित् तद्धित का अन्त्य स्वर उदात्त हो जाता है।

---

(१) मौञ्जायनेत्यधिकमेकस्मिन्पुस्तके।

## तिसृभ्यो जसः ॥ १६६ ॥

तिसृभ्य उत्तरस्य जसोऽन्त उदात्तो भवति। तिस्रस्तिष्ठन्ति। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यस्यापवादः। शसि उदात्तयणो हल्पूर्वादिति सिद्धेऽन्यत्र बहुवचने, षट्त्रिचतुर्भ्यो हलादिरिति विधानाज्जसेव लभ्यत इति जस्ग्रहणमुपसर्जनार्थमेक इच्छन्ति, अतितिस्रावित्यत्र स्वरो मा भूदिति ॥

## चतुरः शसि ॥ १६७ ॥

चतुरः शसि परतोऽन्त उदात्तो भवति। चतुरः पश्य। (१) चतस्रादेशे आद्युदात्तनिपातनाद्यणादेशस्य च पूर्वविधौ स्थानिवत्त्वादयं स्वरो न भवति—चतस्रः पश्येति ॥

## सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६८ ॥

साविति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणम्। तत्र सौ य एकाच् तस्मात्परा तृतीयादिर्विभक्तिरुदात्ता भवति। वाचा। वाग्भ्याम्। वाग्भिः। वाग्भ्यः। याञ्चाम्। याञ्चिः। साविति किम्? राज्ञा। राज्ञे। एकाच इति किम्? हरिणा, गिरिणा। राजसु। तृतीयादिरिति किम्? वाचौ, वाचः। विभक्तिरिति किम्? वाक्तरा, वाक्तमा। सप्तमीबहुवचनस्य ग्रहणादिह न भवति—त्वया, त्वयीति ॥

## अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ १६९ ॥

एकाच इति वर्तते, तृतीयादिर्विभक्तिरिति च। नित्यशब्दः स्वर्यते, तेन नित्याधिकारविहितः समासः पर्युदस्यते। नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच्च तस्मात्परा तृतीयादिविभक्तिरन्यतरस्यामुदात्ता भवति। परमवाचा २। परमवाचे २। परमत्वचा २। परमत्वचे २। यदा विभक्तिरुदात्ता न भवति तदा समासान्तोदात्तत्वमेव। अन्तोदात्तादिति किम्? अवाचा। सुवाचा। सुत्वचा। तत्पुरुषोऽयम्। तत्र तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययेति पूर्वपदप्रकृतिस्वरः। उत्तरपदग्रहणमेकाच्त्वेनोत्तरपदं विशेषयितुम्। अन्यथा हि समासविशेषणमेतत् स्यात्। तत्र शुन ऊर्जः श्वोर्ज्जेत्यत्रैवायं विधिः स्यात्। अनित्यसमास इति किम्? अग्निचिता, सोमसुता। उपपदमतिङ् इत्ययं नित्यं नित्याऽधिकारे समासो विधीयते। तत्र गतिकारकोपपदात् कृदित्युत्तरपदप्रकृतिस्वरेण चित् शब्द उदात्तः। यस्तु विग्रहाभावेन नित्यसमासस्तत्र भवत्येव विकल्पः—अवाचा ब्राह्मणेन, सुवाचा ब्राह्मणेनेति। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं भवति ॥

## अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ १७० ॥

अञ्चेः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये। इन्द्रो दधीचो अस्थभिः। चाविति पूर्वपदान्तोदात्तत्वं प्राप्तम्। तृतीयादिरिति वर्त्तमाने शसोऽपि परिग्रहार्थमसर्वनामस्थानग्रहणम्। इहापि यथा स्यात्—प्रतीचो बाहून् प्रतिभङ्ध्येषामिति ॥

---

तिसृभ्यो—तिसृ शब्द से परवर्त्ती जस् ( =अस् ) प्रत्यय का अन्त्य उदात्त हो जाता है।

चतुरः—शस् प्रत्यय के परे होने पर चतुर् शब्द अन्तोदात्त हो जाता है।

सावेकाचः—सप्तमीबहुवचन 'सुप्' विभक्ति के परे एकाच् होनेवाले शब्द से परे तृतीयादि विभक्तियाँ उदात्त हो जाती हैं।

अन्तोदात्तात्—अनित्यसमास में जो उत्तरपद एकाच् तथा अन्तोदात्त होता है उससे परे तृतीया आदि विभक्तियाँ विकल्प से उदात्त होती हैं।

अञ्चेः—'अञ्च्' धातुव्युत्पन्न शब्द से परवर्त्ती असर्वनामस्थान विभक्तियाँ छन्दो-विषय में उदात्त हो जाती हैं।

---

( १ ) चतुरो देहीत्यपि पुस्तकान्तरे।

## ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ॥ १७१ ॥

ऊठ्, इदम्, पदादि, अप्, पुम्, रै, दिव् इत्येतेभ्योऽसर्वनामस्थानविभक्तिरुदात्ता भवति। ऊठ्—प्रष्ठौहः। प्रष्ठौहा। ॐऊठ्युपधाग्रहणं कर्त्तव्यम्ॐ। इह मा भूत्—अक्षद्यूवा। अक्षद्युवे। इदम्—आभ्याम्। एभिः। अन्तोदात्तादित्यधिकारादन्वादेशे न भवति—अथो आभ्यां निपुणमधीतमिति। पदादयः पद्दन्नोमास्त्स्येवमादयो निशपर्यन्ता इह गृह्यन्ते—निपदश्चतुरो जहि। या वतो धावति। असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव भवति—ग्रीवायां बद्धो अपि कक्ष आसनि। मत्स्यं न दीन उदनि क्षियन्तम्। अप—अपः पश्य। अद्भिः। अद्भ्यः। पुम्—पुंसः। पुंसा। पुंसे। पुम्भ्याम्। पुम्भ्यः। रै—रायः पश्य। राभ्याम्। राभिः। दिव्-दिवः पश्य। दिवा। दिवे॥

## अष्टनो दीर्घात् ॥ १७२ ॥

अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति। अष्टाभिः। अष्टाभ्यः। अष्टासु। घृतादिपाठादष्टन्शब्दोऽन्तोदात्तस्तत्र झल्युपोत्तममित्यस्यापवादो विभक्तेरेवोदात्तत्वं विधीयते। दीर्घादिति किम्? अष्टसु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीत। इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्संज्ञां ज्ञापयति। अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यत इति किं दीर्घग्रहणेन॥

## शतुरनुमो नद्यजादी ॥ १७३ ॥

अन्तोदात्तादिति वर्त्तते। अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी (१)अजादिर्विभक्तिरसर्वनामस्थानमुदात्ता भवति। तुदती। नुदती। लुनती। पुनती। तुदता। नुदता। लुनता। पुनता। अनुम इति किम्? तुदन्ती। नुदन्ती। अत्राप्यदुपदेशादिति लसार्वधातुकानुदात्तत्वे एकादेशस्तस्यैकादेश उदात्तेनोदात्त इत्युदात्तत्वं तस्य पूर्वत्रासिद्धत्वं नेष्यत इति शत्रन्तमन्तोदात्तं भवति। नद्यजादी इति किम्? तुदद्भ्याम्। नुदद्भ्याम्। तुदद्भिः। अन्तोदात्तादित्येव। ददती। दधतः। अभ्यस्तानामादिरित्याद्युदात्तावेतौ। ॐबृहन्महतोरुपसंख्यानम्ॐ। बृहती। महती। बृहता। महता॥

## उदात्तयणो हल्पूर्वात् ॥ १७४ ॥

उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी अजादिरसर्वनामस्थानविभक्तिरुदात्ता भवति। कर्त्री। हर्त्री। प्रलवित्री। कर्त्रा। हर्त्रा। प्रलविता। प्रसविता। तृजन्ता एतेऽन्तोदात्ताः। उदात्तग्रहणं किम्? कर्त्री। हर्त्री। कर्त्रा। हर्त्रा। तृन्नन्तोऽयमाद्युदात्तः।

---

ऊडिदम्पदा—ऊठ्विशिष्ट, इदम्, पद् आदि आदेश, अप्, पुम्, रै तथा दिव् शब्दों से परे असर्वनामस्थान विभक्तियाँ उदात्त हो जाती हैं।

ऊठि—ऊठ् का अर्थ उपधाभूत ऊठ् है—ऐसा समझना चाहिए।

अष्टनो—दीर्घान्त अष्टन् शब्द से उत्तरवर्त्ती असर्वनामस्थान विभक्तियाँ उदात्त हो जाती है।

शतुरनुमो—नुमागमरहितशतृप्रत्ययान्त शब्दों से परवर्त्ती नदीसंज्ञक प्रत्यय तथा अजादि असर्वनामस्थान विभक्तियाँ उदात्त हो जाती हैं।

बृहन्महतोः—बृहत् तथा महत् शब्दों से उत्तरवर्त्ती नदीसंज्ञक प्रत्यय तथा अजादि असर्वनामस्थान विभक्तियों के उदात्तत्व का भी प्रातिपादन करना चाहिए।

उदात्त—हल् हो पूर्व में जिसके ऐसे उदात्तस्थानिक यण् से उत्तरवर्त्ती नदीसंज्ञक प्रत्यय तथा अजादि असर्वनामस्थान प्रत्यय उदात्त हो जाते हैं।

---

(१) अत्र नदीसंज्ञकः अजादिश्च पृथक् पृथक् प्रत्ययो विवक्षितोऽवगन्तव्यः। (श्रीना०)

हलपूर्वादिति किम् ? बहुतितवा ब्राह्मण्या । ॐनकारग्रहणं च कर्त्तव्यम्ॐ । वाक्पत्नीयं कन्या ॥

## नोङ्धात्वोः ॥ १७५ ॥

ऊङो धातोश्च य उदात्तयण् हल्पूर्वस्तस्मात्पराऽजाद्यसर्वनामस्थान(१) विभक्तिर्नोदात्ता भवति। ब्रह्मबन्ध्वा । ब्रह्मबन्ध्वे । वीरबन्ध्वा । वीरबन्ध्वे । ऊङ् प्रत्ययस्वरेणोदात्तः । तेन सह य एकादेशः सोऽप्युदात्त इति उदात्तयण्वकारस्तस्मादुदात्तत्वे प्रतिषिद्धे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति विभक्तिः स्वर्यते । धातुयणः खल्वपि—सकृल्ल्वा । सकृल्ल्वे । खलप्वे । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य ओः सुपि यणादेशः ॥

## ह्रस्वनुड्भ्यां मतुप् ॥ १७६ ॥

अन्तोदात्तादित्येव। ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुब् उदात्तो भवति। अग्निमान्। वायुमान्। कर्तृमान्। हर्तृमान् । नुटः खल्वपि—अक्षण्वता । शीर्षण्वता । अन्तोदात्तादित्येव। वसुमान्। वसुशब्द आद्युदात्तस्तस्मान्मतुब् अनुदात्त एव भवति। अत्र च स्वरविधौ व्यञ्जनमविद्यमानवदित्येषा परिभाषा नाश्रीयते, नुड्ग्रहणात्। तेन मरुत्वानित्यत्र न भवति। ॐरेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम्ॐ। आरेवान्। ॐत्रेश्च प्रतिषेधो वक्तव्यःॐ। त्रिवनीर्याज्यानुवाक्या भवन्तीति ॥

## नामन्यतरस्याम् ॥ १७७ ॥

ह्रस्वग्रहणमनुवर्तते मतुब्ग्रहणं च। तेन मतुपा ह्रस्वो विशेष्यते, मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तादन्यतरस्यां नाम् उदात्तो भवति। अग्नीनाम् २। वायूनाम् २। कर्तृणाम् २। मतुपा ह्रस्वविशेषणं किम् ? भूतपूर्वेऽपि ह्रस्वे यथा स्यात्। अन्यथा हि साम्प्रतिक एव स्यात् तिसृणां, चतसृणामिति। सनुट्कस्य ग्रहणं किम् ? धेन्वाम्। शकट्याम्। उदात्तयणो हल्पूर्वादित्ययमन्तोदात्तः । ह्रस्वादित्येव—कुमारीणाम्। अन्तोदात्तादित्येव—त्रपूणाम्, वसूनाम् ॥

## ङ्याश्छन्दसि बहुलम् ॥ १७८ ॥

ङ्यन्ताच्छन्दसि विषये नामुदात्तो भवति बहुलम् । देवसेनानामभिभञ्जतीनाम्। बह्वीनां पिता। न च भवति—नदीनां पारे जयन्तीनां मरुतः ॥

---

नकार—उदात्तस्थानिक हलपूर्वक नकार से परवर्त्ती नदीसंज्ञक तथा अजादि असर्वनामस्थान प्रत्यय के उदात्तत्व का भी प्रतिपादन करना चाहिए।

नोङ्धात्वोः—ऊङ् प्रत्ययस्थ तथा धातुस्थ उदात्त के स्थान में विहित हलपूर्वक यण् से परवर्त्ती अजादि असर्वनामस्थान विभक्तियाँ उदात्त नहीं होती हैं।

ह्रस्व—अन्तोदात्त ह्रस्वान्त तथा नुट् ( आगम ) से परवर्त्ती मतुप् प्रत्यय उदात्त हो जाता है।

रेशब्दाच्च—'रे' शब्द से परवर्त्ती मतुप् के भी उदात्तत्व का प्रतिपादन करना चाहिए।

त्रेश्च—त्रि शब्द से परवर्त्ती मतुप् के उदात्तत्व का प्रतिषेध समझना चाहिए।

नामन्य—मतुप् प्रत्यय के परे रहते जो ह्रस्वान्त अन्तोदात्त शब्द उससे परवर्त्ती 'नाम्' विकल्प से उदात्त हो जाता है।

ङ्याश्छन्दसि—ङ्यन्त से परवर्त्ती 'नाम्' छन्दोविषय में बाहुल्येन उदात्त हो जाता है।

---

( १ ) अत्र तृतीयादिविभक्तिरिति पाठे पदमञ्जरीकृतां सम्मतिः स्पष्टा। ( भीमा० )

## षट्त्रिचतुर्भ्यो हलादिः ॥ १७९ ॥

अन्तोदात्तादित्येतन्निवृत्तम् । षट्संज्ञकेभ्यस्त्रि चतुर इत्येताभ्यां च परा हलादि-विभक्तिरुदात्ता भवति । षड्भिः । षड्भ्यः । षण्णाम् । पञ्चानाम् । सप्तानाम् । त्रि—त्रिभिः । त्रिभ्यः । त्रयाणाम् । चतुर्—चतुर्भ्यः । चतुर्णाम् । हलादिरिति किम् ? चतस्रः पश्य ॥

## झल्युपोत्तमम् ॥ १८० ॥

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति । त्रिप्रभृतीनामन्त्यमुत्तमं तत्समीपे च यत्तदुपोत्तमम् । पञ्चभिस्तपस्तपति । सप्तभिः परान् जयति । तिसृभिश्च वहसे त्रिंशता । चतुर्भिः । झलीति किम् ? पञ्चानाम्, सप्तानाम् । उपोत्तममिति किम् ? षड्भिः, षड्भ्यः ॥

## विभाषा भाषायाम् ॥ १८१ ॥

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति विभाषा भाषायां विषये । पञ्चभिः २ । सप्तभिः २ । तिसृभिः २ । चतसृभिः २ ॥

## न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥ १८२ ॥

गो, श्वन्, साववर्णम् [सौ प्रथमैकवचने (१) यदत्रावर्णान्तम्] राड्, अङ्, क्रुङ्, कृद् इत्येतेभ्यो यदुक्तं तन्न भवति । गवा । गवे । गोभ्यामिति । सावेकाचस्तृतीयादिर्विभक्तिरिति प्राप्तिः प्रतिषिद्ध्यते । सुगुना । सुगवे । सुगुभ्यामिति । अन्तोदात्तादुत्तरपदादिति प्राप्तिः । श्वन्—शुना । शुने । श्वभ्याम् । परमशुना । परमशुने । परमश्वभ्याम् । पूर्ववत् प्राप्तिः । साववर्णः—सौ प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणम्, येभ्यः । तेभ्यः । केभ्यः । राट्—राजतिः, क्विबन्तः राजा । परमराजः । अङ्—अञ्चतिः—क्विन्तस्य सनकारस्य ग्रहणं विपयावधारणार्थं, यत्रास्य नलोपो नास्ति तत्र प्रतिपेधो यथा स्यात् । नाञ्चेः पूजायामिति प्रतिषिद्धयते नलोपः । प्राञ्चा । प्राङ्भ्याम् । नलोपविषये तु भवत्येव विभक्तेरुदात्तत्वम् । प्राचा । प्राचे । प्राग्भ्याम् । क्रुङ् क्विन्नन्त एव—क्रुञ्चा । परमक्रुञ्चा । कृत्—करोतिः कृन्तिर्वा क्विबन्तः । कृता । परमकृता ॥

## दिवो झल् ॥ १८३ ॥

दिवः परा झलादिर्विभक्तिर्नोदात्ता भवति । द्युभ्याम् । द्युभिः । सावेकाच इति ऊडिदम्पदाद्यप्पुम्रैद्युभ्य इति वा प्राप्तिः प्रतिषिध्यते । झलीति किम् ? दिवा ॥

---

षट्त्रि—षट्संज्ञक तथा त्रि एवम् चतुर् शब्दों से परवर्त्ती हलादि विभक्तियाँ उदात्त हो जाती हैं ।

झल्युपोत्तमम्—षट्संज्ञक, त्रि तथा चतुर शब्दों से परवर्त्ती झलादि विभक्तियाँ हो अन्त में जिनके ऐसे पदों के परे रहते उपोत्तम ( अन्त्य स्वर से अव्यवहितपूर्ववर्त्ती स्वर ) उदात्त हो जाता है ।

विभाषा—षट्संज्ञक, त्रि तथा चतुर् शब्दों से परवर्त्ती झलादि विभक्तियों से विशिष्ट पदों के परे रहते उपोत्तम स्वर भाषा में विकल्प से उदात्त होता है ।

न गोश्वन्—गो, श्वन्, प्रथमैकवचन सुविभक्ति के परे रहते अवर्णान्त, राट्, अङ्, क्रुङ् तथा कृत् शब्दों से उपर्युक्त स्वरविधान नहीं होता है ।

दिवो—दिव् शब्द से परवर्त्ती झलादि विभक्तियाँ उदात्त नहीं होती हैं ।

---

( १ ) अत्र साववर्णमित्यस्य व्याख्यानरूपोयं ग्रन्थः प्रामादिक इति प्रतीमः । अत एव कोष्ठे निवेशितः । ( श्रीना० )

## नृ चान्यतरस्याम् १८४ ॥

नृ इत्येतस्मात् परा झलादिर्विभक्तिरन्यतरस्यां नोदात्ता भवति । नृभ्याम् । नृभिः । नृभ्यः । नृषु । झलित्येव । त्रा । त्रे ॥

## तित् स्वरितम् ॥ १८५ ॥

तित्स्वरितं भवति । सन्नन्तायत्—चिकीर्ष्यम् । जिहीर्ष्यम् । ऋहलोर्ण्यत्—कार्यम् । प्रत्ययाद्युदात्तस्यापवादः ॥

## तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ १८६ ॥

तासेरनुदात्तेतो ङितोऽकारान्तोपदेशाच्च शब्दात् परं लसार्वधातुकमनुदात्तं च भवति ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा । तासेस्तावत्—कर्त्ता । कर्त्तारौ । कर्त्तारः । प्रत्यस्वरापवादोऽयम् । अनुदात्तेतः—आस्—आस्ते । वस—वस्ते । ङित्—सुङ्—सूते । शीङ्—शेते । अदुपदेशात्—तुदतः । पचतः । अनुबन्धस्यानैकान्तिकत्वादकारान्तोपदेश एव शप् । पचमानः । यजमानः । यद्यत्र मुक् अकारमात्रस्य स्यात् तदा लसार्वधातुकमदुपदेशादन्तरमिति सिद्धो निघातः । अथाकारान्तस्याङ्गस्य, तथापि लसार्वधातुकानुदात्तत्वे कर्त्तव्ये बहिरङ्गत्वादसिद्ध इति सिद्धम् । चित्स्वरोऽनेन लसार्वधातुकानुदात्तत्वेन परत्वाद् बाध्यते । तास्यादिभ्य इति किम् ? चिन्वन्ति । ङिदयं श्नुः पूर्वस्य कार्यं प्रति न तु परस्य । उपदेशग्रहणं किम् ? कतीह पवमानाः । सार्वधातुकमिति किम् ? शिष्ये । शिश्याते । शिश्यिरे । अह्न्विङोरिति किम् ? ह्नुते, यदधीते ॥

## आदिः सिचोऽन्यतरस्याम् ॥ १८७ ॥

उदात्त इति वर्त्तते । सिजन्तस्यान्यतरस्यामादिरुदात्तो भवति । मा हि कार्ष्टाम् । मा हि कार्ष्टाम् । एकोऽत्राद्युदात्तः । अपरोऽन्तोदात्तः । मा हि लाविष्टाम् २ । एकोऽत्राद्युदात्तः । अपरो मध्योदात्तः । सिचश्चित्करणादागमानुदात्तत्वं हि बाध्यते । ॐसिच आद्युदात्तत्वेऽनिटः पितः पक्षे उदात्तत्वं वक्तव्यम्ॐ । मा हि कार्षम् । २ । अनिट इति किम् ? मा हि लाविषम् । २ । मध्योदात्त एवाद्युदात्तत्वाभावपक्षे भवति ॥

## स्वपादिर्हिंसामच्यनिटि ॥ १८८ ॥

लसार्वधातुकग्रहणं यदनुवर्त्तते तदच्यनिटीति संबन्धादिह सप्तम्यन्तं भवति । स्वपादिरावृत्करणात् । स्वपादीनां हिंसेश्चाजादावनिटि लसार्वधातुके परतोऽन्यतरस्यामादिरुदात्तो भवति । स्वपन्ति । २ । श्वसन्ति । २ । हिंसेः खल्वपि—हिंसन्ति । २ । प्रत्ययस्वरेण पक्षे मध्योदात्तः । अचीति किम् ? स्वप्यात् । हिंस्यात् । अनिटीति किम् ? स्वपितः । श्वसितः ।

---

नृ चान्य—नृ शब्द से परवर्त्ती झलादि विभक्तियाँ भी विकल्प से उदात्त नहीं होती हैं ।

तित्—तित् ( जिसके तकार की इत्संज्ञा हुई हो ) स्वरित हो जाता है ।

तास्यनुदात्ते—तासिप्रत्यय, अनुदात्तेत् धातु, ह्नुङ् तथा इङ् धातुओं से भिन्न ङित् धातु एवम् उपदेश में अकारान्त धातुओं से उत्तरवर्त्ती लकारस्थानीय सार्वधातुक प्रत्यय अनुदात्त हो जाते हैं ।

आदिः—सिजन्त का विकल्प से आद्युदात्त हो जाता है ।

सिच आद्युदात्तत्वे—सिजन्त के आद्युदात्तत्वविधान के प्रसङ्ग में यह समझना चाहिए कि अनिट् सिच् से परवर्त्ती पित् प्रत्यय का उदात्तत्व पाक्षिक ( =वैकल्पिक ) है ।

स्वपादि—'स्वप्' आदि तथा 'हिंस' धातुओं से परे अजादि तथा अनिट् लकारस्थानिकसार्वधातुकप्रत्यय के रहने पर आद्युदात्त हो जाता है ।

॥ङित्यजादावयं विधिरिष्यते॥ । इह न भवति—स्वपानि । हिनसानि ॥

## अभ्यस्तानामादिः ॥ १८९ ॥

अभ्यस्तानामजादावनिटि लसार्वधातुके परत आदिरुदात्तो भवति । ददति । ददतु । दधति । दधतु । जक्षति । जक्षतु । जाग्रति । जाग्रतु । अचीत्येव । दद्यात् । अनिटीत्येव । जक्षितः । आदिरिति वर्त्तमाने पुनरादिग्रहणं नित्यार्थम् ॥

## अनुदात्ते च ॥ १९० ॥

अविद्यमानोदात्ते च लसार्वधातुके परतोऽभ्यस्तानामादिरुदात्तो भवति । ददाति । जहाति । दधाति । जिहीते । मिमीते । अनुदात्त इति बहुव्रीहिनिर्देशो लोपयणादेशार्थः—मा हि स्म दधात् । दधात्यत्र ॥

## सर्वस्य सुपि ॥ १९१ ॥

सर्वशब्दस्य सुपि परत आदिरुदात्तो भवति । सर्वः । सर्वौ । सर्वे । सुपीति किम् ? सर्वतरः । सर्वतमः । प्रत्ययलक्षणेनाप्ययं स्वर इष्यते सर्वस्तोम इति । ॥सर्वस्वरोऽनकच्कस्येति वक्तव्यम्॥ । सर्वकः । चित्स्वरेणान्तोदात्तो भवति ॥

## भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ॥ १९२ ॥

भी, ह्री, भृ, हु, मद, जन, धन, दरिद्रा, जागृ इत्येतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्ययात् पूर्वमुदात्तं भवति । बिभेति । जिह्रेति । बिभर्त्ति । जुहोति । ममत्तु नः परिज्मा । मदेर्बहुलं छन्दसीति विकरणस्य श्लुः । जजनदिन्द्रम् । जन जनने 'इत्यस्य पञ्चमे लकारे रूपम् । 'धन धान्ये' इत्यस्य पञ्चमे लकारे दधनत् । दरिद्राति । जागर्ति । भ्यादीनामिति किम् ? ददाति । पितीति किम् ? दरिद्रति ।

## लिति ॥ १९३ ॥

लिति(१) प्रत्ययात् पूर्वमुदात्तं भवति । चिकीर्षकः । जिहीर्षकः । भौरिकिविधम् । मौलिकिविधम् । ऐषुकारिभक्तम् ॥

## आदिर्णमुल्यन्तरस्याम् ॥ १९४ ॥

---

ङित्यजादा—ङित् अजादिप्रत्यय के परे यह आद्युदात्तत्वविधान अभीष्ट है ।

अभ्यस्तानाम्—अभ्यस्त-संज्ञक धातुओं से परे अजादि तथा अनिट् लकारस्थानिकसार्वधातुक प्रत्यय के होने पर आदि उदात्त हो जाता है ।

अनुदात्ते—जिसमें उदात्त स्वर विद्यमान न हो ऐसे लकारस्थानिकसार्वधातुक प्रत्यय के परे रहते अभ्यस्तसंज्ञक धातुओं का आदि स्वर उदात्त हो जाता है ।

सर्वस्य—सुप् प्रत्यय के परे रहते सर्व शब्द का आदि उदात्त हो जाता है ।

सर्वस्वरो—अकच् प्रत्ययविशिष्ट सर्व शब्द से उक्त स्वरविधि नहीं होती है—ऐसा व्याख्यान करना चाहिए ।

भीह्री—'भी', 'ह्री', 'भृ', 'हु', 'मद्', 'जन', 'धन', 'दरिद्रा' तथा 'जागृ' धातुओं के अभ्यस्त का प्रत्यय से पूर्व उदात्त होता है यदि पर में पित्लकारस्थानिक सार्वधातुक हो ।

लिति—लित्संज्ञकलकारविशिष्ट प्रत्यय के परे रहते प्रत्यय से पूर्व उदात्त होता है ।

आदिः—णमुल् प्रत्यय के परे रहते आद्युदात्तत्व वैकल्पिक होता है ।

---

(१) अत्र 'लिति=लकारेत्संज्ञके', 'लकारेत्संज्ञके' इति वा वृत्तिस्थः पाठः इत्यत्र न्याससम्वादः । (श्रीना०)

णमुलि परतोऽन्यतरस्यामादिरुदात्तो भवति। लोलूयं लोलूयम्। आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयंशब्द एकत्राद्युदात्तः। अपरत्र लित्स्वरेण मध्योदात्तः॥

## अचः कर्तृयकि ॥ १९५ ॥

उपदेश इति वर्त्तते। अजन्ता ये उपदेशे धातवस्तेषां कर्तृयकि अन्यतरस्यामादिरुदात्तो भवति। लूयते केदारः स्वयमेव। २। स्तार्यते केदारः स्वयमेव। २। यदाऽऽद्युदात्तत्वं न भवति तदा लसार्वधातुकनिघाते कृते यक एव स्वरो भवति। जनादीनामुपदेश एवात्वं द्रष्टव्यम्। तत्राप्ययं स्वर इष्यते। जायते स्वयमेव। सायते स्वयमेव। खायते स्वयमेव। अच इति किम्? भिद्यते स्वयमेव। कर्तृग्रहणं किम्? लूयते केदारो देवदत्तेन॥

## थलि च सेटीडन्तो वा ॥ १९६ ॥

सेटि थलि इड् वा उदात्तो भवति अन्तो वा आदिर्वाऽन्यतरस्याम्। लुलविथ। ३। यदा नैते त्रयः स्वरास्तदा लिति प्रत्ययात् पूर्वमुदात्तं भवति। तेनैते चत्वारः स्वराः पर्यायेण भवन्ति। सेटीति किम्? ययाथ। लिति प्रत्ययात् पूर्वमुदात्तमित्ययमेवात्र स्वरो भवति।

## ञ्नित्यादिर्नित्यम् ॥ १९७ ॥

ञिति निति च नित्यमादिरुदात्तो भवति। गर्गादिभ्यो यञ्—गार्ग्यः, वात्स्यः। वासुदेवार्जुनाभ्यां वुन्—वासुदेवकः, अर्जुनकः। प्रत्ययस्वरापवादोऽयं योगः। प्रत्ययलक्षणमत्र नेष्यते। तेन गर्गाः विदाः चञ्चा इत्यत्र यञि अञि कनि च लुप्ते न भवति।

## आमन्त्रितस्य च ॥ १९८ ॥

आमन्त्रितस्यादिरुदात्तो भवति। देवदत्त। देवदत्तौ। देवदत्ताः। अत्र कारकाद्दत्तश्रुतयोरेवाशिषीति प्राप्तिर्बाध्यते। लुमतापि लुप्ते प्रत्ययलक्षणमत्रेष्यते। सर्पिरागच्छ, सप्तागच्छतेति॥

## पथिमथोः सर्वनामस्थाने ॥ १९९ ॥

परिमथिशब्दावौणादिकाविदिप्रत्ययान्तौ प्रत्ययस्वरेणान्तोदात्तौ। तयोः सर्वनामस्थाने परत आदिरुदात्तो भवति। पन्थाः। पन्थानौ। पन्थानः। मन्थाः। मन्थानौ। मन्थानः। सर्वनामस्थान इति किम्? पथः पश्य। मथः पश्य। उदात्तनिवृत्तिस्वरेणान्तोदात्तो भवति। प्रत्ययलक्षणमत्रापि नेष्यते। पथिप्रिय इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः पथिशब्दः॥

## अन्तश्च तवै युगपत् ॥ २०० ॥

तवैप्रत्ययान्तस्यान्तश्चशब्दादादिश्च युगपदुदात्तौ भवतः। कर्त्तवै। हर्तवै। प्रत्ययाद्युदात्तत्वापवादः। युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम्। एकवर्जमिति वचनाद्यौगपद्यं न स्यात्॥

---

अचः—औपदेशिक अजन्त धातुओं का आदि उदात्त होता है विकल्प से यदि पर में कर्त्रर्थ यक् प्रत्यय हो।

थलि च—इड्विशिष्ट थल् के विषय में इट्, आदि स्वर तथा अन्त स्वर विकल्प से उदात्त होते हैं।

ञ्नित्यादिः—ञित् तथा नित् प्रत्ययों के परे रहते आदि स्वर नित्य उदात्त हो जाता है।

आमन्त्रितस्य—आमन्त्रितसंज्ञक का आदि स्वर उदात्त हो जाता है।

पथि—सर्वनामस्थान के परे रहते पथिन् तथा मथिन् शब्दों का आदि उदात्त हो जाता है।

अन्तश्च—तवैप्रत्ययान्त शब्द के आदि तथा अन्त स्वर साथ-साथ उदात्त हो जाते हैं।

रोचमानशोभमानाः संज्ञायाम् ॥ एते वर्त्तमानादयः संज्ञायां द्रष्टव्याः ॥ विकारसदृशे व्यस्त-समस्ते ॥ अविकारः । असदृशः । अविकारसदृशः । गृहपति । गृहपतिकः ॥ राजाह्नोश्छन्दसि ॥ अराजा । अनहः । भाषायां नञ्स्वर एव भवति ॥

## विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६१ ॥

तृजन्त अन्न तीक्ष्ण शुचि इत्येतेषु नञ उत्तरेषु विभाषाऽन्त उदात्तो भवति । अकर्त्ता । २ । अन्न—अनन्नम् २ । तीक्ष्ण—अतीक्ष्णम् २ । शुचि—अशुचिः । २ । पक्षेऽव्ययस्वर एव भवति ॥

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६२ ॥

बहुव्रीहौ समासे इदम् एतद् तदित्येभ्य उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणने वर्त्तमानस्यान्त उदात्तो भवति । इदं प्रथमं गमनं भोजनं वा यस्य स इदं प्रथमः । इदंद्वितीयः । इदंतृतीयः । एतत्प्रथमः । एतद्द्वितीयः । एतत्तृतीयः । तत्प्रथमः । तद्द्वितीयः । तत्तृतीयः । बहुव्रीहाविति किम् ? अनेन प्रथम इदम्प्रथमः । तृतीयेति योग-विभागात् समासः । इदमेतत्तद्भ्य इति किम् ? यत्प्रथमः । प्रथमपूरणयोरिति किम् ? तानि बहून्यस्य तद्बहुः । क्रियागणन इति किम् ? अयं प्रथम एषां न इदम्प्रथमः । द्रव्यगणन-मेतत् । गणन इति किम् ? अयंप्रथमः एषामिदं प्रथमाः । इदम्प्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात् कपि पूर्वमन्तोदात्तं भवति इदम्प्रथमकाः । बहुव्रीहावित्येतद्, वनं समास इति प्रागेतस्मादधिकृतं वेदितव्यम् ॥

## संख्यायाः स्तनः ॥ १६३ ॥

संख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति । द्विस्तना । त्रिस्तना । चतुःस्तना । संख्याया इति किम् ? दर्शनीयस्तना । स्तन इति किम् ? द्विशिराः(१) ॥

## विभाषा छन्दसि ॥ १६४ ॥

छन्दसि विषये बहुव्रीहौ समासे संख्यायाः परः स्तनशब्दो विभाषाऽन्तोदात्तो भवति । द्विस्तनां कुर्याद्वामदेवः । द्विस्तनां करोति द्यावापृथिव्योर्दोहाय । चतुःस्तनां करोति पशूनां दोहाय । चतुःस्तनां करोति ॥

## संज्ञायां मित्राजिनयोः ॥ १६५ ॥

संज्ञायां विषये बहुव्रीहौ समासे मित्र अजिन इत्येतयोरुत्तरपदयोरन्त उदात्तो भवति ।

---

विभाषा—नञ् से उत्तरवर्त्ती उत्तरपदस्थानीय तृप्रत्ययान्त, अन्न, तीक्ष्ण तथा शुचि शब्दों के अन्त्य स्वर विकल्प से उदात्त होते हैं ।

बहुव्रीहौ—बहुव्रीहि समास में इदम्, एतद् तथा तद् से परवर्त्ती प्रथम शब्द तथा क्रिया की गणना में वर्त्तमान पूरण प्रत्ययसे विशिष्ट शब्दों के अन्त्य स्वर उदात्त हो जाते हैं ।

संख्यायाः—बहुव्रीहि समास में संख्यावाचक शब्द से परवर्त्ती स्तन शब्द का अन्त्य स्वर उदात्त हो जाता है ।

विभाषा—छन्दोविषय में संख्यावाचकशब्दोत्तरवर्त्ती स्तन शब्द का अन्त्य स्वर बहुव्रीहि समास में विकल्प से उदात्त होता है ।

संज्ञायाम्—संज्ञाविषयक बहुव्रीहि समास में उत्तरपदस्थानीय मित्र तथा अजिन शब्दों के अन्त्य स्वर उदात्त हो जाते हैं ।

---

(१) त्रिशिरा इत्यधिकमन्यत्र ।

देवमित्रः । ब्रह्ममित्रः । वृकाजिनः । कूलाजिनः । कृष्णाजिनः । संज्ञायामिति किम् ? प्रियमित्रः । महाजिनः ॥ *ऋषिप्रतिषेधो मित्रे* । विश्वामित्र ऋषिः ॥

## व्यवायिनोऽन्तरम् ॥ १६६ ॥

व्यवायी व्यवधाता । तद्वाचिनः परमन्तरं बहुव्रीहौ समासेऽन्तोदात्तं भवति । वस्त्रान्तरः, पटान्तरः, कम्बलान्तरः । वस्त्रमन्तरं, व्यवधायकं यस्य स वस्त्रान्तरः । वस्त्रव्यवधायक इत्यर्थः । व्यवायिन इति किम् ? आत्मान्तरः । आत्मा स्वभावोऽन्तरोऽन्तो यस्यासावात्मान्तरः ।

## मुखं स्वाङ्गम् ॥ १६७ ॥

मुखमुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति । गौरमुखः । भद्रमुखः । स्वाङ्गमिति किम् ? दीर्घमुखा शाला । स्वाङ्गमद्रवादिलक्षणमिह गृह्यते ॥

## नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥ १६८ ॥

अव्यय दिक्शब्द गो महत् स्थूल मुष्टि पृथु वत्स इत्येतेभ्यः परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे नान्तोदात्तं भवति । अव्यय–उच्चैर्मुखः । नीचैर्मुखः । दिक्शब्द–प्राङ्मुखः, प्रत्यङ्मुखः । गो–गोमुखः । महत्–महामुखः । स्थूल–स्थूलमुखः । मुष्टि–मुष्टिमुखः । पृथु–पृथुमुखः । वत्स–वत्समुखः । पूर्वपदप्रकृतिस्वरो यथायोगमेषु भवति । गोमुष्टिवत्सपूर्वस्योपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते ॥

## निष्ठोपमानादन्यतरस्याम् ॥ १६९ ॥

निष्ठान्तादुपमानवाचिनश्च मुखं स्वाङ्गमुत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति । प्रक्षालितमुखः । यदैतदुत्तरपदान्तोदात्तत्वं न भवति तदा निष्ठोपसर्गपूर्वमन्यतरस्यामिति पक्षे पूर्वपदान्तोदात्तत्वं, तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वर इति त्रीण्युदाहरणानि भवन्ति । उपमानात् सिंहमुखः २ । व्याघ्रमुखः ॥ २ ॥

## जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ॥१७०॥

जातिवाचिन आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासेऽऽन्तोदात्तं भवति । सारङ्गजग्धः । पलाण्डुभक्षितः । काल–मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः । सुखादिभ्यः–सुखजातः । दुःखजातः । तृप्रजातः । जात्यादिभ्य इति किम् ? पुत्रजातः । आहिताग्न्यादित्वात् परनिपातः । अनाच्छादनादिति किम् ? वस्त्रच्छन्नः । वसनच्छन्नः । अकृतमितप्रति-

---

ऋषिप्रति—ऋष्यर्थक मित्र शब्द के अन्तोदात्तत्व का प्रतिषेध समझना चाहिए ।

व्यवायिनः—बहुव्रीहिसमास मे व्यवधानवाचक शब्दों से उत्तर में वर्तमान अन्तर शब्द का अन्त्य स्वर उदात्त हो जाता है ।

मुखम्—बहुव्रीहि समास में स्वाङ्गवाचक उत्तरपदस्थानीय मुखशब्द का अन्त्य स्वर उदात्त हो जाता है ।

नाव्यय—अव्यय, दिक्-शब्द, गो-महत् , स्थूल, मुष्टि, पृथु तथा वत्स शब्दों से परवर्त्ती उत्तरपदस्थानीय मुखशब्द का अन्त्य स्वर बहुव्रीहि समास में उदात्त नहीं होता है ।

निष्ठोपमा—निष्ठाप्रत्ययान्त तथा उपमानवाचक शब्दों से परवर्त्ती उत्तरपदस्थानीय स्वाङ्गवाचक मुख शब्द का अन्त्य स्वर विकल्प से उदात्त होता है ।

जातिकाल—आच्छादनार्थकभिन्न जातिवाचक, कालवाचक तथा सुख आदि शब्दों से परवर्त्ती क्तप्रत्ययान्त शब्दो में कृत, मित तथा प्रतिपन्न शब्दों को छोड़कर अन्य के अन्त्य स्वर उदात्त हो जाते हैं बहुव्रीहि समास में ।

पन्ना इति किम् ? कुण्डमितः। कुण्डकृतः। कुण्डप्रतिपन्नः। एतेषु बहुव्रीहिषु निष्ठान्तस्य (१) पूर्वनिपातो न भवत्येवास्मादेव ज्ञापकात्। प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो योजयितव्यः। सुखादयस्तृतीयेऽध्याये पठ्यन्ते।

## वा जाते ॥ १७१ ॥

जातशब्द उत्तरपदे वा अन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः। दन्तजातः। २ स्तनजातः। २ कालात् मासजातः। २। संवत्सरजातः। २ सुखादिभ्यः—सुखजातः। २ दुःखजातः। २

## नञ्सुभ्याम् ॥ १७२ ॥

नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति। अयवो देशः। अव्रीहिः। अमाषः। सुयवः। सुव्रीहिः। सुमाषः। समासस्यैतदन्तोदात्तत्वमिष्यते। समासान्ताश्चावयवा भवन्तीत्यनृचो बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति।

## कपि(२) पूर्वम् ॥ १७३ ॥

नञ्सुभ्यां कपि परतः पूर्वमन्तोदात्तं भवति। अकुमारीको देशः। अवृषलीकः। अब्रह्मबन्धूकः। सुकुमारीकः। सुवृषलीकः। सुब्रह्मबन्धूकः।

## ह्रस्वान्तेऽन्त्यात् पूर्वम् ॥ १७४ ॥

ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे। अयवको देशः। अव्रीहिकः। अमाषकः। सुयवकः। सुव्रीहिकः। सुमाषकः। पूर्वमिति वर्त्तमाने पुनः पूर्वग्रहणं, प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्। ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति। तेनाज्ञकः सुज्ञक इत्यत्र कबन्तस्यैवान्तोदात्तत्वं भवति॥

## बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥

उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्त्तते तस्मान्नञ इव स्वरो भवति। नञ्सुभ्यामित्युक्तम्। बहोरपि तथा भवति—बहुयवो देशः। बहुव्रीहिः। बहुतिलः। कपि पूर्वमित्युक्तं बहोरपि तथा भवति—बहुकुमारीको देशः। बहुवृषलीकः। बहुब्रह्मबन्धूकः। ह्रस्वान्ते-

---

वा जाते—बहुव्रीहि समास में जातिवाचक, कालवाचक तथा सुख आदि शब्दों से परवर्त्ती जात शब्द का अन्त्य स्वर विकल्प से उदात्त होता है।

नञ्सुभ्याम्—बहुव्रीहिसमास में नञ् तथा सु से उत्तरवर्त्ती उत्तरपदों के अन्त्य स्वर उदात्त हो जाते हैं।

कपि—नञ् तथा सु से परवर्त्ती उत्तरपद के बाद यदि कप् प्रत्यय हो तो कप् से पूर्ववर्त्ती स्वर उदात्त होता है।

ह्रस्वान्ते—बहुव्रीहि समास में नञ् तथा सु से पर में यदि कप्प्रत्यय विशिष्ट ह्रस्वान्त प्रकृति हो तो प्रकृति के अन्त्य स्वर से पूर्व स्वर उदात्त होता है न कि कप्प्रत्ययविशिष्ट उत्तरपद के अन्त्य स्वर (कप् के अकार) से पूर्व स्वर उदात्त (होता है)।

बहोः—उत्तरपदार्थ के बहुत्व के प्रतिपादक बहु शब्द से परवर्त्ती उत्तरपद का स्वरविधान भी नञ्-पूर्वक उत्तरपद के स्वरविधान के समान होता है।

---

(१) पूर्वनिपातो न भवतीत्यस्य स्थाने परनिपातो भवति। इति पा०।

(२) प्रत्ययस्य प्रकृत्यवयवतया कपोऽकारस्यैव अन्तोदात्तत्वनियमेनोदात्तत्वप्राप्तौ कपः पूर्वस्य स्वरस्योदात्तत्वं विधीयते (श्रीना०)

ऽन्त्यात् पूर्वमित्युक्तं। बहोरपि तथा भवति—बहुयवकोदेशः। बहुव्रीहिकः। बहुमाषकः। नञो जरमरमित्रमृता इत्युक्तं बहोरपि तथा भवति—बहुजरः। बहुमरः। बहुमित्रः। बहुमृतः। उत्तरपदभूम्नीति किम्? बहुषु मनोऽस्य बहुमना अयम्।

## न गुणादयोऽवयवाः॥ १७६॥

गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति। बहुगुणा रज्जुः। बह्वक्षरं पदम्। बहुच्छन्दो मानम्। बहुसूक्तः। बह्वध्यायः। गुणादिराकृतिगणो द्रष्टव्यः। अवयवा इति किम्? बहुगुणो ब्राह्मणः। अध्ययनश्रुतसदाचारादयोऽत्र गुणाः।

## उपसर्गात् स्वाङ्गं ध्रुवमपर्शु॥ १७७॥

उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे। प्रपृष्ठः। प्रोदरः। प्रललाटः। ध्रुवमित्येकरूपमुच्यते। ध्रुवमस्य शीलमिति यथा। सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठः। उपसर्गादिति किम्? दर्शनीयललाटः। स्वाङ्गमिति किम्? प्रशाखो वृक्षः। ध्रुवमिति किम्? उद्बाहुः क्रोशति। अपर्श्विति किम्? उत्पर्शुः। विपर्शुः।

## वनं समासे॥ १७८॥

समासमात्रे वनमित्येतदुत्तरपदमुपसर्गात् परमन्तोदात्तं भवति। प्रवणे यष्टव्यम्। निर्वणे प्रणिधीयते। प्रनिरन्तरिति णत्वम्। समासग्रहणं समासमात्रपरिग्रहार्थं बहुव्रीहावेव हि स्यात्।

## अन्तः॥ १७९॥

अन्तश्शब्दादुत्तरं वनमन्तोदात्तं भवति। अन्तर्वणो देशः। अनुपसर्गार्थं आरम्भः॥

## अन्तश्च॥ १८०॥

अन्तश्शब्दश्चोत्तरपदमुपसर्गादन्तोदात्तं भवति। प्रान्तः। पर्यन्तः। बहुव्रीहिरयं प्रादिसमासो वा॥

## न निविभ्याम्॥ १८१॥

नि वि इत्येताभ्यामुत्तरोऽन्तश्शब्दो नान्तोदात्तो भवति। न्यन्तः। व्यन्तः। पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः। तत्रोदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति स्वरितो भवति॥

## परेरभितोभावि मण्डलम्॥ १८२॥

परेरुत्तरमभितोभाविवचनं मण्डलं चान्तोदात्तं भवति। परिकूलम्। परितीरम्।

---

न गुणादयः—अवयवार्थक बहुशब्द से उत्तरवर्ती गुण आदि शब्दों के अन्त्य स्वर उदात्त नहीं होते हैं।

उपसर्गात्—प्र आदि शब्दों से परवर्ती उत्तरपदस्थानीय पर्शुशब्दभिन्न शब्दों के अन्त्य स्वर उदात्त हो जाते हैं यदि समुदाय से स्वाङ्ग की सार्वकालिक एकरूपता (=ध्रुवत्व) की प्रतीति होती हो।

वनम्—समासमात्र में प्रादिपूर्वक वनशब्द अन्तोदात्त होता है।

अन्तः—अन्तः शब्द से परवर्ती वन शब्द भी समासमात्र में अन्तोदात्त होता है।

अन्तश्च—प्रादि से उत्तरवर्ती अन्तः शब्द भी समासमात्र में अन्तोदात्त हो जाता है।

न निवि—परन्तु नि तथा वि से परवर्ती अन्तः शब्द का अन्तोदात्तत्व नहीं होता है।

परेरभितो—किसी एक पदार्थ के दोनों भागों में होनेवाले पदार्थ के वाचक शब्द मण्डल शब्द यदि परिशब्द से पर में हों तो अन्तोदात्त हो जाते हैं।

परिमण्डलम् । बहुव्रीहिरयं प्रादिसमासोऽव्ययीभावो वा । अव्ययीभावपक्षेऽपि हि, परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेष्विति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमनेन बाध्यते । अभित इत्युभयतः । अभितो भावोऽस्यास्तीति तदभितोभावि । यच्चैवंस्वभावं कूलादि तदभितोभाविग्रहणेन गृह्यते ॥

## प्रादस्वाङ्गं संज्ञायाम् ॥ १८३ ॥

प्रादुत्तरपदमस्वाङ्गवाचि संज्ञायां विषयेऽन्तोदात्तं भवति । प्रकोष्ठम् । प्रगृहम् । प्रद्वारम् । अस्वाङ्गमिति किम् ? प्रहस्तम् । प्रपदम् । संज्ञायामिति किम् ? प्रपीठम्(१) ॥

## निरुदकादीनि च ॥ १८४ ॥

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति । निरुदकम् । निरुलपम् । निरुपलमित्यन्ये पठन्ति । निर्मशकम् । निर्मक्षिकम् । एषां प्रादिसमासो बहुव्रीहिर्वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । निष्कालकः । निष्क्रान्तः कालकादिति कन् प्रत्ययान्तेन नालशब्देन प्रादिसमासः । निष्कालिक इत्यन्ये पठन्ति । निष्पेषः । दुस्तरीपः । अवितृस्तृतन्त्रिभ्य ईः । तरीः । तां पातीति तरीपः । कुत्सितस्तरीपो दुस्तरीपः । निस्तरीप इति केचित् पठन्ति । अपरे निस्तरीक इति । ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति । निरजिनम् । उदजिनम् । उपाजिनम् । *परेर्हस्तपादकेशकर्षाः* । परिहस्तः । परिपादः । परिकेशः । परिकर्षः । निरुदकादिराकृतिगणः ॥

## अभेर्मुखम् ॥ १८५ ॥

अभेरुत्तरं मुखमन्तोदात्तं भवति । अभिमुखः । बहुव्रीहिरयं प्रादिसमासो वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । उपसर्गात् स्वाङ्गमिति सिद्धे वचनमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च । अभिमुखा शाला ॥

## अपाच्च ॥ १८६ ॥

अपाच्चोत्तरं मुखमन्तोदात्तं भवति । अपमुखः । अपमुखम् । अव्ययीभावोऽप्यत्र प्रयोजयति । तत्रापि हि परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेष्वित्युक्तम् । योगविभाग उत्तरार्थः ॥

## स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च ॥ १८७ ॥

स्फिग पूत वीणा अञ्जस् अध्वन् कुक्षि इत्येतान्युत्तरपदानि सीरनामानि नामन्शब्दश्चापादुत्तराण्यन्तोदात्तानि भवन्ति । अपस्फिगम् । अपपूतम् । अपवीणम् । अपाञ्जः । अपाध्वा । उपसर्गादध्वन इति यदा समासान्तो नास्ति तदाऽनेनान्तोदात्तत्वं भवति । तस्मिन् हि सत्यच्प्रत्ययस्य चित्त्वादेव सिद्धम् । अनित्यश्च समासान्त इत्येतदेव ज्ञापकम् ।

---

प्रादस्वाङ्गम्—संज्ञाविषय में प्रशब्द से परवर्त्ती स्वाङ्गवाचकभिन्न शब्द अन्तोदात्त हो जाता है ।

निरुदकादीनि—निरुदक आदि समस्त शब्द-समूह भी अन्तोदात्त होता है ।

परेः—परिशब्द से परवर्त्ती हस्त, पाद, केश तथा कर्ष शब्द अन्तोदात्त हो जाते है ।

अभेर्मुखम्—अभि से परवर्त्ती मुख शब्द अन्तोदात्त हो जाता है ।

अपाच्च—'अप' शब्द से परवर्त्ती मुख शब्द भी अन्तोदात्त हो जाता है ।

स्फिगपूत—'अप' शब्द से परवर्त्ती स्फिग, पूत, वीणा, अञ्जस्, अध्वन्, कुक्षि, सीर एवं सीरवाचक अन्यान्य शब्द तथा नामन् शब्द अन्तोदात्त हो जाते हैं ।

---

(१) प्राक्षः इति पाठान्तरम् ।

अपकुक्षिः । अपसीरः । अपहलम् । अपलाङ्गलम् । अपनाम । सर्वत्र प्रादिसमासो बहुव्रीहिरव्ययीभावो वा । स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थं च ॥

## अधेरुपरिस्थम् ॥ १८८ ॥

अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं भवति । अधिदन्तः । अधिकर्णः । अधिकेशः । अध्यारूढो दन्त इति प्रादिसमासः । । अध्यारूढो वा दन्त इति समानाधिकरण उत्तरपदलोपी समासः । दन्तस्योपरि योऽन्यो दन्तो जायते स उच्यतेऽधिदन्त इति । उपरिस्थमिति किम् ? अधिकरणम् ॥

## अनोरप्रधानकनीयसी ॥ १८९ ॥

अनोरुत्तरमप्रधानवाचि कनीयश्चान्तोदात्तं भवति । अनुगतो ज्येष्ठमनुज्येष्ठः । अनुमध्यमः । पूर्वपदार्थप्रधानः प्रादिसमासोऽयम् । अनुगतः कनीयाननुकनीयान् । उत्तरपदार्थप्रधानोऽयम् । प्रधानार्थं च कनीयोग्रहणम् । अप्रधानकनीयसी इति किम् ? अनुगतो ज्येष्ठोऽनुज्येष्ठः ॥

## पुरुषश्चान्वादिष्टः ॥ १९० ॥

पुरुषशब्दोऽन्वादिष्टवाची चानोरुत्तरोऽन्तोदात्तो भवति । अन्वादिष्टः पुरुषोऽनुपुरुषः । अन्वादिष्टोऽन्वाचितः कथितानुकथितो वा । अन्वादिष्ट इति किम् ? अनुगतः पुरुषोऽनुपुरुषः ॥

## अतेरकृत्पदे ॥ १९१ ॥

अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तं भवति । अत्यङ्कुशो नागः । अतिकशोऽश्वः । पदशब्दः खल्वपि—अतिपदा शक्वरी । अकृत्पदे इति किम् ? अतिकारकः । *अतेर्धातुलोप इति(१)वक्तव्यम्* । इह मा भूत्—शोभनो गार्ग्यः अतिगार्ग्यः । इह च यथा स्यात्—अतिक्रान्तः कारकादतिकारक इति ॥

## नेरनिधाने ॥ १९२ ॥

नेः परमुत्तरपदमन्तोदात्तं भवति अनिधाने । निधानमप्रकाशता । तद्भिन्नमनिधानं प्रकाशनम् निमूलम् । न्यक्षम् । नितृणम् । बहुव्रीहिरयं प्रादिसमासो वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । अनिधान इति किम् ? निवाग् वृषलः । निदण्डः । निहितवाक् निहितदण्ड इत्यर्थः । निशब्दोऽत्र निधानार्थं ब्रवीति । प्रादयो हि वृत्तिविषये ससाधनां क्रियामाहुः ॥

---

अधेरुपरि—अधि शब्द से परवर्त्ती उपरिस्थित पदार्थवाचक शब्दों के अन्त्य स्वर उदात्त हो जाते हैं।

अनोः—अनु शब्द से परवर्त्ती अप्रधानपदार्थवाचक शब्द तथा कनीयस् शब्द अन्तोदात्त हो जाते हैं।

पुरुषश्च—अनुशब्द से परवर्त्ती अन्वादिष्टवाचक पुरुष शब्द अन्तोदात्त हो जाता है।

अतेरकृत्—अति शब्द से परवर्त्ती अकृदन्त शब्द तथा पद शब्द अन्तोदात्त हो जाते हैं।

अतेः—अति शब्द से परे उक्त उत्तरपद का अन्तोदात्तत्व तभी समझना चाहिए यदि अति के बाद आए हुए धातु का लोप—अदर्शन अथवा अप्रयोग—हुआ हो।

नेरनिधाने—निशब्द से परवर्त्ती उत्तरपद अन्तोदात्त हो जाते हैं यदि समुदाय से अनिधान (=प्रकटता) की प्रतिपत्ति हो।

---

(१) अत्र धातुलोपः अदर्शनम् अप्रयोगो वेति यथास्थम् अतिकारकः अत्यङ्कुशः इत्युभयोरपि संग्रहः। (श्रीना०)

## प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥

प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ता भवन्ति। प्रतिगतोंऽशुः, प्रत्यंशुः। प्रतिजनः। प्रतिराजा। राजन् शब्दः समासान्तस्यानित्यत्वाद्यदा टज् नास्ति तदा प्रयोजयति। तस्मिन् हि सति चित्वादेवान्तोदात्तत्वं सिद्धम्। अंशु। जन। राजन्। उष्ट्र। खेटक। अजिर। आर्द्रा। श्रवण। कृत्तिका। अर्द्ध। पुर। अंश्वादिः। तत्पुरुष इति किम्? प्रतिगता अंशवोऽस्य प्रत्यंशुरयमुष्ट्रः॥

## उपाद् द्व्यजजिनमगौरादयः ॥ १९४ ॥

उपादुत्तरं द्व्यजजिनं चान्तोदात्तं भवति तत्पुरुषे समासे गौरादीन् वर्जयित्वा। उपगतो देवमुपदेवः। उपसोमः। उपेन्द्रः। उपहोडः। अजिन-उपाजिनम्। अगौरादय इति किम्? उपगौरः। उपतैषः। गौर। तैष। तैल। लेट। लोट। जिह्वा। कृष्णा। कन्या। गुड। कल्प। पाद। गौरादिः। तत्पुरुष इत्येव—उपगतः सोमोऽस्य उपसोमः॥

## सोरवक्षेपणे ॥ १९५ ॥

सुशब्दात् परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने। अवक्षेपणं निन्दा। इह खल्विदानीं सुस्थण्डिले सुस्फिताभ्यां सुप्रत्यवसितः। सुशब्दोऽत्र पूजायामेव। वाक्यार्थस्त्ववक्षेपणमसूयया तथाभिधानात्। सोरिति। किम्? कुब्राह्मणः। अवक्षेपण इति किम्? शोभनेषु तृणेषु सुतृणेषु॥

## विभाषोत्पुच्छे ॥ १९६ ॥

उत्पुच्छशब्दे तत्पुरुषे विभाषाऽन्त उदात्तो भवति। उत्क्रान्तः पुच्छाद्, उत्पुच्छः। यदा तु पुच्छमुदस्यति उत्पुच्छयति, उत्पुच्छयतेरच्, उत्पुच्छस्तदा, थाथादिसूत्रेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयमिति सेयमुभयत्र विभाषा भवति। तत्पुरुष इत्येव—उदस्तं पुच्छमस्य उत्पुच्छः॥

## द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ ॥ १९७ ॥

द्वि त्रि इत्येताभ्यामुत्तरेषु पाद् दत् मूर्द्धन् इत्येषूत्तरपदेषु यो बहुव्रीहिस्तत्र विभाषाऽन्त उदात्तो भवति। द्वौ पादावस्य, द्विपात्। २। त्रिपात्। २। द्विदन्। २। द्विमूर्द्धा। २। त्रिमूर्द्धा २। त्रिदन्। पादिति कृताकारलोपः पादशब्दो गृह्यते। ददिति कृतददादेशोदन्तशब्दः। मूर्द्धन्निति त्वकृतसमासान्तो नान्त एव मूर्द्धन्शब्दः। तस्यैतत्प्रयोजनमसत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात्। एतदेव ज्ञापकमनित्यः समासान्तो भवतीति। यदापि समासान्तः क्रियते तदापि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं

---

प्रतेरंश्वादयः—तत्पुरुष समास में प्रतिशब्द से परवर्त्ती अंशु आदि शब्द अन्तोदात्त हो जाते हैं।

उपात्—उपशब्द से परवर्त्ती गौरादिगणपठितशब्दभिन्न द्व्यच् (=दो स्वरों से सम्पन्न शब्द) तथा अजिन शब्द अन्तोदात्त हो जाते हैं।

सोरवक्षेपणे—सुशब्दपूर्वक उत्तरपद तत्पुरुषसमास में अन्तोदात्त हो जाता है समुदाय से निन्दा के गम्यमान होने पर।

विभाषोत्पुच्छे—तत्पुरुषसमासान्तर्गत उत्पुच्छ शब्द का अन्तोदात्तत्व वैकल्पिक है।

द्वित्रिभ्याम्—द्विपूर्वक पादशब्दोत्तरपदक, द्विपूर्वक दन्तशब्दोत्तरपदक, द्विपूर्वक मूर्धन्शब्दोत्तरक एवम् त्रिपूर्वक पादशब्दोत्तरपदक, त्रिपूर्वक दन्तशब्दोत्तरपदक तथा त्रिपूर्वक मूर्धन् शब्दोत्तरपदक बहुव्रीहिसमास में उत्तरपदों का वैकल्पिक अन्तोदात्तत्व होता है।

पक्षे भवत्येव—द्विमूर्द्धः। त्रिमूर्द्धः। द्वित्रिभ्यामिति किम्? कल्याणमूर्द्धा। पादादिष्विति किम्? द्विहस्तम्। बहुव्रीहाविति किम्? द्वयोर्मूर्द्धा, द्विमूर्द्धा॥

## सक्थं चाऽक्रान्तात्(१) ॥ १९८ ॥

सक्थमिति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते, सोऽक्रान्तात् परो विभाषान्तोदात्तो भवति। गौरसक्थः २। श्लक्ष्णसक्थः २। अक्रान्तादिति किम्? चक्रसक्थः। पक्षश्चिस्वान्नित्यमन्तोदात्तत्वं भवति॥

## परादिश्छन्दसि बहुलम् ॥ १९९ ॥

छन्दसि विषये परादिरुदात्तो भवति बहुलम्। परशब्देनात्र सक्थशब्द एव गृह्यते। अञ्जिसक्थमालभेत। त्वाष्ट्रौ लोमसक्थौ। ऋजुबाहुः। वाक्पतिः। चित्पतिः॥

(२)परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं(३) ततः॥

परादिरुदाहृतः। परान्तः। ॐअन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम्ॐ। त्रिचक्रेण त्रिवन्धुरेण। त्रिवृता रथेन। पूर्वान्तः। ॐपूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसंख्यानम्ॐ। मरुद्वृद्धः। पूर्वादिः। ॐपूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्ॐ। दिवोदासाय सामगाय ते इत्येवमादि सर्वं संगृहीतं भवति॥

इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य
द्वितीयः पादः॥ ६॥ २॥



---

सक्थम्—क्रशब्दान्तभिन्न शब्दों से परवर्त्ती सक्थ शब्द विकल्प से अन्तोदात्त होता है।

परादिः—वेद में उत्तरपदभूत पर शब्द ( = सक्थ ) शब्द का आद्युदात्तत्व भी बाहुल्येन होता है।

अन्तोदात्त—त्रिचक्र आदि शब्दों के भी वैदिक प्रयोग में अन्तोदात्तत्व का प्रतिपादन करना चाहिए।

पूर्वपदान्तोदात्त—मरुद्वृद्ध आदि शब्दों में पूर्वपद के अन्तोदात्तत्व को भी प्रतिपादन करना चाहिए।

पूर्वपदाद्युदात्त—दिवोदास आदि समस्त शब्दों में पूर्वपद के आद्युदात्तत्व का भी प्रतिपादन करना चाहिए।

षष्ठ अध्याय का द्वितीय पाद समाप्त हुआ।



---

( १ ) न क्र-शब्दः अन्ते यस्य स अक्रान्तः = गौरादिशब्दः। चक्रश्च क्रान्तः शब्दः। (श्रीना०)
( २ ) बहुलग्रहणलब्धार्थमाह—परादिरिति। ( श्रीना० )
( ३ ) अत्र भाष्ये 'बहुलं स्मृतः' इति पाठो लभ्यते। ( श्रीना० )

# अथ षष्ठाध्यायस्य तृतीयः पादः

## अलुगुत्तरपदे ॥ १ ॥

अलुगिति च उत्तरपदे इति च एतदधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपद इत्येवं तद्वेदितव्यम् । वक्ष्यति—पञ्चम्याः स्तोकादिभ्यः । स्तोकान्मुक्तः । अल्पान् मुक्तः । उत्तरपद इति किम् ? निष्क्रान्तः स्तोकाद्, निःस्तोकः । अन्यार्थमिदमुत्तरपदग्रहणमिहाप्यलुको निवृत्तिं करोतीत्येवमर्थं लक्षणप्रतिपदोक्तपरिभाषा नाश्रयितव्या । अलुगधिकारः प्रागानङः । उत्तरपदाधिकारः प्रागङ्गाधिकारात् ॥

## पञ्चम्याः स्तोकादिभ्यः ॥ २ ॥

स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि तेभ्यः परस्याः पञ्चम्या उत्तरपदेऽलुग्भवति-स्तोकान् मुक्तः । अल्पान् मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान् मुक्तः । समासे कृते प्रातिपदिकत्वात् सुपो लुकि प्राप्ते प्रतिषेधः क्रियते । द्विवचनबहुवचनान्तानां तु स्तोकादीनामनभिधानात् समास एव न भवति-स्तोकाभ्यां मुक्तः । स्तोकेभ्यो मुक्त इति । तेनात्र न कदाचिदप्यैकपद्यमैकस्वर्यं च भवति । ॐब्राह्मणाच्छंसिन उपसंख्यानम्ॐ । ब्राह्मणादादाय शंसतीति, ब्राह्मणाच्छंसीति ऋत्विग्विशेषस्य(१) रूढिरियम् । तस्य व्युत्पत्तिरसता सता वावयवार्थेन क्रियते ॥

## ओजःसहोऽम्भस्तमसस्तृतीयायाः ॥ ३ ॥

ओजस् सहस् अम्भस् तमस् इत्येतेभ्य उत्तरस्यास्तृतीयाया अलुग्भवति उत्तरपदे । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् । ॐअञ्जस उपसंख्यानम्ॐ । अञ्जसाकृतम् । ॐपुंसानुजो जनुषान्ध इति वक्तव्यम्ॐ । पुंसानुजः । पुंसा हेतुनानुजः । जनुषान्धः । जनुषा हेतुनाऽन्धः । तृतीयेति योगविभागात् समासः । जनुरिति जन्मनो नामधेयम्(२) ॥

## मनसः संज्ञायाम् ॥ ४ ॥

---

अलुक्—अब यहाँ से उत्तरसूत्रों में 'अलुक्' तथा 'उत्तरपदे' का अधिकार समझना चाहिए ।

पञ्चम्याः—स्तोकार्थक, अन्तिकार्थक, दूरार्थक तथा कृच्छ्रार्थक शब्दोंसे परवर्त्ती पञ्चमी का उत्तरपदके परे रहते अलुक् होता है, अर्थात् लुक् नहीं होता है ।

ब्राह्मणात्—ब्राह्मणाच्छंसिन् शब्द में भी उत्तरपद के परे पञ्चमी के अलुक् का प्रतिपादन करना चाहिए ।

ओजः—ओजस्, सहस्, अम्भस् तथा तमस् शब्दों से विहित पञ्चमी का अलुक् होता है उत्तरपद के परे रहने पर ।

अञ्जसः—अञ्जस् शब्द से विहित तृतीया का भी उत्तरपद के परे रहते लुक् नहीं होता है—ऐसी व्याख्या करनी चाहिए ।

पुंसानुजो—'पुंसानुजः' तथा 'जनुषान्धः' शब्दों में भी उत्तरपद के परे तृतीया के अलुक् का व्याख्यान करना चाहिए ।

मनसः—मनस् शब्द विहित तृतीया का उत्तरपद के परे लुक् नहीं होता है समुदाय से संज्ञा की प्रतीति होने पर ।

---

(१) विशेषस्य कस्यचिदिति पुस्तकान्तरेऽधिकम् ।

(२) पुंसा हेतुनेत्यारभ्य नामधेयमित्यन्तोपपाठः पदमञ्जर्यामसत्त्वात् ।

मनस उत्तरस्यास्तृतीयायाः संज्ञायामलुग्भवति। मनसादत्ता। मनसागुप्ता। मनसासंगता। संज्ञायामिति किम्? मनोदत्ता। मनोगुप्ता॥

## आज्ञायिनि(१) च॥ ५॥

आज्ञायिन्युत्तरपदे मनस उत्तरस्यास्तृतीयाया अलुग्भवति। मनसाऽऽज्ञातुं शीलमस्य, मनसाज्ञायी॥

## आत्मनश्च पूरणे॥ ६॥

आत्मन उत्तरस्यास्तृतीयायाः पूरणप्रत्ययान्त उत्तरपदेऽलुग्भवति। आत्मनापञ्चमः। आत्मनाषष्ठः। तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया। तृतीयेति योगविभागात् समासः। आत्मना वा कृतः पञ्चमः, आत्मनापञ्चमः। कथं जनार्दनस्त्वात्मचतुर्थ एवेति? बहुव्रीहिरयमात्मा चतुर्थोऽस्यासावात्मचतुर्थः॥

## वैयाकरणाख्यायां चतुर्थ्याः॥ ७॥

वैयाकरणस्याख्या वैयाकरणाख्या। आख्या संज्ञा। यया संज्ञया वैयाकरणा एव व्यवहरन्ति तस्यामात्मन उत्तरस्याश्चतुर्थ्या अलुग्भवति। आत्मनेपदम्। आत्मनेभाषा। तादर्थ्ये चतुर्थी। चतुर्थीति योगविभागात् समासः॥

## परस्य च॥ ८॥

परस्य च या चतुर्थी तस्या वैयाकरणाख्यायामलुग्भवति। परस्मैपदम्। परस्मैभाषा॥

## हलदन्तात् सप्तम्याः संज्ञायाम्॥ ९॥

हलन्तादवन्ताचोत्तरस्याः सप्तम्याः संज्ञायामलुग्भवति। युधिष्ठिरः। त्वचिसारः। गविष्ठिर इत्यत्र, गवियुधिभ्यां स्थिर इत्यत एव वचनादलुक्। अदन्तात्—अरण्येतिलकाः। अरण्येमाषकाः। वनेकिंशुकाः। वनेहरिद्रकाः। वनेबल्वजकाः। पूर्वाह्णस्फोटकाः। कूपेपिशाचकाः। हलन्तादिति किम्? नद्यां कुक्कुटिका, नदीकुक्कुटिका। भूम्यां पाशाः, भूमिपाशाः। संज्ञायामिति किम्? अक्षशौण्डः। ॐहृद्द्युभ्यां ङेःॐ। हृद् दिव इत्येताभ्यामुत्तरस्य ङेरलुक् भवति। हृदिस्पृक्। दिविस्पृक्॥

---

आज्ञायिनि—आज्ञायिन् शब्द के उत्तरपदस्थानीय होने पर भी मनस्‌शब्दविहित तृतीया का लुक् नहीं होता है।

आत्मनश्च—पूरणप्रत्ययान्त यदि उत्तरपद हो तो आत्मन् शब्द से विहित तृतीया का भी लुक् नहीं होता है।

वैयाकरणा—वैयाकरणमात्र द्वारा व्यवह्रियमाण संज्ञा-शब्द के पूर्वावयव आत्मन् शब्द से विहित चतुर्थी विभक्ति का उत्तरपद के परे लुक् नहीं होता है।

परस्य—वैयाकरणमात्रप्रसिद्ध संज्ञावाचक शब्द के पूर्वावयव 'पर' शब्द से विहित चतुर्थी का भी उत्तरपद के परे लुक् नहीं होता है।

हलदन्तात्—हलन्त तथा अदन्त शब्दों से विहित सप्तमी का उत्तरपद के परे लुक् नहीं होता है समुदाय से संज्ञा की यदि प्रतीति होती हो।

हृद्द्युभ्याम्—हृत् तथा द्यु शब्द से विहित ङि विभक्ति का उत्तरपद के परे लुक् नहीं होता है—ऐसा समझना चाहिए।

---

(१) असंज्ञार्थं वचनम्। (श्रीना०)

## कार(१)नाम्नि च प्राचां हलादौ ॥ १० ॥

प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्या अलुग्भवति । सूपेशाणः(२) । दृषदिमाषकः । हलेद्विपदिका । हलेत्रिपदिका । कारविशेषस्य संज्ञा एताः । तत्र पूर्वेणैव सिद्धे नियमार्थमिदम् । एते च त्रयो नियमविकल्पा अत्रेष्यन्ते—कारनाम्न्येव प्राचामेव हलादावेवेति । कारनाम्नीति किम् ? अभ्यर्हिते पशुः, अभ्यर्हितपशुः । कारादन्यस्यैतद्देयस्य नाम । प्राचामिति किम् ? यूथेपशुः यूथपशुः । हलादाविति किम् ? अविकटे उरणः, अविकटोरणः । हलदन्तादित्येव । नद्यां दोहनी, नदीदोहनी ॥

## मध्याद् गुरौ ॥ ११ ॥

मध्यादुत्तरस्याः सप्तम्या गुरावुत्तरपदेऽलुग्भवति । मध्येगुरुः ॥ ॐअन्ताच्चेति वक्तव्यम्ॐ ॥ अन्तेगुरुः । सप्तमीति योगविभागात्समासः ॥

## अमूर्धमस्तकात् स्वाङ्गादकामे ॥ १२ ॥

मूर्द्धमस्तकवर्जिताद् स्वाङ्गादुत्तरस्याः सप्तम्या अकाम उत्तरपदेऽलुग्भवति । कण्ठे कालोऽस्य कण्ठेकालः । उरसिलोमा । उदरेमणिः । अमूर्द्धमस्तकादिति किम् ? मूर्द्धशिखः । अकाम इति किम् ? मुखे कामोऽस्य, मुखकामः । स्वाङ्गादिति किम् ? अक्षशौण्डः । हलन्तादित्येव । अङ्गुलित्राणः । जङ्घावलिः ॥

## बन्धे च विभाषा ॥ १३ ॥

बन्ध इति घञन्तो गृह्यते । तस्मिन्नुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्या विभाषाऽलुग् भवति । हस्तेबन्धः । हस्तबन्धः । चक्रेबन्धः । चक्रबन्धः । उभयत्र विभाषेयम् । स्वाङ्गाद् बहुव्रीहौ पूर्वेण नित्यमलुक् प्राप्नोति । तत्पुरुषे तु स्वाङ्गादस्वाङ्गाच्च नेन्सिद्धबध्नातिषु चेति प्रतिषेधः प्राप्नोति । हलदन्तादित्येव । गुप्तिबन्धः(३) ॥

## तत्पुरुषे कृति बहुलम् ॥ १४ ॥

---

कारनाम्नि—जिस समस्त शब्द से प्राग्देशीय कार, अर्थात् वणिगादि द्वारा राजा को कर के रूप में समर्पित धन, का अभिधान होता हो उस समास के हलन्त तथा अदन्त पूर्वपदों से विहित सप्तमी का भी लुक् नहीं होता है यदि उत्तरपद हलादि हो ।

मध्याद्—मध्य शब्द से विहित सप्तमी का गुरु शब्द के उत्तरपद होने पर लुक् नहीं होता है ।

अन्ताच्चेति—गुरु शब्द के उत्तरपद होने पर अन्त शब्द विहित सप्तमी के लुगभाव की भी व्याख्या करनी चाहिए ।

अमूर्ध—मूर्धन् तथा मस्तक शब्दों से भिन्न हलन्त तथा अदन्त स्वाङ्गवाचक शब्दों से विहित सप्तमी का काम शब्दभिन्न उत्तरपद के परे लुक् नहीं होता है ।

बन्धे—घञन्त बन्ध शब्द के उत्तरपदस्थानीय होने पर हलन्त तथा अदन्त शब्दों से विहित सप्तमी का विकल्प से अलुक् होता है ।

तत्पुरुषे—तत्पुरुष समास में कृदन्त के उत्तरपद होने पर पूर्वपदविहित सप्तमी का बाहुल्येन अलुक् होता है ।

---

(१) वणिग्भिः पशुपालकैः कर्षकैश्च राज्ञे देयं धनाकरः, स एव कारः, प्रज्ञादित्वादण् । उक्तार्थे च "पाणिनिकालीन भारतवर्ष" (पृ० १८० ) इति ग्रन्थो द्रष्टव्यः । ( श्रीना० )

(२) मुकुटेकार्षापणमित्यधिकं पुस्तकान्तरे ।

(३) कारिकाबन्ध इत्यधिकमेकस्मिन्पुस्तके ।

तत्पुरुषे समासे कृदन्त उत्तरपदे सप्तम्या बहुलमलुग्भवति। स्तम्बेरमः। कर्णेजपः। न च भवति—कुरुचरो, मद्रचरः॥

## प्रावृट्शरत्कालदिवां जे ॥ १५ ॥

प्रावृट् शरत् काल दिव् इत्येतेषां ज उत्तरपदे सप्तम्या बहुलमलुग्भवति। प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यैवायं प्रपञ्चः॥

## विभाषा वर्षक्षरशरवरात् ॥ १६ ॥

वर्ष, क्षर, शर, वर इत्येतेभ्य उत्तरस्याः सप्तम्या ज उत्तरपदे विभाषाऽलुग्भवति। वर्षेजः। वर्षजः। क्षरेजः। क्षरजः। शरेजः। शरजः। वरेजः। वरजः॥

## घकालतनेषु कालनाम्नः ॥ १७ ॥

घसंज्ञके प्रत्यये कालशब्दे तनप्रत्यये च परतः कालनाम्न उत्तरस्याः सप्तम्या विभाषाऽलुग्भवति। घ—पूर्वाह्णेतरे। पूर्वाह्णतरे। पूर्वाह्णेतमे। पूर्वाह्णतमे। काल—पूर्वाह्णेकाले। पूर्वाह्णकाले। तन—पूर्वाह्णेतने। पूर्वाह्णतने। कालनाम्न इति किम्? शुक्लतरे। शुक्लतमे। हलदन्तादित्येव। रात्रितरायाम्। उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते, "हृदयस्य हृल्लेख" इति लेखग्रहणाल्लिङ्गात्। तेन घतनग्रहणे तदन्तग्रहणं न भवति। कालेति स्वरूपग्रहणम्॥

## शयवासवासिष्वकालात् ॥ १८ ॥

शय, वास, वासिन् इत्येतेषूत्तरपदेष्वकालवाचिन उत्तरस्याः सप्तम्या विभाषाऽलुग्भवति। खेशयः। खशयः। ग्रामेवासः। ग्रामवासः। ग्रामेवासी। ग्रामवासी। अकालादिति किम्? पूर्वाह्णशयः। हलन्तादित्येव। भूमिशयः। ॐअपो योनियन्मतुषु(१)सप्तम्या अलुग्वक्तव्यःॐ। अप्सुयोनिः। अप्सव्यः। अप्सुमन्तौ। अप्सु भव इति दिगादित्वाद्य-

---

प्रावृट्—'ज' शब्द के उत्तरपदत्व में पूर्वपदस्थानीय वर्ष, क्षर, शर तथा वर शब्दों से विहित सप्तमी का विकल्प से लुक् नहीं होता है।

घकाल—घसंज्ञक प्रत्ययों, काल शब्द तथा तनप्रत्यय के परे रहते कालवाचकशब्दविहित सप्तमी का विकल्प से लुक् नहीं होता है।

शयवास—उत्तरपद के स्थान में शय, वास तथा वासिन् शब्द के प्रयुक्त होने पर कालवाचकभिन्न शब्द विहित सप्तमी का विकल्प से लुक् नहीं होता है।

अपो—योनि शब्द, यत्प्रत्ययान्त शब्द तथा मतुप् प्रत्यय ( अथवा मति शब्द ) के परे अप-शब्द विहित सप्तमी के लुक् नहीं होने की व्याख्या करनी चाहिए।

---

( १ ) अत्र हरदत्तः—सप्तम्यन्तान्मतुपोऽसम्भवात् अप्स्विति शब्दो ययोरस्ति तौ अप्सुमन्तौ कारीषाज्यभागौ, तयोर्हि 'अप्स्वग्ने सधिष्टव', 'अप्सु मे सोमो अब्रवीत्' इत्यनुवाक्ययोरप्सुशब्दोऽस्ति। यद्येवम् अनुकरणत्वात् अस्यवामीयादिवत् लुक् न भविष्यति, किं मतुब्ग्रहणेन? अन्ये तु मतिशब्दं ( मतुपः स्थाने ) पठन्ति, उदाहरन्ति—'अत्र सोमो वाप्सुमतिः' इति; तत्तु भाष्ये न दृष्टम्—इति व्याचष्टे। परन्त्वाधुनिके भाष्यपुस्तके तु "अलुगुत्तरपदे" ( पा० सू० ६।३।१ ) इति सूत्रव्याख्यानावसरे 'अपो योनियन्मतिषु चोपसंख्यानम्' इत्युक्त्वा 'अप्सुमतिः' इत्युदाहृतम्। "हलोऽनन्तराः" ( पा० सू० १।१।७ ) सूत्रभाष्यव्याख्यायाम् भर्तृहरिणापि "इदं तर्हि प्राप्नोति—अप्सुयोनिः, अप्सुमतिः इति, 'अपो योनियन्मतिषु' ( अपो योनिजमतिषु इति मुद्रितपाठस्त्वपपाठः) इति अलुकि कृते अत्रापि नास्ति अवग्रहः" इत्युक्तौ उदाहरणे वार्तिके च मतिशब्दः पठितः। तस्माद्धरदत्तोक्तं चिन्त्यम् एव। मतिशब्दपाठस्यौचित्यं युक्त्यन्तरेण अपि नागेशेन समर्थितम्। उद्योते तद्वार्तिकव्याख्यानकाले इति तत एवावधेयम् ( श्रीना० )।

त्यय(१) सर्वत्र सप्तमीति योगविभागात् समासः ॥

## नेन्सिद्धबध्नातिषु च ॥ १९ ॥

इन्नन्ते सिद्धशब्दे बध्नातौ च परतः सप्तम्या अलुग्न भवति । स्थण्डिलशायी(२)सिद्ध-सांकाश्यसिद्धः, काम्पिल्यसिद्धः। बध्नाति-चक्रबन्धकः, चरकबन्धकः । "सप्तमी" इति योगविभागात् समासः। चक्रबन्ध इति केचिदुदाहरन्ति । तत्पचाद्यजन्तं द्रष्टव्यम् । घञन्ते हि "बन्धे च विभाषा" इत्युक्तम् ॥

## स्थे च भाषायाम् ॥ २० ॥

स्थे चोत्तरपदे भाषायां सप्तम्या अलुग्न भवति । समस्थः । विषमस्थः। कूटस्थः। पर्वतस्थः। भाषायामिति किम् ? कृष्णोस्या खरेष्ठः। "पूर्वपदात्" इति षत्वम् ॥

## षष्ठ्या आक्रोशे ॥ २१ ॥

आक्रोशे गम्यमाने उत्तरपदे षष्ठ्या अलुग्भवति। चौरस्यकुलम् । वृषलस्यकुलम्। आक्रोश इति किम् ? ब्राह्मणकुलम् । ॐषष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग्वक्तव्यःॐ। वाचोयुक्तिः। दिशोदण्डः । पश्यतोहरः । ॐआमुष्यायणामुष्य-पुत्रिकामुष्यकुलिके चालुग्वक्तव्यःॐ अमुष्यापत्यमामुष्यायणः। नडादित्वात् फक्। अमुष्य पुत्रस्य भावः—आमुष्यपुत्रिका । मनोज्ञादित्वाद् वुञ् । तथा आमुष्यकुलिकेति। ॐदेवानां प्रिय(३)इत्यत्र च षष्ठ्या अलुग् वक्तव्यःॐ। देवानांप्रियः। ॐशेपपुच्छलाङ्गूलेषु शुनः सञ्ज्ञायां षष्ठ्या अलुग्वक्तव्यःॐ। शुनःशेपः शुनःपुच्छः शुनोलाङ्गूलः । ॐदिवश्च दासे षष्ठ्या अलुग्वक्तव्यःॐ। दिवोदासाय गायति ॥

---

नेन्सिद्ध—इन् प्रत्ययान्त शब्द, सिद्ध शब्द तथा बध्न धातु के परे रहने पर सप्तमी का अलुक् नहीं होता है।

स्थे च—स्थ-शब्द के उत्तरपदस्थानीय होने पर सप्तमी का अलुक् नहीं होता है, यदि प्रयोग भाषाविषयक ( अर्थात् लौकिक प्रयोग ) हो।

षष्ठ्याः—आक्रोश के समुदायगम्य होने पर उत्तरपद के परे षष्ठी का लुक् नहीं होता है।

षष्ठीप्रकरणे—युक्तिशब्द के उत्तरपद होने पर वाक् शब्द से विहित, दण्ड शब्द के उत्तर-पदत्व में दिक् शब्द से तथा हर शब्द के उत्तरपदत्व में पश्यत् शब्द से विहित षष्ठी के अलुक् का प्रतिपादन कर्त्तव्य है।

आमुष्यायणा—आमुष्यायण, आमुष्यपुत्रिका तथा आमुष्यकुलिका शब्दों की सिद्धि के लिए भी अदस्शब्द से विहित षष्ठी के अलुक् का प्रतिपादन करना चाहिए।

देवानाम्—'देवानाम्प्रिय' शब्द की सिद्धि के लिए भी देवशब्दविहित षष्ठीबहुवचन के अलुक् का व्याख्यान करना चाहिए।

शेपपुच्छ—शेप, पुच्छ तथा लाङ्गूल शब्दों के उत्तरपदस्थानापन्न होने पर पूर्वपदस्थानीय श्वन् शब्द से विहित षष्ठी के अलुक् का भी प्रतिपादन करना चाहिए यदि समुदाय संज्ञावाचक हो।

दिवश्च—दास शब्द के उत्तरपदस्थानीय होने पर दिव् शब्द विहित षष्ठी के अलुक् का भी प्रतिपादन करना चाहिए।

---

( १ ) कैयटस्तु तत्र साधुरिति यदित्याह, तदर्थदृष्ट्या नातीव मनोरमम् इति वृत्तावुपेक्षितम्। ( श्रीना० )

( २ ) स्थण्डिलवर्त्तीत्यधिकं पुस्तकान्तरे ।

( ३ ) लोकेपि यदृच्छायेवानुसरति कर्त्तव्याऽकर्त्तव्यविवेचनमकृत्वैव अत एव मूर्खः स प्रियो भवति । अतो देवानामपि तथाविध एव मूर्खो जनः प्रिय इति स्पष्टम् । ( श्रीना० )

## पुत्रेऽन्यतरस्याम् ॥ २२ ॥

पुत्रशब्द उत्तरपदे आक्रोशे गम्यमानेऽन्यतरस्यां षष्ठ्या अलुग्भवति। दास्याः पुत्रः दासीपुत्रः। वृषल्याः पुत्रः—वृषलीपुत्रः। आक्रोश इत्येव—ब्राह्मणीपुत्रः॥

## ऋतो विद्यायोनिसम्बन्धेभ्यः ॥ २३ ॥

ऋकारान्तेभ्यो विद्यासम्बन्धवाचिभ्यो योनिसम्बन्धवाचिभ्यश्चोत्तरस्याः षष्ठ्या अलुग्भवति होतुरन्तेवासी होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः। ऋत इति किम्, आचार्यपुत्रः मातुलपुत्रः। विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्। विद्यायोनिसम्बन्धवाचिन्येवोत्तरपदे यथा स्यादन्यत्र मा भूत्–होतृधनम्, पितृधनम्, होतृगृहम्, पितृगृहम्॥

## विभाषा स्वसृपत्योः ॥ २४ ॥

स्वसृ, पति इत्येतयोरुत्तरपदयोर्ऋकारान्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यो विभाषाऽलुग्भवति। मातुःष्वसा, मातुःस्वसा, मातृष्वसा। पितुःष्वसा, पितुःस्वसा, पितृष्वसा। यदा लुक् तदा "मातृपितृभ्यां स्वसा" इति नित्यं षत्वम्, यदा त्वलुक् तदा "मातुःपितुर्भ्यामन्यतरस्याम्" इति विकल्पेन षत्वम्। दुहितुः पतिः दुहितृपतिः। ननान्दुः पतिः ननान्दृपतिः॥

## आनङ्(१)ऋतो द्वन्द्वे ॥ २५ ॥

ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति। होतापोतारौ। नेष्टोद्गातारौ। प्रशास्ताप्रतिहर्त्तारौ। योनिसम्बन्धेभ्यः—मातापितरौ। याताननान्दरौ। नकारोच्चारणं रपरत्वनिवृत्त्यर्थम्। ऋत इति किम्? पितृपितामहौ। पुत्र इत्यनुवर्त्तते, ऋत इति च। तेन पुत्रशब्देऽप्युत्तरपदे ऋकारान्तस्यादेशो भवति–पितापुत्रौ। मातापुत्रौ॥

## देवताद्वन्द्वे च ॥ २६ ॥

देवतावाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति। इन्द्रावरुणौ। इन्द्रासोमौ। इन्द्राबृहस्पती। द्वन्द्व इति वर्त्तमाने पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यार्थम्। अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्व इति निपात्यते। तत्र ये लोकप्रसिद्धसाहचर्या वेदे च सहभावेन ये निर्दिष्टास्तेषामिह ग्रहणं भवति। तेन ब्रह्मप्रजापती, शिववैश्रवणावित्येवमादौ न भवति। ॐउभयत्र वायोः प्रतिषेधो वक्तव्यःॐ। अग्निवायू। वाय्वग्नी॥

---

पुत्रे—पुत्र शब्द के उत्तरपदत्व में आक्रोश के समासगम्य होनेपर पूर्वपदविहित षष्ठी का विकल्प से लुक् नहीं होता है।

ऋतो—उत्तरपद के परे ऋकारान्त शब्दों से, विद्याकृतसम्बन्धवाचक तथा योनिकृतसम्बन्धवाचक शब्दों से विहित षष्ठी का लुक् नहीं होता है।

विभाषा—उत्तरपद के स्थान में स्वसृ तथा पतिशब्दों के रहने पर ऋकारान्त, विद्यासम्बन्धवाचक तथा योनिसम्बन्धवाचक शब्दों से विहित षष्ठी का लुक् नहीं होता है।

आनङ्—ऋकारान्त शब्दों में, विद्यासम्बन्धवाचक शब्दों में तथा योनिसम्बन्धवाचक शब्दो में यदि द्वन्द्व समास होता है तो पूर्वपद को 'आनङ्' आदेश हो जाता है।

देवताद्वन्द्वे—देवतावाचक शब्दों में द्वन्द्वसमास के विधान होने पर भी पूर्वपद को 'आनङ्' आदेश हो जाता है।

उभयत्र—परन्तु यदि देवताद्वन्द्व में पूर्वपद अथवा उत्तरपद के रूप में वायु शब्द का प्रयोग हुआ हो तो पूर्वपद को 'आनङ्' आदेश नहीं होता है—ऐसा व्याख्यान करना चाहिए।

---

(१) ङित्वात्सर्वादेशत्वबाधात् अलोन्त्यस्यादेशः। (श्रीना०)

## ईदग्नेः सोमवरुणयोः ॥ २७ ॥

सोम, वरुण इत्येतयोर्देवताद्वन्द्वेऽग्नेरीकारादेशो भवति । अग्नीषोमौ । अग्नीवरुणौ । "अग्ने स्तुत्स्तोमसोमाः" इति षत्वम् ॥

## इद् वृद्धौ ॥ २८ ॥

कृतवृद्धावुत्तरपदे देवताद्वन्द्वेऽग्नेरिकारादेशो(१) भवति । आग्निवारुणीमनड्वाहीमालभेत । आग्निमारुतं कर्म्म क्रियते । अग्नीवरुणौ देवते अस्य । अग्नामारुतौ देवते अस्येति तद्धितः । "देवताद्वन्द्वे च" इत्युभयपदवृद्धौ कृतायामानङमीत्वं च बाधितुमिकारः क्रियते । वृद्धाविति किम् ? आग्नेन्द्रः । "नेन्द्रस्य परस्य" इत्युत्तरपदवृद्धिः प्रतिषिध्यते ॥ ❀इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः❀ । आग्नावैष्णवं चरुं निर्वपेत् ॥

## दिवो द्यावा ॥ २९ ॥

दिवित्येतस्य द्यावा(२) इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । द्यावाक्षामा । द्यावाभूमी ॥

## दिवसश्च पृथिव्याम् ॥ ३० ॥

पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवो दिवसित्ययमादेशो भवति चकाराद् द्यावा च । दिवस्पृथिव्यौ । द्यावापृथिव्यौ(३) । अकारोच्चारणं सकारस्य विकाराभावप्रतिपत्त्यर्थम् । तेन रुत्वादीनि न भवन्ति । कथं द्यावा चिदस्मै पृथिवी नमेते इति ? कर्त्तव्योऽत्र यत्नः(४) ॥

## उषासोषसः ॥ ३१ ॥

उषस उषासा इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । उषासासूर्यम् । उषासानक्ता ॥

## मातरपितरावुदीचाम् ॥ ३२ ॥

---

ईदग्नेः—सोमशब्द के साथ तथा वरुणशब्द के साथ देवताद्वन्द्व के विधान होने पर पूर्वपदस्थानापन्न अग्नि शब्द के स्थान में ईकार अन्तादेश हो जाता है ।

इद्—यदि देवताद्वन्द्व में उत्तरपद कृतवृद्धिकार्य हो तो पूर्वपदस्थानापन्न अग्नि शब्द के स्थान में इत् अन्तादेश हो जाता है ।

इद्वृद्धौ—कृतवृद्धिकार्य उत्तरपद के रूप में कृतवृद्धि विष्णु शब्द के प्रयुक्त होने पर पूर्वपदस्थानीय अग्नि शब्द के स्थान में सूत्र-प्राप्त इत् आदेश का प्रतिषेध समझना चाहिए ।

दिवो—देवताद्वन्द्व में उत्तरपद के परे दिव् शब्द के स्थान में द्यावा आदेश हो जाता है ।

दिवसश्च—पृथिवीशब्द के उत्तरपदत्व में देवताद्वन्द्वघटक पूर्वपद के रूप में प्रयुज्यमान दिव् शब्द के स्थान में दिवस् आदेश हो जाता है ।

उषासोषसः—देवताद्वन्द्व में उत्तरपद के परे पूर्वपदस्थानीय उषस् शब्द के स्थान में उषासा आदेश हो जाता है ।

मातर—उदीच्य आचार्यों के मत में मातृपितृ शब्दों के द्वन्द्व में पूर्वपदस्थानीय मातृशब्द के स्थान में अरङ् आदेश हो जाता है ।

---

(१) अत्र अलोन्त्यस्येत्युपतिष्ठते । (श्रीना०)
(२) अनेकाल्त्वात् सर्वादेशः (श्रीना०)
(३) द्यौश्च पृथिवी च द्यावापृथिव्यौ इत्यधिकं पुस्तकान्तरे ।
(४) छान्दसत्वेन निर्वाहः कार्य इत्यर्थः (श्रीना०)

मातरपितरावित्युदीचामाचार्याणां मतेनारङादेशो मातृशब्दस्य निपात्यते। मातरपितरौ। उदीचामिति किम्? मातापितरौ(१)॥

## पितरामातरा च च्छन्दसि ॥ ३३ ॥

पितरामातरा इति छन्दसि निपात्यते। आ मा गन्तां पितरामातरा च। पूर्वपदस्य अरङादेशो निपात्यते। उत्तरपदे तु "सुपां सुलुक्" इति आकारादेशः। तत्र "ऋतो ङिसर्वनामस्थानयोः" इति गुणः। छन्दसीति किम्? मातापितरौ॥

## स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ३४ ॥

भाषितः पुमान् येन समानायामाकृतावेकस्मिन् प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः, तदेतदेवं कथं भवति? भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते, तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः। ऊङोऽभावोऽनूङ् भाषितपुंस्कादनूङ् यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ् स्त्रीशब्दः। बहुव्रीहिरयम्, अलुग् निपातनात् पञ्चम्याः, तस्य भाषितपुंस्कादनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति, समानाधिकरण उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते। दर्शनीयभार्यः। श्लक्ष्णचूडः। दीर्घजङ्घः। स्त्रिया इति किम्? ग्रामणि ब्राह्मणकुलं दृष्टिरस्य, ग्रामणिदृष्टिः। भाषितपुंस्कादिति किम्? खट्वाभार्यः। समानायामाकृताविति किम्? द्रोणीभार्यः(२)। कथं गर्भिभार्यः(३)। प्रसूतभार्यः। प्रजातभार्य इति? कर्त्तव्योऽत्र यत्नः। अनूङ् इति किम्? ब्रह्मबन्धूभार्यः। समानाधिकरण इति किम्? कल्याण्या माता-कल्याणीमाता। स्त्रियामिति किम्? कल्याणी प्रधानमेषां कल्याणीप्रधाना इमे। अपूरणीति किम्? कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः। कल्याणीदशमाः। प्रधानपूरणीग्रहणं कर्त्तव्यमिह मा भूत्, कल्याणपञ्चमीकः पक्ष इति। अप्पूरणीप्रमाण्योरित्यत्रापि प्रधानपूरणीग्रहणमेवेत्यप्प्रत्ययो न भवति। अप्रियादिष्विति किम्? कल्याणीप्रियः। प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्तिः। सचिवा। अम्बा। कान्ता। क्षान्ता। समा। चपला। दुहिता। वामा। प्रियादिः। दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धमिति समाधेयम्॥

## तसिलादिष्वाकृत्वसुचः ॥ ३५ ॥

पञ्चम्यास्तसिलित्यतः प्रभृति संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति प्रागे-

---

पितरा—छन्दोविषय प्रयोग में 'पितरामातरा' शब्द का निपातन होता है।

स्त्रियाः—पूरणी-प्रियादिभिन्न समानाधिकरण स्त्रीलिङ्ग उत्तरपद के परे रहते भाषितपुंस्क ऊङ्प्रत्ययान्तभिन्न स्त्रीलिङ्ग शब्द का पुंल्लिङ्गवत् रूप हो जाता है।

तसिलादिषु—तसिल् प्रत्यय से लेकर कृत्वसुच्प्रत्यय तक जितने प्रत्ययों का विधान किया गया है उन प्रत्ययों के परे रहते भाषितपुंस्क ऊङ्प्रत्ययान्तभिन्न स्त्रीलिङ्ग शब्द का पुंल्लिङ्गवत् रूप हो जाता है।

---

(१) 'आनङ् ऋतो द्वन्द्वे' इत्यानङादेशः।

(२) प्रवृत्तिनिमित्तपदेन द्रोणशब्दस्य पुंसि स्त्रियां च वर्त्तमानत्वम् परिमाणविशेषे पुंसि द्रोणशब्दः गवादन्यां च (गोभक्षणस्थाने च) स्त्रियां वर्त्तते इति भावः।

(३) समानायामाकृतौ यद्भाषितपुंस्कमित्यर्थे हि गर्भिभार्य इत्यादौ न प्राप्नोति, भिन्नास्वाकृतिष्वेव गर्भिण्यादिशब्दानां भाषितपुंस्कत्वात्। तथा हि अनवयवभूतगर्भसम्बन्धं प्रवृत्तिनिमित्तमुपादाय स्त्रियां गर्भिणीशब्दः प्रवर्त्तते, पुंसि तु व्रीहिरूपार्थे अवयवभूतगर्भसम्बन्धम् इति समानाकृतिरभावः। प्रसूतप्रजातशब्दौ च स्त्रियां वर्त्तमानौ गर्भविमोचनं प्रवृत्तिनिमित्तमाश्रयतः, पुंसि तु गर्भाधानमिति समानाकृतिरभाव इति कैयटन्यासहरदत्तादयः। तदेतद्विवेचनीयम्। (श्रीना०)

तस्माद् ये प्रत्ययास्तेषु भाषितपुंस्कादनूङ्स्त्रियाः पुंवद्भवति। तस्याः शालायाः ततः। तस्यां तत्र। यस्या यतः। यस्यां यत्र। तसिलादिषु परिगणनं कर्त्तव्यम्–त्रतसौ। तरप्तमपौ। चरट्जातीयरौ। कल्पब्देश्यदेशीयरः। रूपप्पाशपौ। थम्थालौ, दार्हिलौ। तिल्तातिलौ। ॐशसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यःॐ। बह्वीभ्यो देहि, बहुशो देहि। अल्पाभ्यो देहि, अल्पशो देहि। ॐत्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यःॐ। पट्व्या भावः, पटुत्वम्। पटुता। गुणवचनस्येति किम्? कठ्या भावः, कठीत्वं, कठीता॥ ॐभस्याढे तद्धिते पुंवद्भावो वक्तव्यःॐ। हस्तिनीनां समूहो, हास्तिकम्। अढ इति किम्? श्यैनेयः। रौहिणेयः। कथमग्नायी देवताऽस्य आग्नेयः स्थालीपाक इति? कर्त्तव्योऽत्र यत्नः। ठक्छ-सोश्च पुंवद्भावो वक्तव्यःॐ। भवत्याश्छात्रा भावत्काः। भवदीयाः॥

## क्यङ्मानिनोश्च॥ ३६॥

क्यङि परतो मानिनि च स्त्रिया भाषितपुंस्कादनूङ् पुंवद्भवति। एनी, एतायते। श्येनी, श्येतायते। मानिनि–दर्शनीयमानी अयमस्याः। दर्शनीयमानिनीयमस्याः। मानिनो ग्रहणमस्यर्थमसमानाधिकरणार्थं च। इह तु दर्शनीयामात्मानं मन्यते दर्शनीयमानिनीति पूर्वेणैव सिद्धम्॥

## न कोपधायाः॥ ३७॥

कोपधायाः स्त्रियाः पुंवद्भावो न भवति। पाचिकाभार्यः। कारिकाभार्यः। वृजिकाभार्यः। मद्रिकाभार्यः। मद्रिकाकल्पा। मद्रिकायते। वृजिकायते। मद्रिकामानिनी। वृजिकामानिनी। विलेपिकाया धर्म्यं वैलेपिकम्। ॐकोपधप्रतिषेधे–तद्धितवुग्रहणं कर्तव्यम्ॐ। इह मा भूत्, पाकभार्यो भेकभार्य इति॥

## संज्ञापूरण्योश्च॥ ३८॥

संज्ञायाः पूरण्याश्च स्त्रियाः पुंवद्भावो न भवति। दत्ताभार्यः। गुप्ताभार्यः। दत्तापाशा। गुप्तापाशा। दत्तायते। गुप्तायते। दत्तामानिनी। गुप्तामानिनी पूरण्याः–पञ्चमीभार्यः।

---

शसि—शस् प्रत्यय के परे रहते बह्वर्थक तथा अल्पार्थक स्त्रीलिङ्ग शब्दों का भी पुंल्लिङ्गवत् रूप होता है—ऐसा व्याख्यान करना चाहिए।

त्वतलोः—गुणवचन स्त्रीलिङ्ग शब्द का भी पुंल्लिङ्गवत् रूप समझना चाहिए यदि उससे पर में त्व अथवा तल् प्रत्यय हो।

भस्याढे—ढप्रत्ययभिन्न तद्धितप्रत्ययों के परे रहने पर भसंज्ञक स्त्रीलिङ्ग शब्द का भी पुंवत् रूप होता है—यह समझना चाहिए।

ठक्—ठक् तथा छस् प्रत्ययों के परे रहने पर भी स्त्रीलिङ्ग शब्द का पुंवत् रूप समझना चाहिए।

क्यङ्—क्यङ् तथा मानिन् प्रत्ययों के परे भी भाषितपुंस्क ऊङ्प्रत्ययान्तभिन्न स्त्रीलिङ्ग शब्द का पुंवत् रूप हो जाता है।

न कोपधायाः—ककारोपध भाषित पुंस्क स्त्रीलिङ्ग शब्द का समानाधिकरण स्त्रीलिङ्ग उत्तरपद के परे रहने पर भी पुंवत् रूप नहीं होता है।

कोपध—ककारोपध के पुंवत्व का जो प्रतिषेध किया गया है वहाँ ककारोपध शब्द से तद्धित-प्रत्यय सम्बन्धी ककार तथा वुप्रत्ययसम्बन्धी ककार जिन शब्दों की उपधा में होगा उन्हीं शब्दों का ग्रहण समझना चाहिए।

संज्ञा—संज्ञावाचक शब्द तथा पूरणी (=पूरणप्रत्ययान्त स्त्रीलिङ्ग) शब्दों का भी पुंवत् रूप नहीं होता है।

दशमीभार्यः। पञ्चमीपाशा। दशमीपाशा। पञ्चमीयते। दशमीयते। पञ्चमीमानिनी। दशमीमानिनी।

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥ ३९ ॥

नेति वर्त्तते। वृद्धेर्निमित्तं यस्मिन् स वृद्धिनिमित्तस्तद्धितः स यदि रक्तेऽर्थे विकारे च न विहितः, तदन्तस्य स्त्रीशब्दस्य न पुंवद्भवति। स्रौघ्नीभार्यः। माथुरीभार्यः। स्रौघ्नीपाशा। माथुरीपाशा। स्रौघ्नीयते। माथुरीयते। स्रौघ्नीमानिनी। माथुरीमानिनी। वृद्धिनिमित्तस्येति किम्? मध्यमभार्यः। तद्धितस्येति किम्? काण्डलावभार्यः। बहुव्रीहिपरिग्रहः किमर्थः? तावद्भार्यः। यावद्भार्यः। अरक्तविकार इति किम्? कषायेण रक्ता काषायी, काषायी बृहतिका यस्य स काषायबृहतिकः। लोहस्य विकारो लौहा, लौही ईषा यस्य रथस्य स लौहेषः(१) ॥

## स्वाङ्गाच्चेतोऽमानिनि (२) ॥ ४० ॥

स्वाङ्गादुत्तरो य ईकारस्तदन्तायाः स्त्रिया न पुंवद्भवति अमानिनि परतः। दीर्घकेशीभार्यः। दीर्घकेशीपाशा। श्लक्ष्णकेशीपाशा। दीर्घकेशीयते। श्लक्ष्णकेशीयते। स्वाङ्गादिति किम्? पटुभार्यः। ईत इति किम्? अकेशभार्यः। अमानिनीति किम्? दीर्घकेशमानिनी ॥

## जातेश्च ॥ ४१ ॥

जातेश्च स्त्रिया न पुंवद्भवति अमानिनि परतः। कठीभार्यः। बह्वृचीभार्यः। कठीपाशा। बह्वृचीपाशाः। कठीयते। बह्वृचीयते। अमानिनीत्येव। कठमानिनि। बह्वृचमानिनी ॥ अयं प्रतिषेध औपसंख्यानिकस्य पुंवद्भावस्य नेष्यते ॥ हस्तिनीनां समूहः, हास्तिकम् ॥

## पुंवत् कर्मधारयजातीयदेशीयेषु ॥ ४२ ॥

कर्मधारये समासे जातीयदेशीय इत्येतयोश्च प्रत्यययोर्भाषितपुंस्कादनूङ् स्त्रियाः पुंवद्भवति। प्रतिषेधार्थोऽयमारम्भः। न कोपधायाः इत्युक्तम्, तत्रापि भवति—पाचकवृन्दारिका। पाचकजातीया। पाचकदेशीया। "संज्ञापूरण्योश्च" इत्युक्तं तत्रापि भवति—दत्तवृन्दारिका। दत्तजातीया। दत्तदेशीया। पूरण्याः—पञ्चमवृन्दारिका। पञ्चमजातीया। पञ्चमदेशीया। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इत्युक्तं तत्रापि भवति—स्रौघ्नजातीया। स्रौघ्नदे-

---

वृद्धि—रक्तार्थक तथा विकारार्थक तद्धितप्रत्ययों से भिन्न वृद्धिनिमित्तभूत तद्धितप्रत्यय से विशिष्ट स्त्रीलिङ्ग शब्द का भी समानाधिकरण स्त्रीलिङ्ग उत्तरपद के परे पुंवत् रूप नहीं होता है।

स्वाङ्गात्—मानिन्भिन्न उत्तरपद के परे स्वाङ्गवाचक ईकारान्त स्त्रीलिङ्ग शब्द का पुंवत् रूप हो जाता है।

जातेश्च—जातिवाचक स्त्रीलिङ्ग शब्दों का भी पुंवत् रूप नहीं होता है।

पुंवत्—कर्मधारयसमास में उत्तरपद के परे तथा जातीय एवम् देशीय प्रत्ययों के परे ऊङ्प्रत्ययान्तभिन्न भाषितपुंस्क स्त्रीलिङ्ग शब्द का पुंवत् रूप हो जाता है।

---

(१) खादिरेष इति पुस्तकान्तरेऽधिकम्।

(२) अत्र "स्वाङ्गाच्चेतोऽमानिनि" इति भाष्यवार्त्तिकम्। अत एव कैयटेनापि व्याख्यातम् 'स्वाङ्गाच्चेतः' इत्येतावत्सूत्रमिति कृत्वा वार्तिकारम्भः। अत एव च अमानिनीति वार्त्तिके दर्शनात् सूत्रे प्रक्षिप्तम् इति पदमञ्जर्यामपि। परन्तु कैयटोक्तेरेतत् प्रतीयते यदत्र सूत्रपाठे तदानीमपि अमानिनिग्रहणसत्त्वाऽसत्त्वे मतभेद आसीदेव। अत एव प्रक्रियाकौमुद्यामपि सूत्रे एव अमानिनीति पठितम्। नव्यैस्तु त्यक्तम्। (श्रीना०)

शीया। स्वाङ्गाच्चेतोऽमानिनीत्युक्तम्–तत्रापि भवति–श्लक्ष्णमुखवृन्दारिका। श्लक्ष्णमुखजातीया। श्लक्ष्णमुखदेशीया। जातेश्चेत्युक्तं तत्रापि भवति–कठवृन्दारिका। कठजातीया। कठदेशीया। भाषितपुंस्कादित्येव, खट्वावृन्दारिका। अनूङित्येव, ब्रह्मबन्धूवृन्दारिका। ॐकुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यःॐ। कुक्कुट्या अण्डं, कुक्कुटाण्डम्। मृग्याः पदं, मृगपदम्। मृग्याः क्षीरं, मृगक्षीरम्। काक्याः शावः, काकशावः। न वाऽस्त्रीपूर्वपदस्य विवक्षितत्वात्। स्त्रीत्यनेन विना पूर्वपदार्थोऽत्र जातिः सामान्येन विवक्षितः। पुंवद्भावाद् ह्रस्वत्वं खिद्घादिकेषु भवति विप्रतिषेधेन। खित्–कालिंमन्या। हरिणिंमन्या। घादिपट्वितरा। पट्वितमा। पट्विरूपा। पट्विकल्पा। क–पट्विका। मृद्विका। इडेडबिड् दरद् पृथु उशिजित्येते जनपदशब्दाः क्षत्रियवचनाः। तत्र तद्राजप्रत्ययस्य स्त्रियामतश्चेति लुकि कृते इडबिडवृन्दारिकेति विगृह्य समासः क्रियते। ततः पुंवद्भावेन ऐडबिडादयः पुंशब्दाः क्रियन्ते। ऐडबिडवृन्दारिका। औशिजवृन्दारिका(१)॥

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ ४३ ॥

घ रूप कल्प चेलट् ब्रुव गोत्र मत हत इत्येतेषु भाषितपुंस्कात्परो यो ङीप्रत्ययस्तदन्तस्यानेकाचो ह्रस्वो भवति। घ–ब्राह्मणितरा। ब्राह्मणितमा। रूप–ब्राह्मणिरूपा। ब्राह्मणिकल्पा। चेलट्–ब्राह्मणिचेली। ब्रुव–ब्राह्मणिब्रुवा। गोत्र–ब्राह्मणिगोत्रा। मत–ब्राह्मणिमता। हत–ब्राह्मणिहता। घरूपकल्पाः प्रत्ययाश्चेलडादीन्युत्तरपदानि। ब्रुव इति ब्रवीतीति ब्रुवः पचाद्यचि वच्यादेशो गुणश्च निपातनान्न भवति। ङ्य इति किम्? दत्तातरा। गुप्तातरा। अनेकाच इति किम्? नद्याः शेषस्यान्यतरस्यामिति वक्ष्यति। भाषितपुंस्कादित्येव। आमलकीतरा। कुवलीतरा॥

## नद्याः शेषस्यान्यतरस्याम् ॥ ४४ ॥

नद्याः शेषस्य घादिषु परतो ह्रस्वो भवति अन्यतरस्याम्। कश्च शेषः? अङी च या नदी, ङ्यन्तं च यदेकाच्। ब्रह्मबन्धुतरा। ब्रह्मबन्धूतरा। वीरबन्धुतरा। वीरबन्धूतरा। स्त्रितरा। स्त्रीतरा। स्त्रितमा। स्त्रीतमा। ॐकृन्नद्याः प्रतिषेधो वक्तव्यःॐ। लक्ष्मीतरा। तन्त्रीतरा॥

## उगितश्च ॥ ४५ ॥

उगितश्च परस्या नद्या घादिषु अन्यतरस्यां ह्रस्वो भवति। श्रेयसितरा। श्रेयसीतरा। श्रेयस्तरा। विदुषितरा। विदुषीतरा। विद्वत्तरा। पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः। प्रकर्षयोगात् प्राक् स्त्रीत्वस्याविवक्षितत्वाद्वा सिद्धम्॥

---

कुक्कुट्यादीनाम्—अण्ड आदि शब्दों के परे रहते कुक्कुटी आदि शब्दों का पुंवद्भाव होता है—ऐसा व्याख्यान करना चाहिए।

घरूप—घ (तरप्-तमप्), रूपप्, कल्पप्, चेलट्, ब्रुव, गोत्र, मत तथा हत शब्दों के परे रहते भाषितपुंस्क ङीप्रत्ययान्त अनेकाच् स्त्रीलिङ्ग शब्दों को पुंवद्भाव हो जाता है।

नद्याः—घ आदि शब्दों (प्रत्ययों) के परे रहने पर पूर्वसूत्रलक्ष्यभिन्न नदीसंज्ञक शब्दों को विकल्प में ह्रस्वादेश हो जाता है।

कृन्नद्याः—कृत्प्रत्ययान्त शब्द यदि नदीसंज्ञक की प्रकृति हो तो उसे घ आदि प्रत्ययों के परे उसके स्थान में ह्रस्वादेश नहीं होता है—ऐसा व्याख्यान करना चाहिए।

उगितश्च—उगित् प्रकृतिक नदी के स्थान में भी विकल्प से ह्रस्वादेश होता है।

---

(१) दारदवृन्दारिका। पार्थवृन्दारिकेत्यधिकं पुस्तकान्तरे।

## आन्महतः समानाधिकरणजातीययोः ॥ ४६ ॥

समानाधिकरण उत्तरपदे जातीये च प्रत्यये परतो महत आकारादेशो भवति। महादेवः। महाब्राह्मणः। महाबलः। जातीये-महाजातीयः। समानाधिकरणजातीययोरिति किम्? महतः पुत्रो महत्पुत्रः। लाक्षणिकत्वादेवात्र न भविष्यतीति चेद् बहुव्रीहावपि न स्याद् महाबाहुरिति। तदर्थं समानाधिकरणग्रहणं वक्तव्यम्। अमहान् महान् संपन्नो महद्भूतश्चन्द्रमा इत्यत्र गौणत्वान्महदर्थस्य न भवत्यात्वम्। ॐमहदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं चासमानाधिकरणार्थम्ॐ। महत्या घासः। महाघासः। महत्याः करः, महाकरः। महत्या विशिष्टः, महाविशिष्टः। ॐअष्टनः कपाले हविष्युपसंख्यानम्ॐ। अष्टाकपाले चरुं निर्वपेत्। हविषीति किम्? अष्टकपालं ब्राह्मणस्य। ॐगवि च युक्तेऽष्टन उपसंख्यानं कर्त्तव्यम्ॐ। अष्टागवेन शकटेन। युक्त इति किम्? अष्टगवं ब्राह्मणस्य। तपरकरणं विस्पष्टार्थम् ॥

## द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४७ ॥

द्वि अष्टन् इत्येतयोराकारादेशो भवति संख्यायामुत्तरपदे अबहुव्रीह्यशीत्योः। द्वादश। द्वाविंशतिः। द्वात्रिंशत्। अष्टादश। अष्टाविंशतिः। अष्टात्रिंशत्। द्व्यष्टन इति किम्? पञ्चदश। संख्यायामिति किम्? द्वैमातुरः। आष्टमातुरः। अबहुव्रीह्यशीत्योरिति किम्? द्वित्राः(१) त्रिदशाः। द्व्यशीतिः। ॐप्राक् शतादिति वक्तव्यम्ॐ। इह मा भूत्-द्विशतम्। द्विसहस्रम्। अष्टशतम्। अष्टसहस्रम् ॥

## त्रेस्त्रयः ॥ ४८ ॥

त्रि इत्येतस्य त्रयसित्ययमादेशो भवति संख्यायामबहुव्रीह्यशीत्योः। त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्। संख्यायामित्येव, त्रैमातुरः। अबहुव्रीह्यशीत्योरित्येव। त्रिदशाः। त्र्यशीतिः। प्राक् शतादित्येव। त्रिशतम्। त्रिसहस्रम् ॥

---

आन्महतः—समानाधिकरण उत्तरपद के परे तथा जातीयर प्रत्यय के परे महत् को आकार अन्तादेश हो जाता है।

महदात्वे—असमानाधिकरण उत्तरपदों में घास, कर तथा विशिष्ट शब्दों के परे भी महत् शब्द के आत्वादेश तथा पुंवद्भाव का प्रतिपादन करना चाहिए।

अष्टनः—कपाल शब्द के उत्तरपदस्थानीय होने पर उसके परे अष्टन्-शब्द के आत्व का भी उपसंख्यान ( =प्रतिपादन ) करना चाहिए, यदि समुदाय हविर्वाचक हो।

गवि च—गोशब्द के परे रहते भी अष्टन् शब्द के आत्व का उपसंख्यान करना चाहिए, यदि समुदाय से 'युक्त' अर्थ गम्यमान हो।

द्व्यष्टनः—बहुव्रीहिभिन्न समास में अशीति शब्दात्मक उत्तरपद को छोड़कर संख्यावाचक उत्तरपद के परे द्वि तथा अष्टन् शब्दों को आत्व हो जाता है।

प्राक् शतात्—संख्यावाचक उत्तरपदों में शतसंख्या से न्यून संख्या के वाचक शब्दों का ही ग्रहण विवक्षित है।

त्रेस्त्रयः—बहुव्रीहिभिन्न समास में अशीतिशब्दभिन्न संख्यावाचक उत्तरपद के परे त्रि के स्थान में त्रयस् आदेश हो जाता है।

---

( १ ) द्वौ वा त्रयो वेत्यर्थे संख्याव्ययेति बहुव्रीहिः समासः ( श्रीना० )

## विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ४९ ॥

चत्वारिंशत् प्रभृतौ संख्यायामुत्तरपदे अबहुव्रीह्यशीत्योः सर्वेषां द्व्यष्टन् त्रि इत्येतेषां यदुक्तं तद्विभाषा भवति। द्विचत्वारिंशत्। द्वाचत्वारिंशत्। त्रिपञ्चाशत्। त्रयःपञ्चाशत्। अष्टपञ्चाशत्। अष्टापञ्चाशत्(१)। प्राक् शतादित्येव। द्विशतम्। अष्टशतम्। त्रिशतम्(२)॥

## हृदयस्य हृल्लेखयदण्लासेषु ॥ ५० ॥

हृदयस्य हृदित्ययमादेशो भवति लेख यत् अण् लास इत्येतेषु परतः। हृदयं लिखतीति, हृल्लेखः। यत्—हृदयस्य प्रियं, हृद्यम्। अण्—हृदयस्येदं, हार्दम्। लास—हृदयस्य लासो, हृल्लासः। लेख इत्यण्णन्तस्य ग्रहणमिष्यते। घञि तु हृदयस्य लेखो हृदयलेख एतदेव। लेखग्रहणं ज्ञापकमुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्ताग्रहणस्य॥

## वा शोकष्यञ्रोगेषु ॥ ५१ ॥

शोक ष्यञ् रोग इत्येतेषु परतो हृदयस्य वा हृदित्ययमादेशो भवति। हृच्छोकः। हृदयशोकः। ष्यञ्—सौहार्द्यम्। सौहृदय्यम्। ब्राह्मणादित्वात् ष्यञ्। हृदादेशपक्षे, हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेति उभयपदवृद्धिः। रोग—हृद्रोगः। हृदयरोगः। हृदयशब्देन समानार्थो हृत्शब्दः प्रकृत्यन्तरमस्ति, तेनैव सिद्धे विकल्पविधानं प्रपञ्चार्थम्॥

## पादस्य पदाज्यातिगोपहतेषु ॥ ५२ ॥

पादस्य पद इत्ययमादेशो भवति आजि आति ग उपहत इत्येतेषूत्तरपदेषु। पादाभ्यामजतीति पदाजिः, पादाभ्यामततीति पदातिः। अज्यतिभ्यां पादे चेत्यौणादिक इण्प्रत्ययः। तत्राजेर्वीभावो न भवत्यत एव निपातनात्। पादाभ्यां गच्छतीति पदगः। पादेनोपहतः, पदोपहतः। पादशब्दो वृषादित्वादाद्युदात्तस्तस्य स्थाने पदादेश उपदेश एवान्तोदात्तो निपात्यते, तेन पदोपहत इति तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वेनोदात्तत्वं भवति। पदाजिः, पदातिः, पदग इत्येतेषु कृत्स्वरेण समासस्यैवान्तोदात्तत्वम्॥

## पद्यत्यतदर्थे ॥ ५३ ॥

यत्प्रत्यये परतः पादस्य पदित्ययमादेशो भवत्यतदर्थे। पादौ विध्यन्ति, पद्याः

---

विभाषा—बहुव्रीहिभिन्न समास में अशीतिशब्दभिन्न चत्वारिंशत् आदि संख्यावाचक उत्तरपद के परे द्वि, अष्टन् तथा त्रि शब्द के स्थान पूर्वोक्त आदेश (द्वि, अष्टन् आत्व; त्रि त्रयस्) विकल्प से होते हैं।

हृदयस्य—लेख, यत्, अण् तथा लास शब्दों के परे हृदय शब्द के स्थान में हृत् आदेश हो जाता है।

वा शोक—शोक, ष्यञ् तथा रोग के परे रहने पर हृदय के स्थान में विकल्प से हृत् आदेश होता है।

पादस्य—आजि, आति, ग तथा उपहत शब्दों के परे रहने पर पाद शब्द के स्थान में पत् आदेश हो जाता है।

पद्यत्यतदर्थे—तादर्थ्यभिन्नार्थ में यत् प्रत्यय के परे रहते पाद शब्द के स्थान में पद् आदेश हो जाता है।

---

(१) "अष्टचत्वारिंशत् अष्टाचत्वारिंशत्। त्रिचत्वारिंशत्। त्रयश्चत्वारिंशत्। द्विपञ्चाशत्। द्वापञ्चाशत्" इत्यधिकः क्वचित् पाठः।

(२) सर्वेषां ग्रहणं त्रयाणामपि यथा स्यात् इत्यधिकमन्यस्मिन्पुस्तके।

शर्कराः। पद्याः कण्टकाः। अतदर्थं इति किम्? पादार्थमुदकं पाद्यम्। ॐपद्भावे इके चरतावुपसंख्यानम्ॐ। पादाभ्यां चरति, पदिकः। पर्पादिभ्यः ष्ठन्निति पादशब्दात् ष्ठन् प्रत्ययः। शरीरावयववचनस्य पादशब्दस्य ग्रहणमिह इष्यते। तेन "पणपादमाषशताद्यत्" इत्यत्र पदादेशो न भवति–द्विपाद्यम्, त्रिपाद्यम्॥

## हिमकाषिहतिषु च ॥ ५४ ॥

हिम, काषिन्, हति इत्येतेषु पादशब्दस्य पदित्ययमादेशो भवति। हिम–पद्धिमम्। काषिन्–अथ पत्काषिणो यान्ति। हति–पद्धतिः॥

## ऋचः शे ॥ ५५ ॥

ऋक्संवन्धिनः पादशब्दस्य शे परतः पदित्ययमादेशो भवति। पच्छो गायत्रीं शंसति। पादं पादं शंसतीति "संख्यैकवचनाच्च वीप्सायाम्" इति शस्प्रत्ययः। ऋच इति किम्? पादशः कार्षापणं ददातीति॥

## वा घोषमिश्रशब्देषु ॥ ५६ ॥

घोष, मिश्र, शब्द इत्येतेषु चोत्तरपदेषु पादस्य वा पदित्ययमादेशो भवति। पद्घोषः। पादघोषः। पन्मिश्रः। पादमिश्रः। पच्छब्दः। पादशब्दः। ॐनिष्के चेति वक्तव्यम्ॐ। पन्निष्कः। पादनिष्कः॥

## उदकस्योदः संज्ञायाम् ॥ ५७ ॥

उदकशब्दस्य संज्ञायां विषये उद इत्ययमादेशो भवति, उत्तरपदे परतः। उदमेघा नाम, यस्य औदमेघिः पुत्रः। उदवाहो नाम, यस्य औदवाहिः पुत्रः। संज्ञायामिति किम्? उदकगिरिः। ॐसंज्ञायामुत्तरपदस्य उदकशब्दस्य उदादेशो भवतीति वक्तव्यम्ॐ। लोहितोदः। नीलोदः। क्षीरोदः॥

## पेषंवासवाहनधिषु च ॥ ५८ ॥

पेषं, वास, वाहन, धि इत्येतेषु चोत्तरपदेषु उदकस्य उद इत्ययमादेशो भवति। उदपेषं पिनष्टि। "स्नेहने पिषः" इति णमुल्। वास–उदकस्य वासः उदवासः। वाहन–उदकस्य वाहनः उदवाहनः। धि–उदकं धीयतेऽस्मिन्निति उदधिः॥

---

पद्भावे—चरत्यर्थक इक के परे भी पाद शब्द के स्थान में पद् आदेश का प्रतिपादन करना चाहिए।

हिमकाषि—हिम, काषिन् तथा हति शब्दों के परे रहने पर भी पाद शब्द के स्थान में पत् आदेश हो जाता है।

ऋचः—ऋक्सम्बन्धी पाद शब्द के स्थान में पत् आदेश हो जाता है 'श' प्रत्यय के परे रहने पर।

वा घोष—घोष, मिश्र तथा शब्द शब्दों के परे रहने पर पाद शब्द के स्थान में विकल्प से पत् आदेश होता है।

निष्के—निष्क शब्द के परे भी पाद शब्द के स्थान में पत् आदेश का प्रतिपादन करना चाहिए।

उदकस्योदः—संज्ञाविषय में उत्तरपद के परे उदक शब्द के स्थान में उद आदेश हो जाता है।

संज्ञायाम्—संज्ञाविषयमें उत्तरपदस्थानीय उदक शब्द के स्थान में भी उद आदेश का विधान समझना चाहिए।

पेषंवास—पेषम्, वास, वाहन तथा धि शब्दों के परे भी उदक शब्द के स्थान में उद आदेश हो जाता है।

## एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ५९ ॥

उदकस्योद इति वर्तते। एकोऽसहायस्तुल्यजातीयेनानन्तरेण हलादिना, हल् आदिर्यस्योत्तरपदस्य तदेकहलादिस्तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्यतरस्यामुदकस्य उद इत्ययमादेशो भवति। उदकुम्भः। उदककुम्भः। उदपात्रम्। उदकपात्रम्। एकहलादाविति किम्? उदकस्थलम्। पूरयितव्य इति किम्? उदकपर्वतः।

## मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥ ६० ॥

मन्थ, ओदन, सक्तु, बिन्दु, वज्र, हार, वीवध, गाह इत्येतेषूत्तरपदेषूदकस्य उद इत्ययमादेशो भवति अन्यतरस्याम्। उदकेन मन्थः-उदमन्थः, उदकमन्थः। ओदन-उदकेनौदनः-उदौदनः, उदकौदनः। सक्तु-उदकेन सक्तुः-उदसक्तुः, उदकसक्तुः। बिन्दु-उदकस्य बिन्दुः-उदबिन्दुः, उदकबिन्दुः। वज्र-उदकस्य वज्रः-उदवज्रः, उदकवज्रः। भार-उदकं बिभर्तीति-उदभारः। उदकभारः। हार-उदकं हरतीति-उदहारः। उदकहारः। वीवधः-उदकस्य वीवधः-उदवीवधः। उदकवीवधः। गाह-उदकं गाहत इति, उदगाहः। उदकगाहः॥

## इको ह्रस्वोऽङ्यो गालवस्य ॥ ६१ ॥

इगन्तस्याङ्यन्तस्योत्तरपदे ह्रस्वो भवति गालवस्याचार्यस्य मतेनान्यतरस्याम्। ग्रामणिपुत्रः। ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्रः। ब्रह्मबन्धूपुत्रः। इक इति किम्? खट्वापादः। मालापादः। अङ्य इति किम्? गार्गीपुत्रः। वात्सीपुत्रः। गालवग्रहणं पूजार्थम्। अन्यतरस्यामिति हि वर्त्तते। व्यवस्थितविभाषा चेयम्। तेनेह न भवति-कारीषगन्धीपतिरिति। इयङुवङ्भाविनामव्ययानां च न भवति-श्रीकुलम्। भ्रूकुलम्। काण्डीभूतम्। वृषलीभूतम्। भ्रुकुंसादीनां तु भवत्येव-भ्रुकुंसः। भ्रुकुटिः। अपर आह-भ्रूकुंसादीनामकारो भवतीति वक्तव्यम्॥ भ्रकुंसः। भ्रकुटिः॥

## एक (१)तद्धिते च ॥ ६२ ॥

एकशब्दस्य तद्धिते उत्तरपदे ह्रस्वो भवति। एकस्या आगतमेकरूप्यम्। एकमयम्। एकस्या भाव एकत्वम्। एकता। उत्तरपदे-एकस्याः क्षीरम्-एकक्षीरम्। एकदुग्धम्। लिङ्गविशिष्टस्य ग्रहणमेकशब्दह्रस्वत्वं प्रयोजयति। अचा हि गृह्यमाणमत्र विशेष्यते, न पुनरजू गृह्यमाणेनेति॥

---

एकहलादौ—पूरयितव्यार्थक एकहलादि शब्द के उत्तरपद स्थानापन्न होने पर पूर्वपदस्थानीय उदक शब्द के स्थान में विकल्प से उद आदेश हो जाता है।

मन्थौदन—मन्थ, ओदन, सक्तु, विन्दु, वज्र, भार, हार, वीवध, और गाह शब्दों के परे उदक शब्द के स्थान में विकल्प से उद आदेश हो जाता है।

इको—ङीप्रत्ययान्तभिन्न इगन्तशब्द के स्थान में उत्तरपद के परे होने पर विकल्प से ह्रस्वादेश हो जाता है गालव आचार्य के मत में।

भ्रूकुंसादीनाम्—कुंस आदि उत्तरपद के परे रहने पर भ्रू शब्द के स्थान में अकारादेश का विधान करना चाहिए।

एक—तद्धित उत्तरपद के परे रहने पर एकशब्द के स्थान में (अन्त में) ह्रस्वादेश हो जाता है।

---

(१) एक इत्यविभक्तिको निर्देशः। तत्र समानाधिकरणे स्त्रियाः पुंवद्भावेनैव ह्रस्वरूपलाभे व्यधिकरणार्थमिदमिति भावः (श्रीना०)

## ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६३ ॥

ङ्यन्तस्यावन्तस्य च संज्ञाछन्दसोर्बहुलं ह्रस्वो भवति। ङ्यन्तस्य संज्ञायाम्-रेवतिपुत्रः, रोहिणिपुत्रः, भरणिपुत्रः। न च भवति-नान्दीकरः, नान्दीघोषः। नान्दीविशालः। ङ्यन्तस्य छन्दसि-कुमारिदारा, प्रदर्विदा। न च भवति-फाल्गुनीपौर्णमासी, जगतीछन्दः। आबन्तस्य संज्ञायाम्-शिलवहम्, शिलप्रस्थम्। न च भवति-लोमकागृहम्। लोमकाखण्डः। आबन्तस्य छन्दसि-अजक्षीरेण जुहोति, ऊर्णम्रदा पृथिवी विश्वधायसम्। न च भवति-ऊर्णासूत्रेण कवयो वयन्ति॥

## त्वे च ॥ ६४ ॥

त्वप्रत्यये परतो ङ्यापोर्बहुलं ह्रस्वो भवति। तदजाया भाव अजत्वम्। अजात्वम्। तद्रोहिण्या भावो रोहिणित्वम्। रोहिणीत्वम्। संज्ञायामसंभवाच्छन्दस्येवोदाहरणानि भवन्ति॥

## इष्टकेषीकामालानां चिततूलभारिषु ॥ ६५ ॥

इष्टकेषीकामालानां चित तूल भारिन् इत्येतेषूत्तरपदेषु यथासंख्यं ह्रस्वो भवति। इष्टकचितम्। इषीकतूलम्। मालभारिणी कन्या। इष्टकादिभ्यस्तदन्तस्यापि ग्रहणं भवति-पक्वेष्टकचितम्, मुञ्जेषीकतूलम्, उत्पलमालभारिणी कन्या॥

## खित्यनव्ययस्य ॥ ६६ ॥

खिदन्त उत्तरपदेऽनव्ययस्य ह्रस्वो भवति। कालिमन्या। हरिणिमन्या। मुमा ह्रस्वो न बाध्यते। अन्यथा हि ह्रस्वशासनमनर्थकं स्यात्। अनव्ययस्येति किम्? दोषामन्यमहः, दिवामन्या रात्रिः। अनव्ययस्येत्येतदेवं ज्ञापकमिह खिदन्तग्रहणस्य॥

## अरुर्द्विषदजन्तस्य मुम् ॥ ६७ ॥

अरुस्, द्विषत् इत्येतयोरजन्तानां च खिदन्त उत्तरपदे मुमागमो भवति अनव्ययस्य। अरुंतुदः। द्विषंतपः। अजन्तानाम्-कालिमन्या। अरुर्द्विषदजन्तस्येति किम्? विद्वन्मन्या। अनव्ययस्येत्येव—दोषामन्यमहः, दिवामन्या रात्रिः। अन्तग्रहणं किम्? कृताजन्तकार्यप्रतिपत्त्यर्थम्। अतो ह्रस्वे कृते मुम्भवति॥

## इच एकाचोऽम्प्रत्ययवच्च ॥ ६८ ॥

इजन्तस्य एकाचः खिदन्त उत्तरपदेऽमागमो भवति, अम्प्रत्ययवच्च = द्वितीयकवचनवच्च स भवति। अमिति हि द्विरावर्त्तते। गांमन्यः। स्त्रींमन्यः। स्त्रियंमन्यः। नर-

---

ङ्यापोः—संज्ञा तथा छन्दो-विषय प्रयोग में ङीप्रत्ययान्त तथा टाप्प्रत्ययान्त शब्दों के स्थान में बाहुल्येन ह्रस्वादेश हो जाता है।

त्वे च—त्व प्रत्यय के परे भी ङीप्रत्ययान्त तथा आप्प्रत्ययान्त शब्दों को बाहुल्येन ह्रस्व हो जाता है।

इष्टकेषीका—चित, तूल तथा भारिन् के उत्तरपदत्व में क्रमशः पूर्वपदस्थानीय इष्टका, इषीका तथा माला शब्दों को ह्रस्वादेश हो जाता है।

खित्यनव्ययस्य—खिदन्त उत्तरपद के परे अव्ययभिन्न शब्दों को ह्रस्वादेश हो जाता है।

अरुर्द्विषत्—खिदन्त उत्तरपद के परे अरुस्, द्विषत् तथा अजन्त शब्दों को मुम् (म्) का आगम हो जाता है।

इचः—खिदन्त उत्तरपद के परे इजन्त एकाच् शब्द को अम् का आगम हो जाता है और वह अमागम द्वितीयैकवचन अम् की तरह कार्यों का विषय हो जाता है।

श्मन्यः । श्रियंमन्यः । भ्रुवंमन्यः । अम्प्रत्ययवच्चेत्यतिदेशादात्वपूर्वसवर्णगुणेयङुवङादेशा भवन्ति । इच इति किम् ? स्वङ्मन्यः । एकाच इति किम् ? लेखाभ्रुंमन्यः । अथेह कथं भवितव्यम्-श्रियमात्मानं ब्राह्मणकुलं मन्यत इत्युपक्रम्य श्रिमन्यमिति भाष्ये स्थितम् । तत्रेदं भाष्यकारस्य दर्शनमत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्त्तते । यथा प्रष्ठादयः स्त्रियाम् । तत्र स्वमोर्नपुंसकादित्यमो लुग्भवति ॥

## वाचंयमपुरंदरौ च ॥ ६९ ॥

वाचंयम पुरंदर इत्येतौ निपात्येते । वाचंयम आस्ते । पुरं दारयतीति पुरंदरः ॥

## कारे सत्यागदस्य ॥ ७० ॥

कारशब्द उत्तरपदे सत्य, अगद इत्येतयोर्मुमागमो भवति । सत्यं करोतीति सत्यस्य वा कारः सत्यङ्कारः । एवमगदंकारः ॥ ॐअस्तुसत्यागदस्य कार इति वक्तव्यम्ॐ । अस्तुंकारः(१)॥ ॐभक्षस्य छन्दसि कारे मुम् वक्तव्यःॐ ॥ भक्षं करोतीति भक्षस्य वा कारः, भक्षंकारः । छन्दसीति किम् ? भक्षकारः । ॐधेनोर्भव्यायां मुम्वक्तव्यःॐ ॥ धेनुंभव्या ॥ ॐलोकस्य पृणे मुम्वक्तव्यःॐ ॥ लोकंपृणा । ॐइत्येऽनभ्यासस्य मुम्वक्तव्यः ॥ अनभ्यासमित्यः । ॐभ्राष्ट्राग्न्योरिन्धे मुम् वक्तव्यःॐ । भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥ ॐगिलेऽगिलस्य मुम् वक्तव्यःॐ । तिमिङ्गिलः । अगिलस्येति किम् ? गिलगिलः ॥ ॐगिलगिले चेति वक्तव्यम्ॐ ॥ तिमिङ्गिलगिलः ॥ ॐउष्णभद्रयोः करणे मुम् वक्तव्यःॐ ॥ उष्णंकरणम् ॥ भद्रंकरणम् । ॐसूतोग्रराजभोजमेरुभ्य इत्येतेभ्य उत्तरस्य दुहितृशब्दस्य पुत्रडादेशो वा वक्तव्यःॐ ॥ सूतपुत्री, सूतदुहिता । उग्रपुत्री, उग्रदुहिता । राजपुत्री, राजदुहिता । भोज-

---

वाचंयम—वाचंयम तथा पुरन्दर शब्दों का निपातन होता है ।

कारे—कार शब्द के उत्तरपदस्थानापन्न होने पर सत्य तथा अगद शब्दों को भी मुम् का आगम हो जाता है ।

अस्तु-सत्यागदस्य—अस्तु, सत्य तथा अगद शब्दों को कार शब्द के परे मुम् के आगम का व्याख्यान करना चाहिए ।

भक्षस्य—छन्दोविषयप्रयोग में भक्ष शब्द को कार शब्द के परे मुम् के आगम का प्रतिपादन करना चाहिये ।

धेनोः—भव्या शब्द के परे धेनु शब्द को भी मुम् के आगम का विधान करना चाहिए ।

लोकस्य—पृण शब्द के परे लोक शब्द को मुमागम का विधान करना चाहिए ।

इत्ये—इत्य शब्द के परे अनभ्यास शब्द को मुम् के आगम का विधान करना चाहिए ।

भ्राष्ट्राग्न्योः—इन्ध शब्द के परे भ्राष्ट्र तथा अग्नि शब्दों को मुम् के आगम का विधान करना चाहिए ।

गिले—गिल शब्द के परे गिल-शब्द भिन्न शब्दों को मुम् के आगम का प्रतिपादन करना चाहिए ।

गिलगिले—गिलगिल शब्द के परे भी गिल-शब्द भिन्न शब्दों के मुमागम का भी प्रतिपादन करना चाहिए ।

उष्णभद्रयोः—करणशब्द के परे उष्ण तथा भद्र शब्दों को मुम् के आगम का विधान करना चाहिए ।

सूतोग्र—सूत, उग्र, राजन्, भोज तथा मेरु शब्दों से परवर्त्ती दुहितृ शब्द के स्थान में पुत्रट् आदेश हो जाता है विकल्प से ।

---

(१) अस्तुंकारः = अभ्युपगमः ।

पुत्री । भोजदुहिता । मेरुपुत्री, मेरुदुहिता । केचित्तु, शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति(१) तस्य पुत्रीति भवति । अन्यत्रापि हि दृश्यते–शैलपुत्रीति ॥

## श्येनतिलस्य पाते ञे ॥ ७१ ॥

श्येन तिल इत्येतयोः पातशब्द उत्तरपदे ञप्रत्यये मुमागमो भवति । श्येनपातोऽस्यां क्रीडायां श्यैनम्पाता मृगया । तैलम्पाता । ञ इति किम् ? श्येनपातः ॥

## रात्रेः कृति विभाषा ॥ ७२ ॥

रात्रेः कृदन्त उत्तरपदे विभाषा मुमागमो भवति । रात्रिंचरः । रात्रिचरः । रात्रिमटः । राज्यटः । अप्राप्तविभाषेयम् । खिति कृति नित्यं भवति–रात्रिंमन्यः ॥

## नलोपो नञः ॥ ७३ ॥

नञो नकारस्य लोपो भवत्युत्तरपदे । अब्राह्मणः । अवृषलः । असुरापः । असोमपः ॥ ॥नञो नलोपोऽवक्षेपे तिङ्युपसंख्यानम्॥ ॥ अपचसि त्वं जाल्म ! अकरोषि त्वं जाल्म ! ॥

## तस्मान्नुडचि ॥ ७४ ॥

तस्माल्लुप्तनकारान्नञः नुडागमो भवति अजादावुत्तरपदे । अनजः । अनश्वः । तस्मादिति किम् ? नञ एव हि स्यात् । पूर्वान्ते हि "ङमो ह्रस्वादचि ङमुण्नित्यम्" इति प्राप्नोति ॥

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥ ७५ ॥

नभ्राट्, नपात्, नवेदा, नासत्या, नमुचि, नकुल, नख, नपुंसक, नक्षत्र, नक्र, नाक इत्येतेषु नञ् प्रकृत्या भवति । नभ्राजत इति, नभ्राट् । भ्राजतेः क्विबन्तस्य नञ्समासः नपात्–न पातीति, नपात् । पातिः शत्रन्तः । नवेदाः–न वेत्तीति नवेदाः । वेत्तिरसुन्प्रत्ययान्तः । नासत्याः–सत्सु साधवः सत्याः न सत्या असत्याः, न असत्याः नासत्याः । नमुचि–न मुञ्चतीति, नमुचिः । मुचेरौणादिकः किप्रत्ययः । नकुल–नास्य कुलमस्ति, नकुलः । नख–नास्य खमस्तीति, नखम् । नपुंसक–न स्त्री न पुमान्नपुंसकम् । स्त्रीपुंसयोः पुंसक-भावो

---

श्येन—अप्रत्ययान्त पातशब्दात्मक उत्तरशब्द के परे श्येन तथा तिल शब्दों को मुम् का आगम हो जाता है ।

रात्रेः—कृदन्तोत्तरपद के परे रात्रि शब्द को विकल्प से मुम् का आगम हो जाता है ।

नलोपो—उत्तरपद के परे नञ् के नकार ( =न् ) का लोप हो जाता है ।

नञो—निन्दा के गम्यमान होने पर तिङन्त उत्तरपद के परे नञ् के नकार का लोप प्रतिपादनीय है ।

तस्मान्नुडचि—उत्तरपद के अजादि होने पर लुप्तनकार नञ् ( =अ ) को नुट् का आगम हो जाता है ।

नभ्राण्—नभ्राट्, नपात्, नवेदा, नासत्या, नमुचि, नकुल, नख, नपुंसक नक्षत्र, नक्र तथा नाक शब्दों के उत्तरपदस्थानापन्न होने पर पूर्वपदस्थानीय नञ् प्रकृतिस्थ बना रहता है, अर्थात् नलोप नहीं होता है ।

---

( १ ) तत्र ङीनन्तेन सह तत्पुरुषे सति सूतादिपुंशब्देभ्यः परस्य पुत्रीशब्दस्य पुत्रः पुंम्य इत्यनेन उत्तरपदाद्युदात्तत्वपुत्रशब्दादेशे सानुबन्धकतया पुत्रः पुम्भ्य इत्यस्याप्रवृत्तौ अन्तोदात्तत्वमिति विशेष ऊह्यः । अत एव तान्प्रति नेदमुपसंख्यानमिति न्यासोक्तं चिन्त्यम् । ( भीना० )

निपात्यते। नचन्न—न चरति चीयत इति वा, नचन्नम्। चियः चरतेर्वा चन्नमिति निपात्यते। नक्र—न क्रामतीति नक्रः। क्रमेर्डप्रत्ययो निपातनात्। नाक—नास्मिन्नकमिति नाकम्॥

## एकादिश्चैकस्य चादुक्॥ ७६॥

एकादिश्च नञ् प्रकृत्या भवति, एकशब्दस्यादुगागमो भवति। एकेन न विंशतिः एकान्नविंशतिः। एकादूनविंशतिः। एकान्नत्रिंशत्। एकादूनत्रिंशत्। तृतीयेति योगविभागात् समासः। पूर्वान्तोऽयमदुक् क्रियते। पदान्तलक्षणोऽनुनासिको विकल्पेन यथा स्यात् इति॥

## नगोऽप्राणिष्वन्यतरस्याम्॥ ७७॥

नञ् प्रकृत्या भवति अन्यतरस्याम्। नगा वृक्षाः। अगा वृक्षाः। नगाः पर्वताः। अगाः पर्वताः। न गच्छन्तीति नगाः, गमेर्डप्रत्ययः। अप्राणिष्विति किम्? अगो वृषलः शीतेन॥

## सहस्य सः संज्ञायाम्॥ ७८॥

सहशब्दस्य स इत्ययमादेशो भवति संज्ञायां विषये। साश्वत्थम्। सपलाशम्। सशिंशपम्। संज्ञायामिति किम्? सहयुध्वा। सहकृत्वा। आदेश उदात्तो निपात्यते। उदात्तानुदात्तवतो हि सहशब्दस्यान्तर्यतः स्वरितः स्यात्। स च निपातनस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र तत्र उपयुज्यते। अन्यत्र समासान्तोदात्तत्वेन बाध्यत एव–सेष्टि, सपशुबन्धमिति॥

## ग्रन्थान्ताधिके च॥ ७९॥

ग्रन्थान्तेऽधिके च वर्त्तमानस्य सहशब्दस्य स इत्ययमादेशो भवति। सकलं ज्योतिषमधीते। समुहूर्तम्। ससंग्रहं व्याकरणमधीते। कलान्तं मुहूर्त्तान्तं संग्रहान्तमिति, अन्तवचन इत्यव्ययीभावः समासः। तत्राव्ययीभावे चाकाल 'इति कालवाचिन्युत्तरपदे सभावो न प्राप्नोतीत्ययमारम्भः। अधिके–सद्रोणा खारी। समाषः कार्षापणः। सकाकिणीको माषः॥

## द्वितीये चानुपाख्ये॥ ८०॥

द्वयोः सहयुक्तयोरप्रधानो यः स द्वितीयः। उपाख्यायते प्रत्यक्षत उपलभ्यते य स उपाख्यः, उपाख्यादन्योऽनुपाख्योऽनुमेयस्तस्मिन् द्वितीयेऽनुपाख्ये सहस्य स इत्ययमादेशो भवति। साग्निः कपोतः। सपिशाचा वात्या। सराक्षसीका शाला। अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमानास्तदनुपाख्या भवन्ति॥

---

एकादिश्चैकस्य—'एक' शब्द हो आदि में जिस नञ् के वह भी प्रकृतिस्थ बना रहता है तथा 'एक' शब्द को अदुक् का आगम भी हो जाता है।

नगो—अप्राणिवृत्ति नग शब्द का नञ् विकल्प से प्रकृतिस्थ रहता है।

सहस्य—संज्ञाविषय में उत्तरपद के परे 'सह' शब्द के स्थान में 'स' आदेश हो जाता है।

ग्रन्थान्ता—ग्रन्थान्त तथा अधिक अर्थ में वर्तमान शब्द के पूर्वावयव 'सह' के स्थान में भी 'स' आदेश हो जाता है।

द्वितीये—प्रत्यक्षतः अनुपलभ्यमान सहयुक्त अप्रधान पदार्थ के वाचक शब्द के परे 'सह' शब्द के स्थान में 'स' आदेश हो जाता है।

## अव्ययीभावे चाकाले ॥ ८१ ॥

अव्ययीभावे च समासेऽकालवाचिन्युत्तरपदे सहस्य स इत्ययमादेशो भवति । सचक्रं धेहि । सधुरं प्राज । अकाल इति किम् ? सहपूर्वाह्णम् ॥

## वोपसर्जनस्य ॥ ८२ ॥

उपसर्जनसर्वावयवः समास उपसर्जनं, यस्य सर्वेऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहिर्गृह्यते । तदवयवस्य सहशब्दस्य वा स इत्ययमादेशो भवति । सपुत्रः । सहपुत्रः । सच्छात्रः । सहच्छात्रः । उपसर्ज्जनस्येति किम् ? सहयुध्वा । सहकृत्वा । सहकृत्वप्रियः, प्रियसहकृत्वेति बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवतीति सभावो न भवति ॥

## प्रकृत्याशिष्यगोवत्सहलेषु ॥ ८३ ॥

प्रकृत्या सहशब्दो भवति आशिषि विषयेऽगोवत्सहलेषु । स्वस्ति देवदत्ताय सहपुत्राय सहच्छात्राय सहामात्याय । अगोवत्सहलेष्विति किम् ? स्वस्ति भवते सहगवे, सगवे; सहवत्साय, सवत्साय; सहलाय, सहहलाय । "वोपसर्जनस्य" इति पक्षे भवत्येव सभावः ॥

## समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु ॥ ८४ ॥

स इति वर्त्तते । समानस्य स इत्ययमादेशो भवति छन्दसि विषये मूर्द्धन्प्रभृति उदर्क इत्येतान्युत्तरपदानि वर्ज्जयित्वा । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्यः । समानो गर्भः सगर्भः । तत्र भवः सगर्भ्यः । "सगर्भसयूथसनुताद्यत्" इति यत् प्रत्ययः । अमूर्द्धप्रभृत्युदर्केष्विति किम् ? समानमूर्द्धा, समानप्रभृतयः, समानोदर्काः । समानस्येति योगविभाग इष्टप्रसिद्ध्यर्थः क्रियते । तेन सपक्षः, साधर्म्यम्, सजातीय इत्येवमादयः सिद्धा भवन्ति ॥

## ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥८५॥

ज्योतिस् , जनपद, रात्रि, नाभि, नामन् , गोत्र, रूप, स्थान, वर्ण, वयस् , वचन, बन्धु इत्येतेषूत्तरपदेषु समानस्य स इत्ययमादेशो भवति । सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सनामा । सगोत्रः । सरूपः । सस्थानः । सवर्णः । सवयाः । सवचनः । सबन्धुः ॥

---

अव्ययीभावे—अव्ययीभाव समास के कालवाचकभिन्न उत्तरपद के परे 'सह' के स्थान में 'स' आदेश हो जाता है ।

वोपसर्जनस्य—बहुव्रीहि समास में उत्तरपद के परे 'सह' शब्द के स्थान में 'स' आदेश हो जाता है विकल्प से ।

प्रकृत्या—गो, वत्स तथा हल शब्दों से भिन्न उत्तरपद के परे ( बहुव्रीहि समास में ) आशीर्विषय में 'सह' शब्द प्रकृतिस्थ ही रह जाता है ।

समानस्य—मूर्धन् प्रभृति तथा उदक शब्द को छोड़कर अन्य शब्द के उत्तरपदस्थानीय होनेपर 'समान' शब्द के स्थान में 'स' आदेश हो जाता है छन्दोविषय में ।

ज्योतिर्जन—ज्योतिस् , जनपद, रात्रि, नाभि, नामन् , गोत्र, रूप, स्थान, वर्ण, वयस् , वचन तथा बन्धु शब्दो के उत्तरपदस्थानापन्न होनेपर 'समान' शब्द को 'स' आदेश हो जाता है ।

## चरणे ब्रह्मचारिणि ॥ ८६ ॥

चरणे गम्यमाने ब्रह्मचारिण्युत्तरपदे समानस्य स इत्ययमादेशो भवति । समानो ब्रह्मचारी सब्रह्मचारी । ब्रह्म वेदस्तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म, तच्चरतीति ब्रह्मचारी समानस्तस्यैव ब्रह्मणः समानत्वादित्ययमर्थो भवति । समाने ब्रह्मणि व्रतचारी सब्रह्मचारीति ॥

## तीर्थे ये ॥ ८७ ॥

तीर्थशब्द उत्तरपदे यत्प्रत्यये परतः समानस्य स इत्ययमादेशो भवति । सतीर्थ्यः । समानतीर्थे वासीति यत्प्रत्ययः ॥

## विभाषोदरे ॥ ८८ ॥

उदरशब्द उत्तरपदे यत्प्रत्ययान्ते समानस्य विभाषा स इत्ययमादेशो भवति । सोदर्यः । समानोदर्यः । "समानोदरे शयित आ चोदात्तः" इति यत् ॥

## दृग्दृशवतुषु ॥ ८९ ॥

दृक्, दृश, वतु इत्येतेषु परतः समानस्य स इत्ययमादेशो भवति । सदृक् । सदृशः । "त्यदादिषु दृशोऽनालोचने कञ्च" इत्यत्र 'समानान्ययोश्चेति वक्तव्यम्' इति कञ्क्विनौ प्रत्ययौ क्रियेते । ॐदृक्षे चेति वक्तव्यम्ॐ । सदृक्षः । ॐदृशेः क्सप्रत्ययोऽपि तत्रैव वक्तव्यःॐ । वतुग्रहणमुत्तरार्थम् ॥

## इदङ्किमोरीश्की ॥ ९० ॥

इदम्, किम् इत्येतयोरीश्की इत्येतौ यथासंख्यमादेशौ भवतो दृग्दृशवतुषु । ईदृक् । ईदृशः । इयान् । कीदृक् । कीदृशः । कियान् । "किमिदंभ्यां वो घः" इति वतुप् । ॐदृक्षे चेति वक्तव्यम्ॐ । ईदृक्षः । कीदृक्षः ॥

## आ सर्वनाम्नः ॥ ९१ ॥

---

चरणे—'चरण' के गम्यमान होने पर ब्रह्मचारिन् शब्दात्मक उत्तरपद के परे 'समान' शब्द के स्थान में 'स' आदेश हो जाता है।

तीर्थे—यत्प्रत्ययान्त तीर्थ शब्द के उत्तरपद होने पर 'समान' शब्द के स्थान में 'स' आदेश हो जाता है।

विभाषोदरे—उदर शब्द के उत्तरपद होने पर 'समान' शब्द के स्थान में विकल्प से 'स' आदेश होता है।

दृग्दृश—दृक्, दृश तथा वतु शब्द के परे 'समान' शब्द के स्थान में 'स' आदेश हो जाता है।

दृक्षे—दृक्ष शब्द के परे भी 'समान' शब्द के स्थान में 'स' आदेश का प्रतिपादन करना चाहिए।

दृशेः—'त्यदादिषु' आदि सूत्र में कञ् तथा क्विन् प्रत्ययों के साथ-साथ 'दृश्' धातु से क्स प्रत्यय का भी प्रतिपादन करना चाहिए।

इदङ्किमोः—दृक्, दृश तथा वतु शब्दों के परे इदम् तथा किम् शब्दोंके स्थान में क्रमशः ईश् तथा की आदेश हो जाते हैं।

दृक्षे—दृक्ष शब्द के परे भी इदम् तथा किम् शब्दों के स्थान में क्रमशः ईश् तथा की आदेशों का प्रतिपादन कर्त्तव्य हैं।

आ सर्व—दृक्, दृश तथा वतुप् के परे सर्वनाम के स्थान में आकारादेश हो जाता है।

सर्वनाम्न आकारादेशो(१) भवति दृग्दृशवतुषु। तादृक्। तादृशः। तावान्। यादृक्। यादृशः। यावान्। ॐदृक्षे चेति वक्तव्यम्ॐ। तादृक्षः। यादृक्षः॥

## विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये॥ ९२॥

विष्वक् देव इत्येतयोः सर्वनाम्नश्च टेरद्रीत्ययमादेशो भवति अञ्चतौ वप्रत्यान्त उत्तरपदे। विष्वगञ्चतीति विष्वद्र्यङ्। देवद्र्यङ्। सर्वनाम्नः—तद्र्यङ्। यद्र्यङ्, अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम्। तत्र यणादेशे कृते "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" इत्येष स्वरो भवति। विष्वग्देवयोरिति किम्? अश्वाची। अञ्चताविति किम्? विष्वग्युक्। वप्रत्यय इति किम्? विष्वगञ्चनम्। वप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम्। तेनायस्कृतमयस्कार इत्यत्र "अतः कृकमिकंसकुम्भपात्र" इति सत्वं भवति। ॐछन्दसि स्त्रियां बहुलमिति वक्तव्यम्ॐ। विश्वाची च घृताची चेत्यत्र न भवति। कद्रीचीत्यत्र तु भवत्येव(२)॥

## समः समि॥ ९३॥

समित्येतस्य समि इत्ययमादेशो भवति, अञ्चतौ वप्रत्ययान्त उत्तरपदे। सम्यङ्। सम्यञ्चौ। सम्यञ्चः॥

## तिरसस्तिर्यलोपे॥ ९४॥

तिरस् इत्येतस्य तिरि इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्त उत्तरपदेऽलोपे, यदाऽस्य लोपो न भवति। तिर्यङ्। तिर्यञ्चौ। तिर्यञ्चः। अलोप इति किम्? तिरश्चा, तिरश्चे। "अचः" इत्यकारलोपः॥

## सहस्य सध्रिः॥ ९५॥

सहेत्यस्य सध्रिरित्ययमादेशो भवत्यञ्चतौ वप्रत्यान्त उत्तरपदे। सध्र्यङ्। सध्र्यञ्चौ। सध्र्यञ्चः। सध्रीचः। सध्रीचा॥

## सध मादस्थयोश्छन्दसि॥ ९६॥

छन्दसि विषये माद स्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययमादेशो भवति। सधमादो द्युम्न एकास्ताः। सधस्थाः॥

---

दृक्षे—दृक्ष शब्द के परे भी सर्वनाम को आकारादेश हो जाता है।

विष्वक्—वप्रत्ययान्त 'अन्चू' धातु के उत्तरपद स्थानापन्न होने पर विष्वक्, देव तथा सर्वनाम शब्दों के 'टि' के स्थान में 'अद्रि' आदेश हो जाता है।

छन्दसि—छन्दोविषय प्रयोग में स्त्रीत्वविवक्षा में बहुल करके 'अद्रि' आदेश का प्रतिपादन करना चाहिए।

समः—वप्रत्ययान्त 'अन्चू' धातु के उत्तरपद होने पर सम् के स्थान में 'समि' आदेश हो जाता है।

तिरसः—उत्तरपदस्थानीय वप्रत्ययान्त 'अन्चू' धातु यदि लोप का विषय न हुआ हो तो तिरस् शब्द के स्थान में 'तिरि' आदेश हो जाता है।

सहस्य—वप्रत्ययान्त 'अन्चू' धातु के उत्तरपदत्व में 'सह' शब्द के स्थान में 'सध्रि' आदेश हो जाता है।

सध—छन्दोविषयप्रयोग में माद यथा स्थ शब्दों के उत्तरपद होने पर 'सह' शब्द को 'सध' आदेश हो जाता है।

---

(१) अलोन्त्यस्यादेशो बोध्यः। (श्रीना०)

(२) क्वचिदन्यत्रापि भवति-विश्वद्र्याशा इत्यधिकमेकस्मिन्पुस्तके।

## द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९७ ॥

द्वि अन्तरित्येताभ्यामुपसर्गाच्चोत्तरस्यापित्येतस्य(१) इकारादेशो भवति। द्वीपः। अन्तरीपः। उपसर्गात्-नीपम्, वीपम्, समीपम्। ॐसमाप ईत्वे(२) प्रतिषेधो वक्तव्यः॥। समापं नाम देवयजनम्। अपर आह—ॐईत्वमनवर्णादिति(३) वक्तव्यम्ॐ। इह मा भूत्-प्रापम्, परापम्। अप्शब्दं प्रति क्रियायोगाभावाद् उपसर्गग्रहणं प्राद्युपलक्षणार्थम् ॥

## ऊदनोर्देशे ॥ ९८ ॥

अनोरुत्तरस्याप ऊकारादेशो भवति देशाभिधाने। अनूपोदेशः। देश इति किम्? अन्वीपम्। दीर्घोच्चारणमव(४) ग्रहार्थम्-अनु ऊपोऽनूप इति ॥

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितो-त्सुकोतिकारकरागच्छेषु ॥ ९९ ॥

अषष्ठीस्थस्य अतृतीयास्थस्य चान्यशब्दस्य दुगागमो भवति, आशिस्, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग, छ इत्येतेषु परतः। अन्या आशीः अन्यदाशीः। अन्या आशा अन्यदाशा। अन्या आस्था, अन्यदास्था। अन्य आस्थितः अन्यदास्थितः। अन्य उत्सुकः अन्यदुत्सुकः। अन्या ऊतिः अन्यदूतिः। अन्यः कारकः, अन्यत्कारकः। अन्यो रागः अन्यद्रागः। अन्यस्मिन् भवः अन्यदीयः। गहादिष्वन्यशब्दो द्रष्टव्यः। अषष्ठ्यतृतीयास्थस्येति किम्? अन्यस्य आशीः अन्याशीः। अन्येनास्थितः अन्यास्थितः॥ दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः। षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु॥ अन्यस्य कारकमन्यत्कारकम्। अन्यस्येदमन्यदीयम्। अस्य च द्विर्नञ्ग्रहणं लिङ्गम् ॥

## अर्थे विभाषा ॥ १०० ॥

अर्थशब्द उत्तरपदे अन्यस्य विभाषा दुगागमो भवति। अन्यदर्थः। अन्यार्थः॥

---

**द्व्यन्तर्**—द्वि, अन्तर तथा प्रादि से परवर्त्ती 'आप्' शब्द के स्थान में ईकारादेश हो जाता है।

**समाप**—समाप शब्द में प्रादि पर वृत्ति आप् शब्द के ईकारादेश का प्रतिषेध करना चाहिए।

**ईत्वम्**—अवर्णान्त भिन्न प्रादि से परे होने पर ही आप् शब्द के स्थान में ईकारादेश का विधान समझना चाहिए।

**ऊदनोर्देशे**—अनु से परवर्त्ती आप् शब्द के स्थान में ऊकारादेश हो जाता है समुदाय से देश के अभिधान होने पर।

**अषष्ठ्य**—आशिस्, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग तथा छ (प्रत्यय) के परे षष्ठ्यन्त तथा तृतीयान्त से भिन्न अन्य शब्दको दुक् का आगम हो जाता है।

**अर्थे**—अर्थ शब्द के उत्तरपद होने पर अन्य शब्द को विकल्प से दुक् का आगम होता है।

---

(१) आदेः परस्येत्यादेशः। (श्रीना०)

(२) एतच्च देवयजनवृत्तित्वे एव। अत एवान्यत्र समीपम् इत्येव भवति (श्रीना०)

(३) अत्र वा इति योज्यम्। अत एव 'प्रेपं परेपम्' इति गतिश्चेतिसूत्रभाष्यम् (श्रीना०)

(४) अवग्रहे दीर्घश्रवणार्थम् (श्रीना०)

## कोः कत्तत्पुरुषेऽचि ॥ १०१ ॥

कु इत्येतस्य कदित्ययमादेशो भवति तत्पुरुषे समासेऽजादावुत्तरपदे। कदजः। कदश्वः। कदुष्ट्रः। कदन्नम्। तत्पुरुष इति किम्? कूष्ट्रो राजा। अचीति किम्? कुब्राह्मणः, कुपुरुषः। ॐकद्भावे त्रावुपसंख्यानम्ॐ कुत्सितास्त्रयः कत्त्रयः॥

## रथवदयोश्च ॥ १०२ ॥

रथ, वद इत्येतयोश्चोत्तरपदयोः कोः कदित्ययमादेशो भवति। कद्रथः। कद्वदः॥

## तृणे च जातौ ॥ १०३ ॥

तृणशब्द उत्तरपदे जातावभिधेयायां कोः कदादेशो भवति। कत्तृणा नाम जातिः। जाताविति किम्? कुत्सितानि तृणानि कुतृणानि॥

## का पथ्यक्षयोः ॥ १०४ ॥

पथिन्, अक्ष इत्येतयोरुत्तरपदयोः कोः का इत्ययमादेशो भवति। कापथः। काक्षः॥

## ईषदर्थे ॥ १०५ ॥

ईषदर्थे वर्त्तमानस्य कोः का इत्ययमादेशो भवति। कामधुरम्। कालवणम्। अजादावपि परत्वात् कादेश एव भवति—काम्लम्॥

## विभाषा पुरुषे ॥ १०६ ॥

पुरुषशब्द उत्तरपदे विभाषा कोः का इत्ययमादेशो भवति। कापुरुषः। कुपुरुषः। अप्राप्तविभाषेयम्। ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यं का भवति—ईषत्पुरुषः, कापुरुषः॥

## कवञ्चोष्णे ॥ १०७ ॥

उष्णशब्द उत्तरपदे कोः कवमित्ययमादेशो भवति का च विभाषा। कवोष्णम्। कोष्णम्। कदुष्णम्॥

## पथि च च्छन्दसि(१) ॥ १०८ ॥

---

कोः—तत्पुरुष समास में अजादि उत्तरपद के परे 'कु' शब्द स्थान में 'कत्' आदेश हो जाता है।

कद्भावे—त्रि शब्द के परे भी 'कु' शब्द के स्थान में 'कत्' आदेश का विधान करना चाहिए।

रथ—रथ तथा वद शब्दों के परे भी 'कु' शब्द के स्थान में 'कत्' आदेश हो जाता है।

तृणे—जाति विवक्षा में तृण शब्दात्मक उत्तर पद के परे भी 'कु' शब्द के स्थान में 'कत्' आदेश हो जाता है।

का पथ्यक्षयोः—पथिन् एवम् अक्ष शब्दों के परे 'कु' शब्द के स्थान में 'का' आदेश हो जाता है।

ईषदर्थे—ईषदर्थक 'कु' शब्द के स्थान में भी उत्तरपद के परे 'का' आदेश हो जाता है।

विभाषा—पुरुष शब्दात्मक उत्तरपद के परे 'कु' शब्द के समान में विकल्प से 'का' आदेश होता है।

कवञ्चोष्णे—उष्ण शब्द के उत्तरपद होने पर 'कु' शब्द के स्थान में 'कव' आदेश भी हो जाता है एवं विकल्प से 'का' आदेश भी।

पथि—पथिन् शब्द के उत्तर पदत्व में भी 'कु' शब्द में स्थान में विकल्प से 'का' तथा 'कव' आदेश होते हैं छन्दो विषय में।

---

(१) भाषायान्तु 'का पथ्यक्षयोः' इति नित्यादेश उक्तः। (श्रीना०)

पथिन् शब्द उत्तरपदे छन्दसि विषये कोः कव काइत्येतावदेशौ भवतो विभाषा। कवपथः। कापथः। कुपथः॥

## पृषोदरादीनि यथोपदिष्टम् ॥ १०९ ॥

पृषोदरादीनि शब्दरूपाणि येषु लोपागमवर्णविकाराः शास्त्रेण न विहिताः, दृश्यन्ते च तानि यथोपदिष्टानि साधूनि भवन्ति। यानि यथोपदिष्टानि शिष्टैरुच्चारितानि प्रयुक्तानि तथैवानुगन्तव्यानि। पृषदुदरं यस्य पृषोदरम्। पृषद् उद्वानं यस्य पृषोद्वानम्। अत्र तकारलोपो भवति। वारिवाहको बलाहकः। पूर्वशब्दस्य बशब्द आदेश उत्तरपदादेश्च लत्वम्। जीवनस्य मूतो जीमूतः। वनशब्दस्य लोपः। 'शवानां शयनं, श्मशानम् शवशब्दस्य श्मादेशः। शयनशब्दस्यापि शानशब्द आदेशः। ऊर्ध्वं खमस्येति उलूखलम्। ऊर्ध्वंखशब्दयोरुलू खल इत्येतावादेशौ भवतः। पिशिताशः पिशाचः। पिशिताशशब्दयोर्यथायोगं पिशाचशब्दावादेशौ। ब्रुवन्तोऽस्यां सीदन्तीति बृसी। सदेरधिकरणे डट् प्रत्ययः। ब्रुवच्छब्दस्य चोपपदस्य बृशब्द आदेशो भवति। मह्यां रौतीति मयूरः। रौतेरचि टिलोपः। महीशब्दस्य मयूभावः। एवमन्येऽपि अश्वत्थकपित्थप्रभृतयो यथायोगमनुगन्तव्याः। दिक्शब्देभ्य(१) उत्तरस्य तीरस्य तारभावो वा भवति—दक्षिणतीरम्, दक्षिणतारम्, उत्तरतीरम्, उत्तरतारम्। ॐवाचो वादे डत्वं च लभावश्चोत्तरपदस्येञि प्रत्यये भवतिॐ। वाचं वदतीति वाग्वादः, तस्यापत्यं वाड्वलिः। ॐषष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च भवतिॐ षड् दन्ता अस्य षोडन्, षट् च दश च षोडश। ॐधासु वा षष उत्वं भवति(२) उत्तरपदादेश्च ष्टुत्वम्, षोढा, षड्धा कुरु। बहुवचननिर्देशो नानाधिकरणवाचिनो(३) धाशब्दस्य प्रतिपत्त्यर्थः। इह मा भूत्-षड् दधाति षयति वा षड्धेति। (४)दुरो दाशनाशद-

---

पृषोदरादीनि—पृषोदर आदि शब्द जिस रूप में शिष्टोपदिष्ट हैं उस रूप की सिद्धि के लिए साधारणतः अविहित लोपागमादि विधियों का अनुगम कर लेना चाहिए।

दिक् शब्देभ्यः—दिक् शब्द से उत्तरवर्ती तीर शब्द के समान में विकल्प से तार आदेश का प्रतिपादन करना चाहिए।

वाचो—इञ् प्रत्ययान्त वाद (= वादि) शब्द के उत्तरपद स्थानापन्न होने पर वाक् शब्द के स्थान में दकारादेश तथा वाद शब्द के स्थान में बल आदेश समझना चाहिए।

षष उत्वम्—दतृ तथा दशन् शब्द के उत्तरपद स्थानापन्न होने पर पूर्वपद स्थानीय षष् शब्द के उकारान्तादेश हो जाता है और उत्तरपद के आदि को ष्टुत्व हो जाता है—ऐसा समझना चाहिए।

धासु—परन्तु धा प्रत्यय के परे षष् के स्थान में उकारादेश तो विकल्प से परन्तु उत्तरपद के आदि को ष्टुत्व नित्य होता है—ऐसा समझना चाहिए।

---

(१) सर्वत्र पञ्चम्यन्ते पाठोपलम्भेऽपि अर्थतो भाष्यानुरोधाच्च परिहृतः। (श्रीना०)

(२) उत्तरपदशब्दस्य च अत्र अर्थः—पद्यते = प्रतीयते, अनेन अर्थ इति पदम् = प्रत्ययः, उत्तरं पदम् इति कर्मधारयः। अतएव धाप्रत्ययस्य उत्तरपदत्वमुपपन्नम्। (श्रीना०)

(३) बहुवचननिर्देशः—धासु इति वार्त्तिके सप्तमीबहुवचनान्तस्य धाशब्दस्य प्रयोगः, नानाधिकरणवाचिनः = नानाद्रव्यवाचिनः, धाशब्दस्य = 'अधिकरणविचाले च' इति विहितस्य। तत्र अर्थगतं नानात्वं शब्दे समारोप्य शब्दे बहुवचननिर्देश इत्यर्थः। प्रत्युदाहरणे तु धा शब्दो दधातेर्निष्पन्नो न नानार्थक इति न तस्य ग्रहणम्। (श्रीना०)

(४) एतच्च न भाष्ये वार्त्तिकत्वेन सम्मतमिति प्रकृतसूत्रभाष्यटिप्पणी निर्णयसागरीयसंस्करणे द्रष्टव्या। (श्रीना०)

अध्येषत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम् कृच्छ्रेण दाश्यते नाश्यते दभ्यते च यः स दूडाशः, दूणाशः, दूडभः। दम्भेः खल्वनुनासिकलोपो निपातनात्। दुष्टं ध्यायतीति, दूढ्यः। दुःशब्दोपपदस्य ध्यायतेः "आतश्चोपसर्गे" इति कप्रत्ययः। ॥स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम्॥ एहि त्वं जाये! (१)स्वो रोहाव। ॥पीवोपवसनादीनां च लोपो वक्तव्यः॥ पीवोपवसनानाम्, पयोपवसनानाम् ॥

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

## संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ॥ ११० ॥

संख्या, वि, साय इत्येवं पूर्वस्याह्नशब्दस्य स्थाने अहन्नित्ययमादेशो भवत्यन्यतरस्यां ङौ परतः। द्वयोरह्नोर्भवः, द्व्यह्नः। त्र्यह्नः। द्व्यह्नि, द्व्यहनि। त्र्यह्नि, त्र्यहनि। द्व्यह्ने। त्र्यह्ने। व्यपगतमह्नो, व्यह्नः। व्यह्नि, व्यहनि। व्यह्ने। सायमह्नः सायाह्नः। सायाह्नि, सायाहनि। सायाह्ने। एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापि भवतीत्येतदेव विसायपूर्वस्याह्नस्य ग्रहणं ज्ञापकम्। तेन मध्यमह्नो मध्याह्न इत्यपि भवति। संख्याविसायपूर्वस्येति किम्? पूर्वाह्णे, अपराह्णे।

## ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ १११ ॥

ढकाररेफयोर्लोपो यस्मिन् स ढ्रलोपः, तत्र पूर्वस्याणो दीर्घो भवति। लीढम्। मीढम्। उपगूढम्। मूढः। रलोपे-नीरक्तम्, अग्नी रथः, इन्दूरथः, पुना रक्तं वासः, प्राता राजक्रयः। पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्। अण इति किम्? वृढम्(२), आतृढम् ॥

## सहिवहोरोदवर्णस्य ॥ ११२ ॥

सहि वहि इत्येतयोरवर्णस्यौकार आदेशो भवति ढ्रलोपे। सोढा। सोढुम्। सोढव्यम्। वोढा। वोढुम्। वोढव्यम्। अवर्णस्येति किम्? ऊढः। ऊढवान्। वर्णग्रहणं किम्? कृतायामपि वृद्धौ यथा स्यात्-उदवोढाम्। उदवोढम्। तादपि परस्तपरस्तपरत्वादाकारस्य ग्रहणं न स्यात् ॥

---

स्वरो—'रुह्' धातु निष्पन्न शब्द के परे स्वर शब्द के स्थान में उकार अन्तादेश का उपसंख्यान छन्दोविषय प्रयोग में करना चाहिए।

पीवोप—पीवोपवसन आदि छान्दस शब्दों की सिद्धि के लिए पीवस् आदि शब्दों का अन्त्य लोप भी समझना चाहिए।

संख्या—संख्यावाचक, वि तथा साय शब्दों से परवर्त्ती अह्न शब्द के स्थान में सप्तमी एकवचन के परे विकल्प से अहन् आदेश हो जाता है।

ढ्रलोपे—ढकार निमित्तक तथा रेफ निमित्तक ढकारलोप तथा रेफ लोप होने पर लुप्त ढकार तथा रेफ से पूर्ववर्त्ती अण् के स्थान में दीर्घ हो जाता है।

सहि—ढकारनिमित्तक ढकारलोप तथा रेफनिमित्तक रेफलोप होनेपर 'सह्' तथा 'वह्' धातुओं के अवर्ण के स्थान में ओकारादेश हो जाता है।

---

(१) अत्र यद्यपि सर्वत्र पुस्तके 'जाय एहि स्वो रोहाव' इत्येव पाठः तथापि भाष्यानुरोधादस्माभिः परिवर्तितः। हे जाये एहि, आवां स्वर्गम् रोहाव इत्यर्थः। 'रोहाव' इति रुहेः लोण्मध्यमपुरुषद्विवचने रूपम्। (श्रीना०)

(२).आतृढमिति पुस्तकान्तरेऽधिकम्, तदसत्, सेट्कत्वादस्य धातोः "दृढः स्थूलबलयोः" इति इलोपो निपात्यते इति पदमंजरी।

## साढ्यै साढ्वा साढेति निगमे ॥ ११३ ॥

साढ्यै, साढ्वा, साढा इति निगमे निपात्यन्ते। साढ्यै समन्तात्। साढ्वा शत्रून्। सहेः क्त्वाप्रत्यये ओत्वाभावः। पक्षे क्त्वाप्रत्ययस्य य्यैभावः। साढेति तृचि रूपमेतत्। निगम इति किम्? सोढ्वा, सोढेति भाषायाम् ॥

## संहितायाम् ॥ ११४ ॥

संहितायामित्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः संहितायामित्येवं तद्वेदितव्यम्। वक्ष्यति—"द्व्यचोऽतस्तिङ इति। विद्मा हि त्वा सत्पतिं शूर गोनाम्"। संहितायामिति किम्? विद्म, हि, त्वा, सत्पतिम्, शूर, गोनाम् ॥

## कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥११५॥

कर्णशब्दे उत्तरपदे लक्षणवाचिनो दीर्घो भवति, विष्ट, अष्टन्, पञ्चन्, मणि, भिन्न, छिन्न, छिद्र, स्रुव, स्वस्तिक इत्येतान् वर्जयित्वा। दात्राकर्णः। द्विगुणाकर्णः। त्रिगुणाकर्णः। द्व्यंगुलाकर्णः। अङ्गुलाकर्णः। पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं दात्राकारादि क्रियते तदिह लक्षणं गृह्यते। लक्षणस्येति किम्? शोभनकर्णः। अविष्टादीनामिति किम्? विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः ॥

## नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ११६ ॥

नहि, वृति, वृषि, व्यधि, रुचि, सहि, तनि इत्येतेषु क्विप्रत्ययान्तेषूत्तरपदेषु पूर्वपदस्य दीर्घो भवति संहितायां विषये। नहि—उपानत्। परीणत्। वृति—नीवृत्। उपावृत्। वृषि—प्रावृट्। उपावृट्। व्यधि—मर्मावित्। हृदयावित्। श्वावित्। रुचि—नीरुक्। अभीरुक्। सहि—ऋतीषट्। तनि—तरीतत्। गमः क्वाविति गमादीनामिष्यते। ततस्तनोतेरप्यनुनासिकलोपः। क्वाविति किम्? परिणहनम्।

## वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् ॥ ११७ ॥

वन, गिरि इत्येतयोरुत्तरपदयोर्यथासंख्यं कोटरादीनां किंशुलकादीनां च दीर्घो भवति संज्ञायां विषये। वने कोटरादीनाम्—कोटरावणम्। मिश्रकावणम्। सिध्रकावणम्। सारिकावणम्। गिरौ किंशुलकादीनाम्—किंशुलकागिरिः। अञ्जनागिरिः। कोटरकिंशुलकादीनामिति किम्? असिपत्रवनम्। कृष्णगिरिः। कोटर। मिश्रक। पुरक। सिध्रक। सारिक। कोटरादिः। किंशुलक। सात्वक। अञ्जन। भञ्जन। लोहित। कुक्कुट। किंशुलकादिः ॥

---

साढ्यै—वैदिक प्रयोग में साढ्यै, साढ्वा तथा साढा शब्दों का निपातन किया जाता है।

संहितायाम्—अब यहाँ से 'संहितायाम्' अधिकार है अर्थात् सभी कार्य संहिता के विषय में ही होंगे।

कर्णे—कर्ण शब्द के उत्तरपद होने पर विष्ट, अष्टन्, पञ्चन्, मणि, भिन्न, छिन्न, छिद्र, स्रुव तथा स्वस्तिक शब्दों को छोड़कर अन्य लक्षणवाचक शब्दों के कर्णशब्दाव्यवहित पूर्ववृत्ति अण् दीर्घ हो जाता है।

नहिवृति—क्विप्रत्ययान्त 'नह्', 'वृत्', 'वृष्', 'व्यध्', 'रुच्', 'सह्' तथा 'तन्' धातुओं के उत्तरपद होने पर पूर्वपद को संहिताविषय में दीर्घ हो जाता है।

वनगिर्योः—वन शब्द के उत्तरपद होने पर कोटर आदि शब्दों का तथा गिरि शब्द के उत्तरपद होने पर किंशुलक आदि शब्दों को दीर्घ हो जाता है संज्ञाविषय में

## वले ॥ ११८ ॥

वले परतः पूर्वस्य दीर्घो भवति । आसुतीवलः । कृषीवलः । दन्तावलः । रजःकृष्या-सुतिपरिषदो वलच् इति वलच्प्रत्ययो गृह्यते । अनुत्साहभ्रातृपितॄणामित्येव(१) । उत्साह-वलः । भ्रातृवलः । पितृवलः ॥

## मतौ बह्वचोऽनजिरादीनाम् ॥ ११९ ॥

मतौ परतो बह्वचोऽजिरादिवर्जितस्य दीर्घो भवति, संज्ञायां विषये । उदुम्बरावती । मशकावती । वीरणावती । पुष्करावती । अमरावती । नद्यां मतुबिति मतुप्प्रत्ययः । संज्ञा-यामिति मतोर्वत्वम् । बह्वच इति किम् ? व्रीहिमती । अनजिरादीनामिति किम् ? अजि-रवती । खदिरवती । पुलिनवती । हंसकारण्डववती । चक्रवाकवती । संज्ञायामित्येव । वलयवती ॥

## शरादीनां च ॥ १२० ॥

शरादीनां च मतौ दीर्घो भवति संज्ञायां विषये । शरावती । वंशावती । शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु । शरादिः ॥ "संज्ञायाम्" इति मतो-र्वत्वम् । यवादित्वाद् व्रीह्यादिभ्यो न भवति ॥

## इको वहेऽपीलोः ॥ १२१ ॥

इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वह उत्तरपदे दीर्घो भवति । ऋषीवहम् । कपीव-हम् । मुनीवहम् । इक इति किम् ? पिण्डवहम् । अपीलोरिति किम् ? पीलुवहम् । ॐअपी-ल्वादीनामिति वक्तव्यम्ॐ । इह मा भूत्—दारुवहम् ॥

## उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ १२२ ॥

उपसर्गस्य घञन्त उत्तरपदेऽमनुष्येऽभिधेये बहुलं दीर्घो भवति । नीक्लेदः । वीमार्गः । अपामार्गः । न च भवति-प्रसेचः । प्रसारः ॐसादकारयोः कृत्रिमे दीर्घो भवतिॐ प्रासादः । प्राकारः । कृत्रिम इति किम् ? प्रसादः, प्रकारः ॐवेशादिषु विभाषा दीर्घो भवतिॐ प्रतिवेशः, प्रतीवेशः, प्रतिरोधः । प्रतीरोधः । अमनुष्य इति किम् ? निषादो मनुष्यः ॥

---

वले—वल शब्द के उत्तरपद होने पर पूर्व अण् को दीर्घ हो जाता है ।

मतौ—मतुप् के परे अजिर आदि शब्द भिन्न अनेकाच् शब्दों को दीर्घ हो जाता है संज्ञा-विषय में ।

शरादीनाम्—मतुप् के परे शर आदि शब्दों को दीर्घ हो जाता है ।

इको—वह शब्द के उत्तरपदत्व में पीलुशब्द भिन्न इगन्त उत्तरपद का दीर्घ हो जाता है ।

अपील्वादीनाम्—पीलु आदि शब्द भिन्न शब्दों के दीर्घादेश का विधान प्रतिपादनीय है ।

उपसर्गस्य—घञन्त उत्तरपद के परे उपसर्ग को बाहुल्येन दीर्घ हो जाता है यदि समुदाय का वाच्य मनुष्य न हो ।

सादकारयोः—साद तथा कार शब्द के उत्तरपदत्व में उपसर्ग के दीर्घ का प्रतिपादन करना चाहिए यदि समुदाय से कृत्रिम पदार्थ की प्रतीति होती है ।

वेशादिषु—वेश आदि के उत्तरपद होने पर उपसर्ग के वैकल्पिक दीर्घ का प्रतिपादन करना चाहिए ।

---

( १ ) अनुत्साहेत्यादि पितृवल इत्यन्तमेकस्मिन्पुस्तके नास्ति ।

## इकः काशे ॥ १२३ ॥

इगन्तस्योपसर्गस्य काशशब्द उत्तरपदे दीर्घो भवति । नीकाशः । वीकाशः । अनूकाशः पचाद्यच्प्रत्ययान्तोऽयं काशशब्दः । इक इति किम् ? प्रकाशः ॥

## दस्ति ॥ १२४ ॥

दा इत्येतस्य यस्तकारादिरादेशस्तस्मिन् परत इगन्तस्योपसर्गस्य दीर्घो भवति । नीत्तम् । वीत्तम् । परीत्तम् । "अच उपसर्गात्तः" इत्यन्यस्य यद्यपि तकारः क्रियते तथापि चर्त्वस्याश्रयात् सिद्धत्वमिति तकारादिर्भवति । इक इत्येव । प्रत्तम् । अवत्तम् । द इति किम् ? वितीर्णम्, नितीर्णम् । तीति किम् ? सुदत्तम् ॥

## अष्टनः संज्ञायाम् ॥ १२५ ॥

अष्टनित्येतस्योत्तरपदे संज्ञायां दीर्घो भवति । अष्टावक्रः । अष्टाबन्धुरः । अष्टापदम्(१) । संज्ञायामिति किम् ? अष्टपुत्रः, अष्टभार्यः ॥

## छन्दसि च ॥ १२६ ॥

छन्दसि विषयेऽष्टन उत्तरपदे दीर्घो भवति । आग्नेयमष्टाकपालं निर्वपेत् । अष्टाहिरण्या दक्षिणा । अष्टापदी देवता सुमती । अष्टौ पादा अस्या इति बहुव्रीहौ पादस्य लोपे कृते "पादोऽन्यतरस्याम्" इति ङीप् । ॐगवि च युक्ते भाषायामष्टनो दीर्घो भवतीति वक्तव्यम्ॐ । अष्टागवं शकटम् ॥

## चितेः कपि ॥ १२७ ॥

चितिशब्दस्य कपि परतो दीर्घो भवति । एकचितीकः । द्विचितीकः । त्रिचितीकः ।

## विश्वस्य वसुराटोः ॥ १२८ ॥

विश्वशब्दस्य वसु-राडित्येतयोरुत्तरपदयोर्दीर्घ आदेशो भवति । विश्वावसुः । विश्वाराट् । राडिति विकारनिर्देशो यत्रास्यैतद्रूपं तत्रैव यथा स्यात् । इह न भवति—विश्वराजौ—विश्वराजः ॥

## नरे संज्ञायाम् ॥ १२९ ॥

नरशब्द उत्तरपदे संज्ञायां विषये विश्वस्य दीर्घो भवति । विश्वानरो नाम यस्य वैश्वानरिः पुत्रः । संज्ञायामिति किम् ? विश्वे नरा यस्य स विश्वनरः ॥

---

इकः—काश शब्द के उत्तरपद होने पर इगन्त पूर्वपद को दीर्घ हो जाता है ।

दस्ति—दा स्थानीय तकारादि आदेश के परे इगन्त उपसर्ग को दीर्घ हो जाता है ।

अष्टनः—संज्ञाविषय में उत्तरपद के परे अष्टन् शब्द को दीर्घ हो जाता है ।

छन्दसि—छन्दोविषय प्रयोग में भी अष्टन् शब्द को उत्तरपद के परे दीर्घ हो जाता है ।

गवि च—भाषा में गो शब्द के परे भी अष्टन् शब्द को दीर्घ हो जाता है यदि समुदाय से युक्तत्व की प्रतीति होती हो—ऐसा व्याख्यान करना चाहिए ।

चितेः—कप् प्रत्यय के परे चिति शब्द को दीर्घ हो जाता है ।

विश्वस्य—वसु तथा राट् शब्दों के परे विश्व शब्द को दीर्घ हो जाता हैं ।

नरे—संज्ञाविषय के नर शब्द के परे भी विश्व शब्द को दीर्घ हो जाता है ।

---

(१) अस्य संज्ञात्वं मृग्यम् । (मीना०)

## मित्रे चर्षौ ॥ १३० ॥

मित्रे चोत्तरपदे ऋषावभिधेये विश्वस्य दीर्घो भवति। विश्वामित्रो नाम ऋषिः। ऋषाविति किम्? विश्वमित्रो माणवकः ॥

## मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३१ ॥

मन्त्रविषये सोम, अश्व, इन्द्रिय, विश्वदेव्य इत्येतेषां मतुप्प्रत्यये परतो दीर्घो भवति। सोमावती। अश्वावती। इन्द्रियावती। विश्वदेव्यावती ॥

## ओषधेश्च विभक्तावप्रथमायाम् ॥ १३२ ॥

मन्त्र इति वर्त्तते। ओषधिशब्दस्य विभक्तावप्रथमायां परतो दीर्घो भवति। ओषधीभिरपीपतत्। नमः पृथिव्यै नम ओषधीभ्यः। विभक्ताविति किम्? ओषधिपते। अप्रथमायामिति किम्? स्थिरेयमस्त्वोषधिः ॥

## ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥ १३३ ॥

ऋचि विषये तु, नु, घ, मक्षु, तङ्, कु, त्र, उरुष्य इत्येषां दीर्घो भवति। आ तू न इन्द्र वृत्रहन्। नु—नू करणे। घ—उत वा घा(१) स्यालात्। मक्षु—मक्षू गोमन्तमीमहे। तङ्—भरता जातवेदसम्। तङिति थादेशस्य ङित्वपक्षे ग्रहणम् तेनेह न भवति—शृणोत ग्रावाणः। कु—कूमनः। त्र—अत्रा गौः। उरुष्य—उरुष्या णोअग्नेः ॥

## इकः सुञि ॥ १३४ ॥

सुञ् निपातो गृह्यते। इगन्तस्य सुञि परतो मन्त्रविषये दीर्घो(२) भवति। अभी षु णः सखीनाम्। ऊर्ध्व ऊ षु ण ऊतये। "सुञः" इति षत्वम्। "नश्च धातुस्थोरुषुभ्यः" इति णत्वम् ॥

## द्व्यचोऽतस्तिङः ॥ १३५ ॥

ऋचीति वर्त्तते। द्व्यचस्तिङन्तस्यात ऋग्विषये दीर्घो भवति। विद्मा हि त्वा सत्पतिं शूर गोनाम्। विद्मा स तस्य पितरम्। द्व्यच इति किम्? देवा भवत वाजिनः। अत इति किम्? आ देवान् वक्षि यक्षि च ॥

---

मित्रे—मित्र शब्द के उत्तरपद होने पर भी पूर्वपदस्थानीय विश्व शब्द को दीर्घ हो जाता है, समुदाय से यदि ऋषिविशेष का अभिधान होता है।

मन्त्रे—मन्त्र विषयप्रयोग में मतुप् प्रत्यय के परे सोम, अश्व, इन्द्रिय तथा विश्वदेव्य शब्दों को दीर्घ हो जाता है।

ओषधेश्च—प्रथमाभिन्न विभक्ति के परे ओषधि शब्द को भी दीर्घ हो जाता है मन्त्रविषयक प्रयोग में।

ऋचि—ऋग्विषय प्रयोग में तु, नु, घ, मक्षु, तङ्, कु, त्र तथा उरुष्य शब्दों को दीर्घ हो जाता है।

इकः—सुञ् ( निपात ) के परे इगन्त शब्द को दीर्घ हो जाता है मन्त्रविषयप्रयोग में।

द्व्यचोतः—द्व्यच् तिङन्त के अत् को दीर्घ हो जाता है ऋग्विषय प्रयोग में।

---

( १ ) अत्र स्यालः पत्नीभ्राता। न्यासे तु 'लस श्लेषणक्रीडनयोः' इत्यस्य आशिषि लिङि रूपमभिप्रेत्य 'लस्यात्' इत्युक्तम्। ( श्रीना० )

( २ ) मन्त्रत्वं ऋक्त्वव्यापकमिति न 'निपातस्य' इति गतार्थता। ( श्रीना० )

## निपातस्य च ॥ १३६ ॥

ऋचीत्येव । निपातस्य च ऋग्विषये दीर्घ आदेशो भवति । एवा ते । अच्छा ते ॥

## अन्येषामपि दृश्यते ॥ १३७ ॥

अन्येषामपि दीर्घो दृश्यते स शिष्टप्रयोगादनुगन्तव्यः । यस्य दीर्घत्वं न विहितं दृश्यते च प्रयोगे तदनेन कर्त्तव्यम् । केशाकेशि । कचाकचि । नारकः । पूरुषः । श्वुनो दन्तदंष्ट्रा-कर्णकुन्दवराहपुच्छपदेषु । श्वादन्तः । श्वादंष्ट्रः । श्वाकर्णः । श्वाकुन्दः । श्वावराहः । श्वापुच्छः । श्वापदः ॥

## चौ ॥ १३८ ॥

चौ परतः पूर्वपदस्य दीर्घो भवति । चावित्यञ्चतिर्लुप्तनकारो गृह्यते । दधीचः । पश्य । दधीचा । दधीचे । मधूचः पश्य । मधुचा । मधूचे । अन्तरङ्गोऽपि हि यणादेशो दीर्घविधान-सामर्थ्यान्न प्रवर्त्तते ॥

## संप्रसारणस्य ॥ १३९ ॥

उत्तरपद इति वर्त्तते । संप्रसारणान्तस्य पूर्वपदस्योत्तरपदे दीर्घो भवति । कारीषगन्धी-पुत्रः । कारीषगन्धीपतिः । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । करीषस्येव गन्धोऽस्य, कुमुदस्येव गन्धोऽस्य । अल्पाख्यायामुपमानाच्च इति इकारः समासान्त । करीषगन्धेरपत्यं कारीषगन्ध्या कुमुदगन्धेरपत्यं, कौमुदगन्ध्या, तस्याः पुत्रः, तस्याः पतिरिति विग्रहः । इको ह्रस्वोऽङ्यो गालवस्येत्येतन्न भवति । व्यवस्थितविभाषा हि सा । अकृत एव दीर्घत्वे ह्रस्वाभावपक्षे कृतार्थेनापि दीर्घेण पक्षान्तरे परत्वाद् ह्रस्वो बाध्यते । पुनः प्रसङ्गविज्ञानं च न भवति । "सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव" इति ॥

इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठस्याध्यायस्य
तृतीयः पादः ॥ ६ ॥ ३ ॥

---

निपातस्य—ऋग्विषय में निपात को भी दीर्घ हो जाता है ।

अन्येषामपि—अन्य प्रकार के शब्दों में भी दीर्घ देखा जाता है अतः उनका साधुत्व शिष्ट-प्रयोगानुसार मान्य है ।

शुनो—दन्त, दंष्ट्रा, कर्ण, कुन्द, वराह, पुच्छ तथा पद शब्दों के श्वन् शब्द को भी दीर्घ का विधान करना चाहिए ।

चौ—लुप्तनकारक 'अञ्च्' धातु के परे पूर्वपद को दीर्घ हो जाता है ।

सम्प्रसारणस्य—उत्तरपद के परे सम्प्रसारणान्त पूर्वपद को दीर्घ हो जाता है ।

षष्ठ अध्यायका तृतीय पाद समाप्त हुआ ।

# अथ षष्ठाध्यायस्य चतुर्थः पादः

## अङ्गस्य ॥ १ ॥

अधिकारोऽयमासप्तमाध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामोऽङ्गस्येत्येवं तद्वेदितव्यम्। वक्ष्यति—हलः। हूतः, जीनः, संवीतः। अङ्गस्येति किम्? निरुतम्, दुरुतम्। नामि दीर्घः—अग्नीनाम्, वायूनाम्। अङ्गस्येति किम्? क्रिमिणां पश्य। अतो भिस ऐस्—वृक्षैः, प्लक्षैः। अङ्गस्येति किम्? ब्राह्मणभिस्सा, ओदनभिस्सा। अङ्गाधिकारः कृतोऽन्यार्थो नामि दीर्घत्वाद्यपि व्यवस्थापयतीति तदर्थमर्थवद्ग्रहणपरिभाषा नाश्रयितव्या भवति। अङ्गस्येति सम्बन्धसामान्ये षष्ठी यथायोगं विशेषेष्ववतिष्ठते। अथवा प्रातिपदिकार्थमात्रमविवक्षितविभक्त्यर्थमधिक्रियते। तदुत्तरत्र यथायोगं विपरिणम्यते। ततोऽकारान्तादङ्गाद् भिस ऐसित्येवमाद्यपि सम्यक् संपन्नं भवति॥

## हलः ॥ २ ॥

अङ्गावयवाद्धलो यदुत्तरं संप्रसारणं तदन्तस्याङ्गस्य दीर्घो भवति। हूतः। जीनः। संवीतः। हल इति किम्? उतः। उतवान्। अङ्गावयवादिति किम्? निरुतम्। तदन्तस्येति किम्? विद्धः। विचितः। अण इत्येव। तृतीयः। तृतीयेति वा। निपातनादत्र दीर्घाभावः। अङ्गग्रहणमावर्त्तयितव्यं, हल्विशेषणार्थम्, अङ्गकार्यप्रतिपत्त्यर्थं च॥

## नामि ॥ ३ ॥

नामीत्येतद् षष्ठीबहुवचनमागतनुट्कं गृह्यते, तस्मिन् परतोऽङ्गस्य दीर्घो भवति। अग्नीनाम्। वायूनाम्। कर्तॄणाम्। अण इत्येतदत्र निवृत्तम्। (आगत) नुट्कग्रहणमुत्तरार्थम्, कृते च नुटि दीर्घप्रतिपत्त्यर्थम्। अन्यथा हि नुडेव न स्यात्॥

नामि दीर्घ आमि चेत् स्यात् कृते दीर्घे न नुड् भवेत्।
वचनाद्यत्र तन्नास्ति नोपाधायाश्च चर्मणाम्॥

## न तिसृचतसृ ॥ ४ ॥

तिसृ चतसृ इत्येतयोर्नामि दीर्घो न भवति। तिसृणाम्। चतसृणाम्। इदमेव नामीतिदीर्घप्रतिषेधवचनं ज्ञापकम्—अचि र ऋत इत्येतस्माद् पूर्वविप्रतिषेधेन नुडागमो भवतीति॥

## छन्दस्युभयथा ॥ ५ ॥

छन्दसि विषये तिसृचतस्रोर्नामि परत उभयथा दृश्यते, दीर्घश्चादीर्घश्च। तिसृणां मध्यंदिने, तिसॄणां मध्यंदिने। चतसृणां मध्यंदिने, चतसॄणां मध्यन्दिने॥

---

अङ्गस्य—षष्ठाध्यायसमाप्तिपर्यन्त 'अङ्गस्य' (अङ्गसंज्ञक का) अधिकार समझना चाहिए।
हलः—अङ्गावयवभूत हल् से उत्तरवर्ती जो सम्प्रसारण तदन्त अङ्ग को दीर्घ हो जाता है।
नामि—नुडागमविशिष्ट षष्ठी बहुवचन के परे अङ्ग को दीर्घ हो जाता है।
न तिसृ—नाम् (ष० ब० व०) के परे तिसृ तथा चतसृ शब्दों को दीर्घ नहीं होता है।
छन्दस्युभयथा—छन्दोविषय प्रयोग में नाम् (ष० ब० व०) के परे तिसृ तथा चतसृ शब्दों को दीर्घ भी देखा जाता है और दीर्घाभाव भी।

## नृ च ॥ ६ ॥

नृ इत्येतस्य नामि परे उभयथा भवति । त्वं नृणां नृपते । त्वं नॄणां नृपते । केचिदत्र छन्दसीति नानुवर्त्तयन्ति । तेन भाषायामपि विकल्पो भवति ॥

## नोपधायाः ॥ ७ ॥

नान्तस्याङ्गस्योपधाया नामि परतो दीर्घो भवति । पञ्चानाम् । सप्तानाम् । नवानाम् । दशानाम् । न इति किम् ? चतुर्णाम् । नामीत्येव—चर्मणाम् ।

## सर्वनामस्थाने चासंबुद्धौ ॥ ८ ॥

सर्वनामस्थाने च परतोऽसंबुद्धौ नोपधाया दीर्घो भवति । राजा । राजानौ । राजानः । राजानम् । राजानौ । सामानि तिष्ठन्ति । सामानि पश्य । सर्वनामस्थान इति किम् ? राजनि । सामनि । असंबुद्धाविति किम् ? हे राजन् ॥

## वा षपूर्वस्य निगमे ॥ ९ ॥

षपूर्वस्याऽचो नोपधाया निगमविषये सर्वनामस्थाने परतोऽसंबुद्धौ वा दीर्घो भवति । स तक्षाणं तिष्ठन्तमब्रवीत् । स तक्षणं तिष्ठन्तमब्रवीत् । ऋभुक्षाणमिन्द्रम् । ऋभुक्षणमिन्द्रम् । निगम इति किम् ? तक्षा । तक्षाणौ । तक्षाणः ॥

## सान्तमहतः संयोगस्य ॥ १० ॥

सकारान्तस्यासंयोगस्य महतश्च यो नकारः तस्योपधाया दीर्घो भवति सर्वनामस्थाने परतोऽसंबुद्धौ । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसि । पयांसि । यशांसि । महतः खल्वपि—महान् । महान्तौ । महान्तः । असंबुद्धाविति किम् ? हे महन् ॥

## अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ॥ ११ ॥

अप इत्येतस्य, तृन्नन्तस्य, तृजन्तस्य, स्वसृ, नप्तृ, नेष्टृ, त्वष्टृ, क्षत्तृ, होतृ, पोतृ, प्रशास्तृ इत्येतेषां चाङ्गानामुपधाया दीर्घो भवति, सर्वनामस्थाने परतोऽसंबुद्धौ । अप्—आपः । बह्वाम्पि तडागानीति केचिदिच्छन्ति । तत्र समासान्तो विधिरनित्य इति समासान्तो न क्रियते । नित्यमपि च नुममकृत्वा दीर्घत्वमिष्यते । तृन्—कर्ता कटान् । वदितारौ जनापवादान् । कर्त्तारः । तृच्—कर्त्तारौ कटस्य । कर्त्तारः । हर्त्तारौ भारस्य । हर्त्तारः । स्वसृ—स्वसा । स्वसारौ । स्वसारः । नप्तृ—नप्ता । नप्तारौ । नप्तारः । नेष्टृ—नेष्टा । नेष्टारौ । नेष्टारः । त्वष्टृ—त्वष्टा । त्वष्टारौ । त्वष्टारः । क्षत्तृ—क्षत्ता । क्षत्तारौ । क्षत्तारः । होतृ—होता । होतारौ । होतारः । पोतृ—पोता । पोतारौ । पोतारः । प्रशास्तृ—प्रशास्ता । प्रशास्तारौ । प्रशास्तारः । नप्त्रा-

---

नृ च—छन्दोविषयप्रयोग में नाम् के परे नृ शब्द में भी दीर्घ तथा दीर्घाभाव देखे जाते हैं ।

नोपधायाः—नाम् के परे नान्त अङ्ग की उपधा को दीर्घ हो जाता है ।

सर्वनाम—सम्बुद्धिभिन्न सर्वनामस्थान के परे भी नकारान्त अङ्ग की उपधा को दीर्घ हो जाता है ।

वा षपूर्वस्य—निगमविषयकप्रयोग में षकारपूर्वक नकारान्त अङ्ग की उपधा को असम्बुद्धि सर्वनामस्थान के परे विकल्प से दीर्घ होता है ।

सान्तमहतः—असम्बुद्धि सर्वनामस्थान के परे सकारान्त अङ्ग तथा महत् शब्द की उपधाओं को दीर्घ हो जाता है ।

अप्तृन्—अङ्गसंज्ञक अप् शब्द, तृन्-प्रत्ययान्त, तृच्प्रत्ययान्त, स्वसृ, नप्तृ, नेष्टृ, क्षत्तृ, होतृ, पोतृ तथा प्रशास्तृ शब्दों की उपधा को दीर्घ हो जाता है सम्बुद्धिभिन्न सर्वनामस्थान के परे ।

दीनां ग्रहणमव्युत्पत्तिपक्षे विध्यर्थम् । व्युत्पत्तिपक्षे नियमार्थम्-एवं भूतानामन्येषां दीर्घो मा भूदिति-पितरौ । पितरः । मातरौ । मातरः । असंबुद्धाविति किम् ? हे कर्त्तः । हे स्वसः ॥

## इन्हन्पूषार्यम्णां शौ ॥ १२ ॥

इन् हन् पूषन् अर्यमन् इत्येवमन्तानामङ्गानां शौ परत उपधाया दीर्घो भवति । बहुदण्डीनि । बहुच्छत्रीणि । बहुवृत्रहाणि । बहुभ्रूणहाणि । बहुपूषाणि । बह्वर्यमाणि । सिद्धे सत्यारम्भो नियमार्थः-इन्हन्पूषार्यम्णामुपधायाः शावेव दीर्घो भवति नान्यत्र । दण्डिनौ । छत्रिणौ । वृत्रहणौ । पूषणौ । अर्यमणौ ॥

दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् ।
शौ नियमं पुनरेव विदध्याद् भ्रूणहनीति तथास्य न दुष्येत् ॥
शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य ।
दीर्घविधेरुपधानियमान्मे हन्तियिदीर्घविधौ च न दोषः ।
सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।
यस्य हि सौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ॥

हन्तेरनुनासिकस्य क्विझलोः क्ङितीति दीर्घत्वं यत् तदपि नियमेन बाध्यते-वृत्रहणि, भ्रूणहनीति । कथम् ? योगविभागः क्रियते-इन्हन्पूषार्यम्णाम् । सर्वनामस्थान एव दीर्घो भवति, नान्यत्रेति । ततः शाविति द्वितीयो नियमः, शावेव सर्वनामस्थाने दीर्घो भवति, नान्यत्रेति । सर्वस्योस्योपधालक्षणस्य दीर्घस्य नियमेन निवृत्तिः क्रियते । यस्तु न उपधालक्षणः, स भवत्येव-वृत्रहायते, भ्रूणहायते । अथवाऽनुवर्त्तमानेऽपि सर्वनामस्थानग्रहणे सामर्थ्यादयमविशेषेण नियमः, शिशब्दो हि सर्वनामस्थानं नपुंसकस्य, न च तस्यान्यत्सर्वनामस्थानमस्तीत्यविशेषेण नियमः । तत्र तु नपुंसकस्येत्येतन्नाश्रीयते । तेनानपुंसकस्यापि दीर्घो न भवति । सर्वनामस्थान(१) विधाने तु नपुंसकस्य व्यापारोऽस्तीति तत्र नियमः क्रियमाणो नपुंसकस्य स्यात् ॥

## सौ च ॥ १३ ॥

सावसंबुद्धौ परत इन्हन्पूषार्यम्णामुपधाया दीर्घो भवति । दण्डी । वृत्रहा । पूषा । अर्यमा । असंबुद्धाविति किम् ? हे दण्डिन् । हे वृत्रहन् । हे पूषन् । हे अर्यमन् ॥

## अत्वसन्तस्य चाधातोः ॥ १४ ॥

अतु अस् इत्येवमन्तस्य अधातोरुपधायाः सावसंबुद्धौ परतो दीर्घो भवति । डवतु-भवान् । क्तवतु-कृतवान् । मतुप्-गोमान् , यवमान् । अत्र कृते दीर्घे नुमागमः कर्त्तव्यः । यदि हि परत्वान्नित्यत्वाच्च नुम् स्यात् , दीर्घस्य निमित्तमनुपधा विहन्येत । असन्तस्य-सुपयाः, सुयशाः, सुश्रोताः । अधातोरिति किम् ? पिण्डं ग्रसत इति पिण्डग्रः, चर्म्म वस्त इति चर्म्मवः । अनर्थकोऽप्यस् शब्दो गृह्यते, 'अनिनस्मिन्ग्रहणानि अर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति । अन्तग्रहणमुपदेशप्रयोगैकदेशस्याप्यत्वन्तस्य परिग्र-

---

इन्हन्—'शि' के परे इन्प्रत्ययान्त, हन्शब्दान्त, पूषन्शब्दान्त तथा अर्यमन्शब्दान्त अङ्गों की उपधा को दीर्घ हो जाता है ।

सौ च—सम्बुद्धिभिन्न सु के परे भी इन्प्रत्ययान्त, हन्शब्दान्त, पूषन्शब्दान्त तथा अर्यमन्शब्दान्त अङ्गों की उपधा को दीर्घ हो जाता है ।

अत्वसन्तस्य—'अतु'शब्दान्त तथा अस्-शब्दान्त धातुभिन्न अङ्गसंज्ञक की उपधा को दीर्घ हो जाता है सम्बुद्धिभिन्न सु के परे ।

---

( १ ) अत्र हरदत्तानुरोधेन संज्ञापदघटितः प्रसिद्धोपि पाठ उपेक्षितः । ( श्रीना० )

हार्थम्, अन्यथा मतुपो ग्रहणं न स्याद्(१) उपदेशे—रूपनिर्ग्रहहेतौ नायमत्वन्त इति। असंबुद्धावित्येव—हे गोमन्! हे सुपयः!

## अनुनासिकस्य क्विझलोः क्ङिति ॥ १५ ॥

अनुनासिकान्तस्याङ्गस्य उपधाया दीर्घो भवति क्विप्रत्यये परतो झलादौ च क्ङिति। प्रशान्। प्रतान्। झलादौ किति-शान्तः। शान्तवान्। शान्ता। शान्तिः। ङिति खल्वपि-शंशान्तः। तन्तान्तः। यङ्लुगन्तादयं तस्। अनुनासिकस्येति किम्? ओदनपक्। पक्वः। पक्ववान्। क्विझलोरिति किम्? गम्यते। रम्यते। क्ङितीति किम्? गन्ता। रन्ता॥

## अज्झनगमां सनि ॥ १६ ॥

अजन्तानामङ्गानां(२) हनिगम्योश्च सनि झलादौ परे दीर्घो भवति। अजन्तानाम्—विवीषति। तुष्टूषति। चिकीर्षति। जिहीर्षति। हन्—जिघांसति। गम्—अधिजिगांसते। ॐगमेरिङादेशस्येति वक्तव्यम्ॐ। इह मा भूत्-संजिगंसते वत्सो मात्रेति। स्वर्गं लोकं समजिगांसदिति छन्दसि यदनिङादेशस्यापि दीर्घत्वं दृश्यते, तदन्येषामपि दृश्यत इत्यनेन भवति। अथवा इहाज्ग्रहणं न कर्त्तव्यम्। "सनि दीर्घो भवति" इत्येतावदेव सूत्रं कर्त्तव्यम्। तत्राचा गृह्यमाणस्य विशेषणे सति सिद्धमजन्तस्य दीर्घत्वम्, तत् क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्। अजन्तस्याङ्गस्य दीर्घो भवति। अजादेशस्य गमेरिति, ततो न वक्तव्यम् एतद्-गमेरिङादेशस्येति॥

---

अनुनासिकस्य—क्विप्रत्यय तथा झलादि कित् एवम् झलादि ङित् प्रत्ययों के परे अनुनासिकान्त अङ्गसंज्ञक की उपधा को दीर्घ हो जाता है।

अज्झनगमाम्—झलादि सन् के परे अजन्त अङ्ग तथा 'हन्' एवम् 'गम्' धातुओं को दीर्घ हो जाता है।

गमेः—'इङ्' धातु के स्थान में विहित 'गम्' का ही प्रकृतसूत्र में ग्रहण विवक्षित है—ऐसा नियम करना चाहिए।

---

(१) अयमर्थः—मतुप् ङमतुप् च नोपदेशे नापि लौकिके प्रयोगे अत्वन्ततया श्रूयते इति तत्राप्रसङ्गः असति सूत्रे अन्तग्रहणे। क्रियमाणे तु तस्मिन् विज्ञायते यत् केवलयोः अत्वसोरभावात् विशेषणेन अङ्गविशेष्यकेन तदन्तविधेर्वा तदन्तस्य कार्यसिद्धौ यत्पुनराचार्यः अन्तग्रहणं करोति तज्ज्ञापयति—उपदेशे प्रयुज्यमानं यच्छब्दस्वरूपम् तदेकदेशस्यापि अत्वन्तत्वे लक्ष्यत्वम्—इति। तथा च मतुबादीनां परिग्रहः सिद्ध्यति। रूपनिर्ग्रहः = स्वरूपनिश्चयः। यद्यपि 'शिष्टाः शब्देषु प्रमाणम्' इति भाष्योक्तेः लोक एव शब्दस्वरूपनिश्चायकः तथापि शास्त्रीयप्रक्रियानिर्वाहार्थकानुबन्धघटितशब्दस्वरूपस्य शास्त्रकारोपदेशत एव निश्चयात् उपदेशस्य रूपनिर्ग्रहहेतुत्वं नानुपपन्नम् इति बोध्यम्। (श्रीना०)

(२) अत्र च उपधेति निवृत्तम्, इतरथा हि अजन्तानाम् अङ्गानाम् उपधास्थाने व्यञ्जनस्यैव स्वाभाविकत्वेन तस्य दीर्घत्वं प्रसज्ज्येत। दीर्घानुवृत्तिलब्धोपस्थितिकस्य "अचः" इत्यस्य च हनिगमिभ्यामपि विशेषितत्वेन न तत्रापि व्यञ्जनयोर्दीर्घप्रसक्तिः किन्तु उपधाभूतोऽचोरेवेति सर्वं सुस्थम्। ये तु सत्यप्युपधाग्रहणे अजन्तानामुपधाभूतस्य व्यञ्जनस्य अयोग्यत्वादेव न दीर्घप्रसङ्ग इति व्याचक्षते तेषाम् अजन्तानां कुत्र कथं च दीर्घत्वम् उपपद्यते इति चिन्त्यम्। द्विर्वचनापेक्षया च दीर्घस्य परत्वेन कृतदीर्घस्यैव पुनःप्रसङ्गत्वेन द्विर्वचनमिति नाभ्यासे दीर्घत्वशङ्काऽपि। यदि तु कृताऽकृतप्रसङ्गितया नित्यस्य द्विर्वचनस्य दीर्घस्य च समबलत्वेन न परस्परं बाध्यबाधकभावः इत्यभ्युपगम्यते तदास्तु अभ्यासस्यापि दीर्घत्वम्, तावतापि न हानिः, 'ह्रस्वः' इत्यनुशासनस्य अभ्यासे ह्रस्वत्वबाधायकस्य जागरूकत्वात्। (श्रीना०)

## तनोतेर्विभाषा ॥ १७ ॥

तनोतेरङ्गस्य सनि झलादौ विभाषा दीर्घो भवति। तितांसति । तितंसति । झलीत्येव—तितनिषति । "सनीवन्तर्द्ध" इत्यत्र तनोतेरुपसंख्यानादिडागमो भवति विकल्पेन ॥

## क्रमश्च क्त्वि ॥ १८ ॥

क्रम उपधायाः(१) विभाषा दीर्घो भवति क्त्वाप्रत्यये झलादौ परतः । क्रन्त्वा । क्रान्त्वा । झलीत्येव—क्रमित्वा । प्रक्रम्य, उपक्रम्येति बहिरङ्गोऽपि ल्यबादेशोऽन्तरङ्गानपि विधीन् बाधत इति पूर्वमेव दीर्घत्वं न प्रवर्त्तते ॥

## च्छ्वोः शूडनुनासिके च ॥ १९ ॥

छ इत्येतस्य सतुक्कस्य वकारस्य च स्थाने यथासंख्यं श् ऊठ् इत्येतावादेशौ भवतः अनुनासिकादौ प्रत्यये परतः, क्वौ झलादौ च क्ङिति । प्रश्नः । विश्नः । अन्तरङ्गत्वात् "छे च" इति तुकि कृते सतुक्कस्य शादेशः। वकारस्य ऊठ्—स्योनः। सिवेरौणादिके नप्रत्यये लघूपधगुणात् पूर्वमूठ् क्रियते। तत्र कृतेऽन्तरङ्गत्वाद् यणादेशो नानाश्रयत्वाच्च न वार्णादाङ्गं बलीयो भवति। क्वौ छस्य—शब्दप्राट्। क्विब्वचि इत्यादिनौणादिकः क्विप्, दीर्घश्च। गोविट्। वकारस्य—अक्षद्यूः, हिरण्यद्यूः। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति 'नाजानन्तर्ये' इति प्रतिषिध्यते। झलादौ छस्य—पृष्टः, पृष्टवान्, पृष्ट्वा। वकारस्य—द्यूतः, द्यूतवान्, द्यूत्वा। क्ङितीत्येव—द्युभ्याम्, द्युभिः। केचिदत्र क्ङितीति नानुवर्त्तयन्ति। कथं द्युभ्यां द्युभिरिति? ऊठि कृते "दिव उत्" इति तपरत्वान्मात्राकालो भविष्यति। "छशां (२)षः" इत्यत्र छग्रहणं न कर्त्तव्यम्। अनेनैव हि सर्वत्र शकारो विधीयते। ऊठष्टित्करणम् एत्येधत्यूठ्सु इति विशेषणार्थम्। "वाह ऊठ्"इत्ययमपि ठिदेव॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥ २० ॥

ज्वर, त्वर, स्रिवि, अव, मव इत्येतेषामङ्गानां वकारस्य उपधायाश्च स्थाने ऊठित्ययमादेशो भवति क्वौ परतोऽनुनासिके झलादौ च क्ङिति । जूः । जूरौ । जूरः। जूर्त्तिः। त्वर—तूः, तूरौ, तूरः, तूर्त्तिः। स्रिवि—स्रूः, स्रुवौ, स्रुवः, स्रूतः, स्रूतवान्, स्रूतिः । अव्—ऊः, उवौ, उवः, ऊतिः। मव—मूः, मुवौ, मुवः, मूतः, मूतवान्, मूतिः। ज्वरत्वरोरुपधा वकारात् परा, स्रिव्यवमवां पूर्वा ॥

---

तनोतेः—अङ्गभूत 'तनु' धातु को झलादि सन् के परे विकल्प से दीर्घ होता है।

क्रमश्च—झलादि क्त्वा प्रत्यय के परे 'क्रम्' धातु की उपधा को भी दीर्घ हो जाता है।

च्छ्वोः—अनुनासिकादि प्रत्यय, क्वि प्रत्यय, झलादि कित् तथा झलादि ङित् प्रत्ययों के परे रहने पर तुग्विशिष्ट छ् के तथा वकार के स्थान में क्रमशः 'श्' तथा ऊठ् आदेश हो जाते हैं।

ज्वरत्वर—ज्वर, त्वर, स्रिवि, अव तथा मव की वकारसहित उपधा के स्थान में ऊठ् आदेश हो जाता है क्वि प्रत्यय, झलादि कित् तथा ङित् प्रत्यय और अनुनासिकादि प्रत्यय के परे ।

---

(१) उपधाग्रहणन्त्विह फलितार्थकथनम्, 'अचश्च' इत्यस्याः परिभाषाया उपस्थितौ क्रमेः अचः उपधाभूतत्वात्। अनुवृत्तिकल्पने तु पूर्वनिवृत्तस्योपधाग्रहणस्य मण्डूकप्लुतिसमाश्रयणे गौरवम् अन्यथासिद्धिश्च। (श्रीना०)

(२) एतच्च व्रश्चेत्यादिसूत्रे पठ्यते। (श्रीना०)

## राल्लोपः ॥ २१ ॥

रेफादुत्तरयोश्छ्वोर्लोपो भवति क्वौ परतो झलादौ क्ङिति च परतः। मुर्छा–मूः, मुरौ, मुरः, मूर्त्तः, मूर्त्तवान्, मूर्त्तिः। "न ध्याख्यापृमूर्छिमदाम्" इति निष्ठानत्वाभावः। हुर्छा–हूः, हुरौ, हुरः, हूर्णः। हूर्णवान्। हूर्त्तिः। राल्लोपे सतुक्कस्य छस्याभावात् केवलो गृह्यते। वकारस्य–तुर्वी–तूः, तुरौ, तुरः, तूर्णः, तूर्णवान्, तूर्त्तिः। धुर्वी–धूः, धुरौ, धुरः, धूर्णः, धूर्णवान्, धूर्त्तिः॥

## असिद्धवदत्राभात् ॥ २२ ॥

असिद्धवदित्ययमधिकारो यदित ऊर्ध्वमनुक्रमिष्याम आ अध्यायपरिसमाप्तेस्तत् असिद्धवद्वेदितव्यम्। आ भादिति विषयनिर्देशः। आभसंशब्दनाद् यदुच्यते तत्र कर्त्तव्ये। अत्रेति समानाश्रयत्वप्रतिपत्त्यर्थम्। तच्चेदत्र यत्र भवति तदाभात् शास्त्रीयं विधीयते तदाश्रयमेव भवति। व्याश्रयं तु नासिद्धवद्भवतीत्यर्थः। असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं च। एधि, शाधीत्यत्र एत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति, असिद्धत्वाद्भवति। आगहि, जहीत्यत्रानुनासिकलोपे जभावे च, अतो हेः इति लुक् प्राप्नोति, असिद्धत्वान्न भवति। आ भादिति किम्? अभाजि, रागः। "अत उपधायाः" इति वृद्धौ कर्त्तव्यायां नलोपो नासिद्धो भवति। अत्र ग्रहणं किम्? पपुषः पश्य, चिच्युषः पश्य, लुलुवुषः पश्य। वसुसंप्रसारणमाल्लोपे यणादेशे उवङादेशे च कर्त्तव्ये नासिद्धं भवति। आल्लोपादीनि वसौ, वस्वन्तस्य विभक्तौ संप्रसारणमिति समानाश्रयत्वं नास्ति। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति–एतदप्यत्र न भवति। किं कारणम्? एषा हि परिभाषा आ भाच्छास्त्रीया। तस्यां प्रवर्त्तमानायां वसुसंप्रसारणादीनामाभाच्छास्त्रीयाणामेवासिद्धत्वादन्तरङ्गबहिरङ्गयोर्युगपत् समुपस्थानं नास्तीति परिभाषा न प्रवर्तते॥ *वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्यम्* वुग् उवङादेशे–बभूव, बभूवतुः, बभूवुः। युट् यणादेशे–उपदिदीये, उपदिदीयाते, उपदिदीयिरे। आभादित्ययमभिविधावाङ्। तेन भाधिकारेऽप्यसिद्धवद्भवति॥

## श्नान्नलोपः ॥ २३ ॥

श्नादिति श्नमयमुत्सृष्टमकारो गृह्यते। तत्र उत्तरस्य नकारस्य लोपो भवति। अनक्ति। भनक्ति। हिनस्ति। शकारवतो ग्रहणं किम्? यज्ञानाम्। सुपि चेति परत्वात् कृतेऽपि दीर्घत्वे स्थानिवद्भावान्नलोपः स्यादेव। विश्नानां प्रश्नानामित्यत्र लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवं न भवति॥

## अनिदितां हल उपधायाः क्ङिति ॥ २४ ॥

अनिदितामङ्गानां हलन्तानामुपधाया नकारस्य लोपो भवति क्ङिति प्रत्यये परतः।

---

राल्लोपः—रेफ से उत्तरवर्त्ती छ तथा व का क्वि प्रत्यय, झलादि कित्–ङित् प्रत्यय तथा अनुनासिक प्रत्यय के परे रहते लोप हो जाता है।

असिद्ध—यहाँ से लेकर 'भस्य' के अधिकारक्षेत्रपर्यन्त 'असिद्धवत्' का अधिकार समझना चाहिए।

वुग्युटौ—उवङ् के कर्त्तव्य होने पर वुक् तथा यणादेश कर्तव्य होने पर युट् को सिद्ध समझना चाहिए।

श्नान्नलोपः—श्न (म्) के उत्तरवर्त्ती नकार का लोप हो जाता है।

अनिदिताम्—इदिद्भिन्न हलन्त अङ्ग की उपधा के स्थान में वर्तमान नकार का लोप हो जाता है कित् तथा ङित् प्रत्ययों के परे।

स्रस्तः । ध्वस्तः । सनीस्रस्यते । दनीध्वस्यते । अनिदितामिति किम् ? नन्द्यते । नानन्द्यते । हल इति किम् ? नीयते । नेनीयते । उपधाया इति किम् ? नह्यते । नानह्यते । क्ङितीति किम् ? स्रंसिता । ध्वंसिता । ॐअनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोः(१) उपसंख्यानं कर्त्तव्यम्ॐ । विलगितः । विकपितः । उपतापशरीरविकारयोरिति किम् ? विलङ्गितः । विकम्पितः । ॐरञ्जेर्णौ मृगरमण उपसंख्यानं कर्त्तव्यम्ॐ । रजयति मृगान् । जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेति मित्वाद्धुपधाह्रस्वत्वम् । मृगरमण इति किम् ? रञ्जयति वस्त्राणि । ॐघिनुणि च रञ्जेरुपसंख्यानं कर्त्तव्यम्ॐ । रागी । स्यजरजभजेति निपातनाद्वा सिद्धम् । ॐरजकरजनरजःसूपसंख्यानं कर्त्तव्यम्ॐ । रजकः । रजनम् । रजः ॥

## दंशसञ्जस्वञ्जां शपि ॥ २५ ॥

दंश सञ्ज स्वञ्ज इत्येतेषामङ्गानां शपि परत उपधाया नकारस्य लोपो भवति । दशति । सजति । परिष्वजते ॥

## रञ्जेश्च ॥ २६ ॥

रञ्जेश्च शपि परत उपधाया नकारस्य लोपो भवति । रजति । रजतः । रजन्ति । पृथग्योगकरणमुत्तरार्थम् ॥

## घञि च भावकरणयोः ॥ २७ ॥

भावकरणवाचिनि घञि परतो रञ्जे रुपधाया नकारस्य लोपो भवति । भावे-आश्चर्यो रागः । विचित्रो रागः । करणे-रज्यतेऽनेनेति रागः । भावकरणयोरिति किम् ? रजन्ति तस्मिन्निति रङ्गः ॥

## स्यदो जवे ॥ २८ ॥

जवेऽभिधेये स्यद इति घञि निपात्यते । स्यन्देर्नलोपो वृद्ध्यभावश्च । इक्प्रकरणाच्च धातुलोप इति प्रतिषेधो नास्ति । गोस्यदः । अश्वस्यदः । जव इति किम् ? तैलस्यन्दः । घृतस्यन्दः ॥

---

अनिदितां नलोपे—अनिदित् अङ्गों के उपधास्थानीय नकार के लोप के प्रसङ्ग में इदित् होने पर भी 'लङ्गि' ( लगि ) तथा 'कम्पि' के उपधा-स्थानीय नकार का लोप प्रतिपादनीय है, यदि समुदायार्थ क्रमशः उपताप एवं शरीर-विकार हो ।

रञ्जेर्णौ—मृगक्रीड़ार्थक 'रञ्जि' के नकार का भी णिच् के परे लोप का प्रतिपादन करना चाहिए ।

घिनुणि—घिनुण् प्रत्यय के परे भी 'रञ्जि' के नकार का लोप प्रतिपाद्य है ।

रजक—रजक, रजन तथा रजः शब्दों की सिद्धि के लिए भी 'रञ्जि' के नकार का लोप समझना चाहिए ।

दंश—शप् के परे अङ्गसंज्ञक 'दंश', 'सञ्ज' तथा 'स्वञ्ज' के उपधास्थानीय नकार का लोप हो जाता है ।

रञ्जेश्च—शप् के परे अङ्गसंज्ञक 'रञ्जि' के उपधाभूत नकार का भी लोप हो जाता है ।

घञि च—भावार्थक तथा करणार्थक घञ् प्रत्यय के परे भी 'रञ्जि' के उपधाभूत नकार का लोप हो जाता है ।

स्यदो—वेग के वाच्य होने पर घञ्-प्रत्ययान्त 'स्यद' शब्द का निपातन होता है ।

---

( १ ) उपतापः कष्टप्राप्तिः, शरीरविकारो रोगो व्याधिरिति यावत् । यद्वा उपतापो व्याधिः, तद्भिन्नं शरीरस्यान्यथात्वमन्यदिति नैकतरेण अन्यस्य गतार्थता ( श्रीना० )

## अवोदैधौद्मप्रश्रथहिमश्रथाः ॥ २९ ॥

अवोद एध ओद्म प्रश्रथ हिमश्रथ इत्येते निपात्यन्ते। अवोद इत्युन्देरवपूर्वस्य घञि नलोपो निपात्यते। अवोदः। एध इति इन्धेर्घञि नलोपो गुणश्च निपात्यते। न धातुलोप आर्द्धधातुक इति हि प्रतिषेधः स्यात्। ओद्म इति ऊन्देरौणादिके मन् प्रत्यये नलोपो गुणश्च निपात्यते। ओद्मः। प्रश्रथ इति प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च निपात्यते। हिमश्रथ इति हिमपूर्वदस्य श्रन्थेर्घञ्येव निपातनम्। हिमश्रथः ॥

## नाञ्चेः पूजायाम् ॥ ३० ॥

अञ्चेः पूजायामर्थे नकारस्य लोपो न भवति। अञ्चिता अस्य गुरवः। अञ्चितमिव शिरो वहति। अञ्चेः पूजायामिति इडागमः—पूजायामिति किम्? उदक्तमुदकं कूपात्। उद्धृतमित्यर्थः। यस्य विभाषेतीट्प्रतिषेधः ॥

## क्त्वि स्कन्दिस्यन्दोः ॥ ३१ ॥

क्त्वाप्रत्यये परतः स्कन्द स्यन्द इत्येतयोर्नकारलोपो न भवति। स्कन्त्वा। स्यन्त्वा। स्यन्देरूदित्वात् पक्षे इडागमः—स्यन्दित्वा। यत्र यदा इडागमस्तदा न क्त्वा सेडिति किस्वप्रतिषेधादेव नलोपाभावः ॥

## जान्तनशां विभाषा ॥ ३२ ॥

जान्तानामङ्गानां नशेश्च क्त्वाप्रत्यये परतो विभाषा नकारलोपो न भवति। रङ्क्त्वा। रक्त्वा। भङ्क्त्वा। भक्त्वा। नशः—नंष्ट्वा। नष्ट्वा। इट्पक्षे नशित्वा(१) ॥

## भञ्जेश्च चिणि ॥ ३३ ॥

भञ्जेश्च चिणि परतो विभाषा नकारलोपो भवति। अभाजि। अभञ्जि। अप्राप्तोऽयं नलोपः पक्षे विधीयते। ततो नेति नानुवर्त्तते ॥

## शास इदङ्हलोः ॥ ३४ ॥

शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति। अन्वशिषत्। अन्वशिषताम्। अन्वशिषन्। हलादौ किति—शिष्टः। शिष्टवान्। ङिति—तौ शिष्टः। वयं शिष्मः। इत्वे कृते शासिवसिघसीनां चेति षत्वम्। अङ्हलोरिति किम्? शासति। शशासतुः। शशासुः(२)। ॐक्वौ च शास इत्वं भवतीति वक्तव्यम्ॐ। आर्यान् शास्तीति

---

अवोदैधौद्म—घञ्प्रत्ययान्त अवोद, एध, ओद्म, प्रश्रथ एवम् हिमश्रथ शब्दों का निपातन होता है।

नाञ्चेः—पूजार्थ में 'अञ्चु' के नकार का प्राप्त लोप नहीं होता है।

क्त्वि—क्त्वा प्रत्यय के परे 'स्कन्द' एवं 'स्यन्द' के नकार का लोप हो जाता है।

जान्तनशाम्—जकारान्त अङ्ग तथा 'नश' के उपधाभूत नकार का क्त्वा प्रत्यय के परे रहने पर विकल्प से लोप होता है।

भञ्जेश्च—चिण् के परे 'भञ्ज' के उपधाभूत नकार का भी विकल्प से लोप हो जाता है।

शासः—अङ् तथा हलादि कित् एवं ङित् के परे 'शासु' धातु की उपधा को इत् आदेश हो जाता है।

क्वौ च—क्वि प्रत्यय के परे भी 'शासु' की उपधा के स्थान में इदादेश का प्रतिपादन करना चाहिए।

---

(१) इदं बहुषु पुस्तकेषु नास्ति।

(२) क्ङितीति किम्? शास्ति इत्यधिकमेकस्मिन्पुस्तके।

आर्यशीः । मित्रशीः । यस्मात् शासेरङ्विहितः शासु अनुशिष्टाविति, तस्यैवेदं ग्रहण-मिष्यते । आङः शासु इच्छायामित्यस्य न भवति-आशास्ते । आशास्यमानः । ॐक्विप्प्रत्यये तु तस्यापि भवतीति वक्तव्यम्ॐ । आशीः । आशिषौ । आशिषः । त्रियाशीःप्रैषेषु तिङा-काङ्क्षमिति निपातनाद्वा सिद्धम् ॥

## शा हौ ॥ ३५ ॥

शासो हौ परतः शा इत्ययमादेशो भवति । अनुशाधि । प्रशाधि । उपधाया इति निवृत्तम् , ततः शास इति स्थानेयोगा षष्ठी भवति । क्ङितीत्येतदपि निवृत्तम् । तेन यदा वा छन्दसीति पित्वं हिशब्दस्य तदाप्यादेशो भवत्येव । शाधीत्याद्युदात्तमपि छन्दसि दृश्यते ॥

## हन्तेर्जः ॥ ३६ ॥

हन्तेर्धातोर्ज इत्ययमादेशो भवति हौ परतः । जहि शत्रून् ॥

## अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥३७॥

अनुदात्तोपदेशानामङ्गानां वनतेस्तनोत्यादीनां चानुनासिकलोपो भवति झलादौ क्ङिति प्रत्यये परतः । यमु-यत्वा । यतः । यतवात् । यतिः । रमु-रत्वा । रतः । रतवान् । रतिः । अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः । वनति-वतिः । क्तिनो रूपमेतत् । क्तिचि तु न क्तिचि दीर्घश्चेति अनुनासिकलोपो न भवति । अन्यत्र झलादाविटा भवितव्यम् । तनोत्यादयः-ततः । ततवान्(१) । तनोतेरात्वं वक्ष्यति । क्षणु-क्षतः । क्षतवान् । ऋणु-ऋतः । ऋतवान् । तृणु-तृतः । तृतवान् । घृणु-घृतः । घृतवान् । वनु-वतः । वतवान् । मनु-मतः । मतवान् । क्षिति-अतत । अतथाः । अनुदात्तोपदेशवन-तितनोत्यादीनामिति किम् ? शान्तः । शान्तवान् । तान्तः । तान्तवान् । दान्तः । दान्त-वान् । अनुनासिकस्येति किम् ? पक्वः । पक्ववान् । झलीति किम् ? गम्यते । रम्यते । क्ङि-तीति किम् ? यन्ता । यन्तव्यम् । उपदेशग्रहणं किम् ? इह च यथा स्यात्-गतिः । इह च मा भूत्-शान्तः, शान्तवानिति ॥

## वा ल्यपि ॥ ३८ ॥

ल्यपि परतोऽनुदात्तोपदेशवनतितनोत्यादीनामनुना सिकलोपो वा भवति । व्यव-स्थितविभाषा चेयम्,तेन मकारान्तानां विकल्पो भवति । अन्यत्र नित्यमेव लोपः । प्रयत्य । प्रयम्य । प्ररत्य । प्ररम्य । प्रणत्य । प्रणम्य । आगत्य । आगम्य । आहत्य । प्रमत्य । प्रवत्य । प्रक्षत्य ॥

---

क्विप्प्रत्यये—क्विप्रत्यय के परे आङ्पूर्वक 'शासु' धातु की उपधा के स्थान में भी इदादेश का प्रतिपादन करना चाहिए ।

शा हौ—'हि' के परे 'शासु' धातु के स्थान में 'शा' आदेश हो जाता है ।

हन्तेर्जः—'हि' के परे 'हन्' धातु के स्थान में 'ज' आदेश हो जाता है ।

अनुदात्तोपदेश—अनुदात्तोपदेश अङ्गसंज्ञक धातुओं 'वन' धातु तथा 'तन' आदि धातुओं के अनुनासिक का लोप हो जाता है झलादि कित् तथा झलादि ङित् प्रत्ययों के परे ।

वा ल्यपि—ल्यप् के परे रहने पर अनुदात्तोपदेश धातुओं, 'वन' धातु तथा 'तन' आदि धातुओं के अनुनासिक का विकल्प से लोप होता है ।

---

( १ ) तत्वा, ततिरित्यधिकमेकस्मिन्पुस्तके ।

## न क्तिचि दीर्घश्च ॥ ३९ ॥

क्तिचि परतोऽनुदात्तोपदेशादीनामनुनासिकलोपो दीर्घश्च न भवति । यन्तिः । वन्तिः । तन्तिः । अनुनासिकलोपे प्रतिषिद्धेऽनुनासिकस्य क्विझलोः क्ङितीति दीर्घः प्राप्नोति, सोऽपि प्रतिषिध्यते ॥

## गमः क्वौ ॥ ४० ॥

गमः क्वौ परतोऽनुनासिकलोपो भवति । अङ्गगत् । कलिङ्गगत् । अध्वगतो हरयः । ॐगमादीनामिति वक्तव्यम्ॐ । इहापि यथा स्यात्-संयत्, परीतत् । ॐऊङ् च गमादीनामिति वक्तव्यम्ॐ । अग्रेगूः, अग्रेभ्रूः ॥

## विड्वनोरनुनासिकस्यात् ॥ ४१ ॥

विटि, वनि च प्रत्यये परतोऽनुनासिकान्तस्याङ्गस्याकार आदेशो भवति । अब्जाः । गोजाः । ऋतजाः । अद्रिजाः । गोषा इन्द्रो नृषा असि । कूपखाः । शतखाः । सहस्रखाः । दधिक्राः । अग्रेगा उन्नेतॄणाम् । जनसनखनक्रमगमो विडिति विट् प्रत्ययः । गोषा इन्द्रो नृषा असीत्यत्र सनोतेरन इति षत्वम् । वन्-विजावा । अग्रेजावा । अन्येभ्योऽपि दृश्यन्त इति वनिप् प्रत्ययः । अनुनासिकस्येति वर्त्तमाने पुनरनुनासिकग्रहणमनुनासिकमात्रपरिग्रहार्थम् । अन्यथा ह्यनुदात्तोपदेशवनतितनोत्यादीनामेव स्यात् ॥

## जनसनखनां सञ्झलोः ॥ ४२ ॥

झलि, क्ङिति इति चानुवर्त्तते । जन, सन, खन इत्येतेषामङ्गानां सनि झलादौ प्रत्यये परत आकार आदेशो भवति । जन्-जातः । जातवान् । जातिः । सन्, सनि-सिषासति । सातः । सातवान् । सातिः । खन्-खातः । खातवान् । खातिः । झल्ग्रहणं सन्विशेषणार्थं किमर्थमनुवर्त्यते ? इह मा भूत्-जिजनिषति । सिसनिषति । चिखनिषति । सनोतेः सनीवन्तर्द्धेति पक्षे इडागमः । तदिह सनोत्यर्थमेव सन्ग्रहणम्, अत्र झलादौ क्ङिति सनोतेर्विप्रतिषेधाद् आत्वमनुनासिकलोपं बाधते । घुमास्थागापाजहातिसां हलीति हल्ग्रहणं ज्ञापकमस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवतीति ॥

---

न क्तिचि—क्तिच् प्रत्यय के पर अनुदात्तोपदेश धातुओं, 'वन' धातु तथा 'तन' आदि धातुओं का अनुनासिकलोप भी नहीं होता और दीर्घादेश भी नहीं ।

गमः—क्वि प्रत्यय के परे 'गम्' धातु के अनुनासिक का लोप हो जाता है ।

गमादीनामिति—'गम्' आदि धातुओं के अनुनासिक का लोप हो जाता है—ऐसी व्याख्या करनी चाहिए ।

ऊ च—'गम्' आदि धातुओं के अनुनासिक का लोप तथा ऊकारादेश भी हो जाता है—ऐसा समझना चाहिए ।

विड्वनोः—विट् तथा वन् प्रत्ययों के परे अनुनासिकान्त अङ्ग के स्थान में आकार अन्तादेश हो जाता है ।

जनसन—अङ्गसंज्ञक 'जन्', 'सन्' तथा 'खन्' के स्थान में आकार अन्तादेश हो जाता है झलादि सन्प्रत्यय तथा झलादि कित्-ङित् प्रत्ययों के परे ।

## ये विभाषा ॥ ४३ ॥

यकारादौ क्ङिति प्रत्यये परतो जनसनखनामाकार आदेशो भवति विभाषा। जायते। जन्यते। जाजायते। जञ्जन्यते। सायते। सन्यते। सासायते। संसन्यते। खायते। खन्यते। चाखायते। चङ्खन्यते। जनेः श्यनि ज्ञाजनोर्जा इति नित्यं जादेशो भवति॥

## तनोतेर्यकि ॥ ४४ ॥

तनोतेर्यकि परतो विभाषा आकार आदेशो भवति। तायते। तन्यते। यकीति किम्? तन्तन्यते॥

## सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥

सनोतेरङ्गस्य क्तिचि प्रत्यये परत आकार आदेशो भवति लोपश्चास्यान्यतरस्याम्। सातिः। सन्तिः। सतिः। अन्यतरस्यांग्रहणं विस्पष्टार्थम्। येसंबद्धं(१) हि विभाषाग्रहण-मिहानुवृत्तमित्याशङ्क्येत॥

## आर्द्धधातुके ॥ ४६ ॥

आर्द्धधातुक इत्यधिकारो न ल्यपीति प्रागेतस्माद्यदित ऊर्ध्वमनुक्रमिष्याम आर्द्धधातुक इत्येवं तद्वेदितव्यम्। वक्ष्यति-अतो लोपः। चिकीर्षिता। आर्द्धधातुक इति किम्? भवति। भवतः। अदिप्रभृतिभ्यः शपो लुग्वचनं प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यादित्येतच्च ज्ञापकं शपो लोपाभावस्य। यस्य हलः-बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। आर्द्धधातुक इति किम्? बेभिद्यते। णेरनिटि-कारणा। हारणा। आर्द्धधातुक इति किम्? कारयति। हारयति। आतो लोपः-ययतुः। ययुः। ववतुः। ववुः। आर्द्धधातुक इति किम्? यान्ति। वान्ति। घुमास्थागापाजहातिसां हलि-दीयते। धीयते। आर्द्धधातुक इति किम्? अदाताम्। अधाताम्। वान्यस्य संयोगादेः-नेयात्। स्नायात्। आर्द्धधातुक इति किम्? स्नायात्। आशीर्लिङोऽन्यत्र न भवति। स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशे-ऽज्झनग्रहदृशां वा चिण्वदिट् च। कारिषीष्ट। हारिषीष्ट। आर्द्धधातुक इति किम्? क्रियेत। ह्रियेत। यगन्तस्याजन्तत्वाच्चिण्वद्भावे सति वृत्तिः स्यात्, ततश्च युक् प्रसज्येत॥

अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम्।
आल्लोप ईत्वमेत्वं च चिण्वद्भावश्च सीयुटि॥

---

ये विभाषा—यकारादि कित्-ङित् प्रत्ययों के परे 'जन्', 'सन्' तथा 'खन्' धातुओं के स्थान में विकल्प से अकारादेश होता है।

तनोतेः—यक् के परे 'तनु' धातु के स्थान में विकल्प से आकारादेश होता है।

सनः—अङ्गसंज्ञक 'सन्' धातु के स्थान में क्तिच् प्रत्यय के परे विकल्प से आकारादेश एवम् अन्त्यलोप होते हैं।

आर्धधातुके—यहाँ से लेकर 'न ल्यपि' सूत्र से पहले 'आर्धधातुके' का अधिकार अवगन्तव्य है।

---

(१) ये विभाषा इत्यतोऽनुवृत्तेरेव विभाषाग्रहणस्येष्टसिद्धौ अन्यतरस्यांग्रहणं व्यर्थमित्यस्योत्तरमेतत्। आशयस्तु ततो विभाषाग्रहणानुवृत्तौ 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः' इति न्यायेन 'ये' सहितस्य विभाषाग्रहणस्यानुवृत्तेराशङ्का स्यात्, तन्निवृत्त्यर्थं स्पष्टार्थमेवात्रान्यतरस्यामिति कृतम्॥ (श्रीना०)

## भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ४७ ॥

भ्रस्जो रेफस्योपधायाश्च रमन्यतरस्यां भवति । रोपधयोरिति स्थानषष्ठीनिर्देशादुपधा रेफश्च निवर्त्तते । मित्वाच्चायमचोऽन्त्यात् परो भवति । भ्रष्टा । भर्ष्टा । भ्रष्टुम् । भर्ष्टुम् । भ्रष्टव्यम् । भर्ष्टव्यम् । भ्रज्जनम् । भर्जनम् । भृष्टः, भृष्टवानित्यत्र पूर्वविप्रतिषेधेन संप्रसारणं भवति । उपदेश इत्येव—बरीभृज्ज्यते ॥

## अतो लोपः ॥ ४८ ॥

अकारान्तस्यार्द्धधातुके लोपो भवति । चिकीर्षिता । चिकीर्षितुम् । चिकीर्षितव्यम् । धिनुतः । कृणुतः । अत इति किम् ? चेता । स्तोता । तपरकरणं किम् ? याता । वाता । आर्द्धधातुक इति किम् ? वृक्षत्वम् । वृक्षता । ॐवृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेनॐ। चिकीर्षकः । जिहीर्षकः । चिकीर्ष्यते । जिहीर्ष्यते ॥

## यस्य हलः ॥ ४९ ॥

हल उत्तरस्य यशब्दस्यार्द्धधातुके लोपो भवति । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् । यस्येति संघातग्रहणमेतत् । तत्रालोन्त्यस्येत्येतन्न भवत्यतो लोप इत्यनेनैव तस्य सिद्धत्वात् । हल इति वा पञ्चमीनिर्देशस्तत्रादेः परस्येति यकारोऽनेन लुप्यते । संघातग्रहणं किम् ? ईर्ष्यिता । मव्यिता । हल इति किम्? लोलूयिता । पोपूयिता ॥

## क्यस्य विभाषा ॥ ५० ॥

क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्द्धधातुके । समिध्यिता । समिधिता । दृषद्यिता । दृषदिता । समिधमात्मन इच्छति, समिध इवाचरति, इति वा क्यच्क्यङौ यथायोगं कर्त्तव्यौ ॥

## णेरनिटि ॥ ५१ ॥

अनिडादावार्द्धधातुके णेर्लोपो भवति । इयङ्गुणवृद्धिदीर्घाणामपवादः । अततक्षत् । अररक्षत् । आशिशत् । आटिटत् । कारणा । हारणा । कारकः । हारकः । कार्यते । हार्यते । ज्ञीप्सति । अनिटीति किम् ? कारयिता । हारयिता ॥

## निष्ठायां सेटि ॥ ५२ ॥

निष्ठायां सेटि परतो णेर्लोपो भवति । कारितम् । हारितम् । गणितम् । लक्षितम् । सेटीति किम् ? संज्ञपितः पशुः । इड्ग्रहणसामर्थ्यादिह पूर्वेणापि न भवति । सनीवन्तर्द्धेति ज्ञपेरिटि विकल्पिते यस्य विभाषेति निष्ठायां प्रतिषेधः । अथ पुनरेकाच इति तत्रानुवर्त्तते, तदा नित्यमत्र भवितव्यमेवेडागमेनेति सेड्ग्रहणमनर्थकम् ? तत् क्रियते कालावधारणार्थम्-

---

भ्रस्जो—'भ्रस्ज' धातु के रेफ तथा उपधा के स्थान में विकल्प से रम् आदेश हो जाता है ।

अतो—आर्धधातुक के परे अकारान्त अङ्ग का लोप हो जाता है ।

वृद्धि—वृद्धि तथा दीर्घ से पहले पूर्वविप्रतिषेध के आधार पर 'अतो लोपः' की प्रवृत्ति होती है ।

यस्य—आर्धधातुक के परे हल् से उत्तरवर्ती यकार का लोप हो जाता है ।

क्यस्य—हल् से उत्तरवर्त्ती 'क्यच्' के यकार का आर्धधातुक के परे विकल्प से लोप होता है ।

णेरनिटि—अनिट् आर्धधातुक के परे 'णि' ( णिच् ) का लोप हो जाता है ।

निष्ठायाम्—इडागमविशिष्ट निष्ठा प्रत्यय के परे भी 'णि' ( णिच् ) का लोप हो जाता है ।

इडागमे कृते णिलोपो यथा स्यात्। अकृते हि तत्र णिलोपे सति कारितमित्यत्र एकाच उपदेशेऽनुदात्तादितीटः प्रतिषेधः प्रसज्येत ॥

## जनिता मन्त्रे ॥ ५३ ॥

जनितेति मन्त्रविषये इडादौ तृचि णिलोपो निपात्यते। यो नः पिता जनिता। मन्त्र इति किम्? जनयिता ॥

## शमिता यज्ञे ॥ ५४ ॥

यज्ञकर्म्मणि शमितेति इडादौ तृचि णिलोपो निपात्यते। शृतं हविः शमितः। तृचि सम्बुद्ध्यन्तमेतत्। यज्ञ इति किम्? शृतं हविः शमयितः ॥

## अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५५ ॥

आम् अन्त आलु आय्य इत्नु इष्णु इत्येतेषु परतो णेरयादेशो भवति। कारयांचकार। हारयांचकार। अन्त—गण्डयन्तः। मण्डयन्तः। आलु—स्पृहयालुः। आय्य—स्पृहयाय्यः। गृहयाय्यः। इत्नु—स्तनयित्नुः। इष्णु—पोषयिष्णवः(१)। नेति(२) वक्तव्ये अयादेशवचनमुत्तरार्थम् ॥

## ल्यपि लघुपूर्वात् ॥ ५६ ॥

ल्यपि परतो लघुपूर्वादुत्तरस्य णेरयादेशो भवति। प्रशमय्य गतः। संदमय्य गतः। प्रवेभिदय्य गतः। प्रगणय्य गतः। ह्रस्वयलोपाल्लोपानामसिद्धत्वं न भवत्यसमानाश्रयत्वात्। ह्रस्वादयो हि णौ, ल्यपि णेरयादेशो भवति। लघुपूर्वादिति किम्? प्रपात्य गतः ॥

## विभाषाऽऽपः ॥ ५७ ॥

आप उत्तरस्य णेर्ल्यपि परतो विभाषाऽयादेशो भवति। प्रापय्य गतः। प्राप्य गतः। इङादेशस्य लाक्षणिकत्वान्न भवति—अध्याप्य गतः ॥

## युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥

यु, प्लु इत्येतयोर्ल्यपि परतश्छन्दसि विषये दीर्घो भवति। दान्त्यनुपूर्वं वियूय। यत्रा यो दक्षिणा परिप्लूय। छन्दसीति किम्? संयुत्य, आप्लुत्य ॥

---

जनिता—इडागमविशिष्ट तृच् प्रत्यय के परे 'जन्' के 'णि' का लोप निपातित होता है मन्त्रविषय प्रयोग में।

शमिता—यज्ञ-विषय में इडागमविशिष्ट तृच् प्रत्यय के परे 'शम' धातु से विहित 'णि' का लोप निपातित होता है।

अयामन्ता—आम् , अन्त, आलु, आय्य, इत्नु तथा इष्णु के परे 'णि' के स्थान में अय् आदेश हो जाता है।

ल्यपि—लघुस्वरपूर्वक वर्ण से उत्तरवर्ती 'णि' के स्थान में ल्यप् प्रत्यय के परे अय् आदेश हो जाता है।

विभाषा—'आप्' से उत्तरवर्ती 'णि' के स्थान में ल्यप् के परे विकल्प से अयादेश होता है।

युप्लुवोः—ल्यप् प्रत्यप के परे 'यु' तथा 'प्लु' धातुओं को दीर्घ आदेश हो जाता है छन्दोविषय प्रयोग में।

---

(१) पारयिष्णव इत्यधिकं पुस्तकान्तरे।

(२) णिलोपो नेति कथनेनैव गुणे कृते अयादेशेनेष्टसिद्धिरिति भावः। (श्रीना०)

## क्षियः ॥ ५९ ॥

क्षियश्च दीर्घो भवति ल्यपि परतः। प्रक्षीय ॥

## निष्ठायामण्यदर्थे ॥ ६० ॥

ण्यतः कृत्यस्यार्थो भावकर्मणी, ताभ्यामन्यत्र या निष्ठा तस्यां क्षियो दीर्घो भवति। आक्षीणः। प्रक्षीणः। परिक्षीणः। अकर्मकत्वात् क्षियः कर्त्तरि क्तः। प्रक्षीणमिदं देवदत्तस्येति क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य इत्यधिकरणे क्तः। अण्यदर्थे इति किम्? अक्षितमसि मामेक्षेष्ठाः। क्षितमिति भावे दीर्घाभावात् क्षियो दीर्घादिति निष्ठानत्वमपि न भवति ॥

## वाऽऽक्रोशदैन्ययोः ॥ ६१ ॥

आक्रोशे गम्यमाने दैन्ये च क्षियो निष्ठायामण्यदर्थे वा दीर्घो भवति। क्षितायुरेधि। क्षीणायुरेधि। दैन्ये-क्षितकः। क्षीणकः। क्षितोऽयं तपस्वी। क्षीणोऽयं तपस्वी ॥

## स्यसिच्सीयुट्तासिषु भावकर्म्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६२ ॥

स्य, सिच्, सीयुट्, तासि इत्येषु भावकर्म्मविषयेषु परत उपदेशेऽजन्तानामङ्गानां हन् ग्रह दृश् इत्येतेषां च चिण्वत्कार्यं भवति वा, यदा चिण्वत् तदा इडागमो भवति। कस्य? स्यसिच्सीयुट्तासीनामेवेति वेदितव्यम्। ते हि प्रकृताः। अङ्गस्य तु लचय-विरोधान्न क्रियते। कानि पुनरस्य योगस्य प्रयोजनानि?

चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति।
इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तोऽविघाती ॥

अजन्तानां तावत्-चायिष्यते। चेष्यते। अचायिष्यत। अचेष्यत। दायिष्यते। दास्यते। अदायिष्यत। अदास्यत। शामिष्यते। शमिष्यते। शमयिष्यते। अशामिष्यत। अशमिष्यत। अशमयिष्यत। हन्-घानिष्यते। हनिष्यते। अघानिष्यत। अहनिष्यत। ग्रह-ग्राहिष्यते। ग्रहीष्यते। अग्राहिष्यत। अग्रहीष्यत। ग्रहोऽलिटि दीर्घ इति प्रकृतस्येटो दीर्घत्वम्। दृश्-दर्शिष्यते। द्रक्ष्यते। अदर्शिष्यत। अद्रक्ष्यत। सिच्यजन्तानाम्-अचायिषाताम्। अचेषाताम्। अदायिषाताम्। अदिषाताम्। अशामिषाताम्। अशमिषाताम्। अशमयिषाताम्। हन्-अघानिषाताम्। अवधिषाताम्। अहसाताम्। ग्रह-अग्राहिषाताम्। अग्रहीषाताम्। दृश्-अदर्शिषाताम्। अदृक्षाताम्। सीयुटि-अजन्तानाम्-चायिषीष्ट। चेषीष्ट। दायिषीष्ट। दासीष्ट। शामिषीष्ट। शमिषीष्ट। शमयिषीष्ट। हन्-घानिषीष्ट। वधिषीष्ट। ग्रह-ग्राहिषीष्ट। ग्रहीषीष्ट। दृश्-दर्शिषीष्ट। दृक्षीष्ट। तासावजन्तानाम्-चायिता। चेता। दायिता। दाता। शामिता। शमिता। शमयिता। हन्-घानिता। हन्ता। ग्रह-ग्राहिता। ग्रहीता।

---

क्षियः—ल्यप् के परे 'क्षि' धातु के स्थान में भी दीर्घ हो जाता है।

निष्ठायाम्—भाव तथा कर्म में विहित निष्ठा प्रत्यय से भिन्न अर्थ में विहित निष्ठा प्रत्यय के परे भी 'क्षि' को दीर्घ हो जाता है।

वाऽऽक्रोश—आक्रोश के गम्यमान होने पर तथा दैन्य अर्थ में भावकर्मार्थभिन्नार्थक निष्ठा प्रत्यय के परे 'क्षि' धातु को दीर्घ होता है विकल्प से।

स्यसिच्—भाव तथा कर्म के विषय में विहित लकार के प्रसङ्ग में विहित स्य, सिच्, सीयुट् तथा तासि के परे उपदेश में अजन्त अङ्गों, 'हन्', 'ग्रह्' तथा 'दृश्' धातुओं से चिण् विधि के समान विकल्प से कार्य होता है।

दृश्-दर्शिता। दर्शा। स्यसिच्सीयुट्तासिष्विति किम्? चेतव्यम्। दातव्यम्। भावकर्मणोरिति किम्? चेष्यति। दास्यति। उपदेश इति किम्? करिष्यते इति गुणे कृते रपरत्वे च न प्राप्नोति। उपदेशग्रहणाद् भवति। अज्झनग्रहदृशामिति किम्? पठिष्यते। अङ्गाधिकारविहितं कार्यमिहातिदिश्यते। तेन हनिणिङामादेशा न भवन्ति। हनिष्यते। घानिष्यते। एष्यते। आयिष्यते। अध्येष्यते। अध्यायिष्यते। हनो वध लिङि, लुङि च, इणो गा लुङि, विभाषा लृङ्लुङोरित्येते विधयो न भवन्ति॥

## दीङो युडचि क्ङिति॥ ६३॥

दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः। उपदिदीये। उपदिदीयाते। उपदिदीयिरे। दीङ इति पञ्चमीनिर्देशादजादेर्युडागमो भवति। अचीति किम्? उपदेदीयते। क्ङितीति किम्? उपदानम्॥

## आतो लोप इटि च॥ ६४॥

इट्यजाद्यार्द्धधातुके क्ङिति चाकारान्तस्याङ्गस्य लोपो भवति। इटि-पपिथ। तस्थिथ। किति-पपतुः। पपुः। तस्थतुः। तस्थुः। गोदः। कम्बलदः। ङिति-प्रदा। प्रधा। आर्द्धधातुक इत्येव। यान्ति। वान्ति। व्यत्यरे। व्यत्यले। रातेर्लातेश्च लङि इटि रूपम्। अचीत्येव। ग्लायते। दासीय॥

## ईद्यति॥ ६५॥

ईकार आदेशो भवति आकारान्तस्याङ्गस्य यति परतः। देयम्। धेयम्। हेयम्। स्थेयम्॥

## घुमास्थागापाजहातिसां हलि॥ ६६॥

घुसञ्ज्ञकानामङ्गानां मा स्था गा पा जहाति सा इत्येतेषां हलादौ क्ङिति प्रत्यये परत ईकारादेशो भवति। दीयते। देदीयते। धीयते। देधीयते। मीयते। मेमीयते। स्थीयते। तेष्ठीयते। गीयते। जेगीयते। अध्यगीष्ट। अध्यगीषाताम्। अध्यगीषत। पीयते। पेपीयते। पातेरिह ग्रहणं नास्ति, लुग्विकरणत्वात्। पायते इत्येव तस्य भवति। हीयते। जेहीयते। जहातेरिह निर्द्देशाद् जिहीतेर्ग्रहणं न भवति-हायते। षोऽन्तकर्मणि-अवसीयते, अवसेसीयते। हलीति किम्? ददतुः, ददुः। आतो लोपाद्धि परत्वादीत्वं स्यात्। एतदेव हल्ग्रहणं ज्ञापकम्—अस्मिन् प्रकरणे विप्रतिषेधेनासिद्धत्वं भवति। क्ङितीत्येव—दाता, धाता॥

## एर्लिङि॥ ६७॥

घु-मा-स्था-गा-पा-जहातिसामङ्गानां लिङि परत एकारादेशो भवति। देयात्। मेयात्। धेयात्। स्थेयात्। गेयात्। पेयात्। अवसेयात्। क्ङितीत्येव—दासीष्ट, धासीष्ट॥

---

दीङो—अजादि कित्-ङित् प्रत्ययों के परे 'दीङ्' धातु को युट् का आगम हो जाता है।

आतो—इट् तथा अजादि आर्धधातुक कित्-ङित् प्रत्ययों के परे अकारान्त अङ्ग का लोप (अन्त्यलोप) हो जाता है।

ईद्यति—यत् प्रत्यय के परे आकारान्त अङ्ग को ईकारादेश हो जाता है।

घुमास्था—हलादि कित्-ङित् प्रत्ययों के परे घुसंज्ञक 'मा', 'स्था', 'गा', 'पा', 'हा' (ओहाक्) यथा 'सा' के स्थान में ईकारादेश हो जाता है।

एर्लिङि—घुसंज्ञक, 'मा', 'स्था', 'गा', 'पा', 'हा' (ओहाक्) तथा 'सा' के स्थान में लिङ् के परे एकारादेश हो जाता है।

## वाऽन्यस्य संयोगादेः ॥ ६८ ॥

घ्वादिभ्योऽन्यस्य संयोगादेराकारान्तस्य वा एकारादेशो भवति लिङि परतः। ग्लेयात्। ग्लायात्। म्लेयात्। म्लायात्। अन्यस्येति किम्? स्थेयात्। संयोगादेरिति किम्? यायात्। किङतीत्येव—ग्लासीष्ट। अङ्गस्येत्येव—निर्वायात्॥

## न ल्यपि ॥ ६९ ॥

ल्यपि प्रत्यये परतो घुमास्थागापाजहातिसां यदुक्तं(१) तन्न। प्रदाय। प्रधाय। प्रमाय। प्रस्थाय। प्रगाय। प्रपाय। प्रहाय। अवसाय॥

## मयतेरिदन्यतरस्याम् ॥ ७० ॥

मयतेरिकारादेशो वा भवति ल्यपि परतः। अपमित्य। अपमाय॥

## लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ७१ ॥

लुङ् लङ् लृङ् इत्येतेषु परतोऽङ्गस्याडागमो भवति, उदात्तश्च स भवति। लुङ्—अकार्षीत्, अहार्षीत्। लङ्—अकरोत्, अहरत्। लृङ्—अकरिष्यत्, अहरिष्यत्॥

## आडजादीनाम् ॥ ७२ ॥

आडागमो भवत्यजादीनां लुङ्लङ्लृङ्क्षु परत उदात्तश्च स भवति। ऐक्षिष्ट। ऐहिष्ट। औब्जीत्। औम्भीत्। लङ्—ऐक्षत, ऐहत, औब्जत्, औम्भत्। लृङ्—ऐक्षिष्यत, ऐहिष्यत, औब्जिष्यत्, औम्भिष्यत्। इह ऐज्यत, औप्यत, औह्यतेति लङि कृते लावस्थायामडागमादन्तरङ्गत्वाल्लादेशः क्रियते। तत्र कृते विकरणो नित्यत्वादडागमं बाधते। शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम्, कृते हि विकरणान्तस्याङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य, 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति—' न तु शब्दान्तरादिति विकरणो नित्यः। विकरणे कृते संप्रसारणमडागमान्नित्यत्वादेव भवति, संप्रसारणे च कृतेऽजादङ्गजातमिति आडजादीनामित्याडागमः॥

## छन्दस्यपि दृश्यते ॥ ७३ ॥

छन्दसि विषये आडागमो दृश्यते, यत्र हि विहितस्ततोऽन्यत्रापि दृश्यते। आडजादीनामित्युक्तमनजादीनामपि दृश्यते-सुरुचो वेन आवः। आनक्। आयुनक्। आव इति वृञो लुङि, मन्त्रे घसह्वरेति लेर्लुकि कृते च भवति। तथा आनगिति नशेः। आयुनगिति युजेर्लङि॥

---

वाऽन्यस्य—पूर्वसूत्रोक्त घुसंज्ञक आदि प्रकृतियों से भिन्न संयोगादि आकारान्त धातुओं के स्थान में लिङ् के परे विकल्प से एकारादेश होता है।

न ल्यपि—ल्यप् प्रत्यय के परे घुसंज्ञक, 'मा', 'स्था', 'गा', 'पा', 'हा' (ओहाक्) तथा 'सा' धातुओं के स्थान में पूर्वविहित ईकारादेश नहीं होता है।

मयतेः—'मेङ्' धातु के स्थान में ल्यप् के परे विकल्प से इत् आदेश हो जाता है।

लुङ्लङ्—लुङ्, लङ् तथा लिङ् के परे अङ्गसंज्ञक धातु को अट् का आगम हो जाता है और वह अट् उदात्त भी हो जाता है।

आट्—परन्तु अजादि धातुओं को उक्त लकारों के परे आट् का आगम होता है।

छन्दस्यपि—छन्दोविषयक प्रयोग में अजादि-भिन्न धातुओं को भी आट् का आगम देखा जाता है।

---

(१) ईत्वमेव न तु एत्वम्, एत्वस्य लिङि विधानेन ल्यपि प्राप्त्यभावात्। न चाप्राप्तस्य प्रतिषेध उचित इति भावः। (श्रीना०)

## न माङ्योगे ॥ ७४ ॥

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं(१) तन्न भवति। मा भवान् कार्षीत्। मा भवान् हार्षीत्। मा स्म करोत्। मा स्म हरत्। मा भवानीहिष्ट। मा स्म भवानीहत। मा स्म भवानीक्षत ॥

## बहुलं छन्दस्यमाङ्योगेऽपि ॥ ७५ ॥

छन्दसि विषये माङ्योगेऽपि बहुलमडाटौ भवतः, अमाङ्योगेऽपि न भवतः। अमाङ्योगे तावत्–जनिष्ठा उग्रः। काममूनयीत्। काममर्दयीत्। माङ्योगेऽपि भवतः–मा वः क्षेत्रे परबीजान्यवाप्सुः। मा अभित्थाः। मा आवः ॥

## इरयो रे ॥ ७६ ॥

इरे इत्येतस्य छन्दसि विषये बहुलं रे इत्ययमादेशो भवति। गर्भं प्रथमं दध्र आपः। याऽस्य परिदध्र। धाञो रेभावस्यासिद्धत्वादातो लोपो भवति। न च भवति–परमाया धियोग्निकर्म्माणि चक्रिरे। अत्र रेशब्दस्य सेटां धातूनामिटि कृते पुना रेभावः क्रियते। तदर्थमिरयोरित्ययं द्विवचननिर्देशः ॥

## अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७७ ॥

श्नुप्रत्ययान्तस्याङ्गस्य धातोरिवर्णोवर्णान्तस्य भ्रू इत्येतस्य च इयङ् उवङ् इत्येतावादेशौ भवतोऽचि परतः। आप्नुवन्ति। राध्नुवन्ति। शक्नुवन्ति। धातोः—चिक्षियतुः। चिक्षियुः। लुलुवतुः। लुलुवुः। नियौ। नियः। लुवौ। लुवः। भ्रुवौ। भ्रुवः। अचीति किम्? आप्नुयात्। राध्नुयात्। शक्नुयात्। श्नुधातुभ्रुवामिति किम्? लक्ष्म्यै। वध्वै। य्वोरिति किम्? चक्रतुः। चक्रुः। इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन। चयनम्। चायकः। लवनम्। लावकः॥ ॐइयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्त्तव्यम्ॐ। तन्वं पुषेम। तनुवं पुषेम। विष्वं पुषेम। विषुवं पुषेम। स्वर्गो लोकः। सुवर्गो लोकः। त्र्यम्बकं यजामहे। त्रियम्बकं यजामहे ॥

---

न माङ्—माङ् के योग में लुङ्, लङ् तथा लृङ् के परे धातु को अट् तथा आट् का आगम नहीं होता है।

बहुलम्—छन्दोविषयप्रयोग में माङ् के योग में भी अट् तथा आट् का आगम तथा माङ् के योग न रहने पर भी अट् तथा आट् के आगम का अभाव देखा जाता है।

इरयो—छन्दोविषयप्रयोग में इरे (झ>इरेच्) के स्थान में बाहुल्येन रे आदेश हो जाता है।

अचि—श्नुप्रत्ययान्त, इवर्णान्त, उवर्णान्त धातुओं तथा भ्रू शब्द को अच् के परे इयङ् तथा उवङ् आदेश हो जाते हैं।

इयङुवङ्प्रकरणे—इयङ् तथा उवङ् आदेशों के विधान के प्रसङ्ग में यह समझना चाहिए कि छन्दोविषयप्रयोग में तनु आदि शब्दों के स्थान में भी बाहुल्येन इयङ् तथा उवङ् आदेश हो जाते हैं।

---

(१) अत एव 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेन अनेन अनन्तरस्य आट एव प्रतिषेध इति शङ्का निरस्ता। अटोऽनुवृत्तिश्चात्र मण्डूकप्लुत्या, अन्यथा आडजादीनामित्यत्राप्यनुवृत्तौ अजादेरपि विकल्पेन अट् प्रसज्ज्येतेति ज्ञेयम्। (श्रीना०)

## अभ्यासस्यासवर्णे ॥ ७८ ॥

अभ्यासस्येवर्णोवर्णान्तस्यासवर्णेऽचि परत इयङ् उवङ् इत्येतावादेशौ भवतः। इयेष। उवोष। इयर्त्ति। असवर्ण इति किम्? ईषतुः। ईषुः। ऊषतुः। ऊषुः। अचीत्येव—इयाय। उवाप॥

## स्त्रियाः ॥ ७९ ॥

स्त्री इत्येतस्याजादौ प्रत्यये परत इयङादेशो भवति। स्त्री। स्त्रियौ। स्त्रियः। स्त्रीणामित्यत्र परत्वान्नुडागमः। पृथग्योगकरणमुत्तरार्थम्॥

## वाऽम्शसोः ॥ ८० ॥

अमि शसि परतः स्त्रियां वा इयङादेशो भवति। स्त्रीं पश्य। स्त्रियं पश्य। स्त्रीः पश्य। स्त्रियः पश्य॥

## इणो यण् ॥ ८१ ॥

इणोऽङ्गस्य यणादेशो भवति अचि परतः। यन्ति। यन्तु। आयन्। इयङादेशापवादोऽयम्। मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इति गुणवृद्धिभ्यां परत्वादयं बाध्यते—अयनम्। आयकः॥

## एरनेकाचोऽसंयोगपूर्वस्य ॥ ८२ ॥

धातोरिति वर्त्तते, तेन संयोगो विशेष्यते। धातोरवयवः संयोगः पूर्वो यस्मादिवर्णाच्च भवति असावसंयोगपूर्वस्तदन्तस्याङ्गस्यानेकाचोऽचि परतो यणादेशो भवति। निन्यतुः। निन्युः। उन्न्यः। ग्रामण्यौ। ग्रामण्यः। एरिति किम्? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद् अङ्गविशेषणं मा भूदिति। लुलुवतुः, लुलुवुः इत्येतत्वोः सुपीति नियमादपि सिध्यति। अनेकाच इति किम्? नियौ। नियः। असंयोगपूर्वस्येति किम्? यवक्रियौ। यवक्रियः। धातुना संयोगविशेषणं किम्? इहापि यथा स्याद्—उन्न्यौ। उन्न्य इति। गतिकारकाभ्यामन्यपूर्वस्य नेष्यते—परमनियौ। परमनिय इति॥

## ओः सुपि ॥ ८३ ॥

धात्ववयवः संयोगः पूर्वो यस्मादुवर्णाच्च भवति तदन्तस्याङ्गस्यानेकाचोऽजादौ सुपि परतो यणादेशो भवति। खलप्वौ। खलप्वः। शतस्वौ। शतस्वः। सकृल्ल्वौ। सकृल्ल्वः। सुपीति किम्? लुलुवतुः। लुलुवुः। अनेकाच इत्येव—लुवौ। लुवः। असंयोगपूर्वस्येत्येव—कटप्रुवौ। कटप्रुवः। गतिकारकाभ्यामन्यपूर्वस्य नेष्यते इत्येव—परमलुवौ। परमलुवः॥

---

अभ्यासस्य—इवर्णान्त, उवर्णान्त अभ्यास को असवर्ण अच् के परे इयङ् तथा उवङ् आदेश हो जाते हैं।

स्त्रियाः—अजादि प्रत्यय के परे स्त्री शब्द को इयङ् आदेश हो जाता है।

वाऽम्शसोः—अम् तथा शस् ( =अस्) के परे स्त्री शब्द को विकल्प से इयङ् आदेश होता है।

इणो यण्—अच् प्रत्यय के परे अङ्गसंज्ञक 'इण्' धातु को यण् आदेश हो जाता है।

एरनेकाचो—धात्ववयवभूतसंयोग जिस इवर्ण के पूर्व न हो तदन्त अनेकाच् अङ्गसंज्ञक को अच् के परे यण् आदेश हो जाता है।

ओःसुपि—धात्ववयवसंयोगपूर्वक-भिन्न जो उवर्ण तदन्त अनेकाच् अङ्गसंज्ञक को अजादि सुप ( =सु—सुप्) के परे यण् आदेश हो जाता है।

## वर्षाभ्वश्च ॥ ८४ ॥

वर्षाभू इत्येतस्याजादौ सुपि परतो यणादेशो भवति । वर्षाभ्वौ । वर्षाभ्वः । *पुनर्भ्वश्चेति वक्तव्यम्* । पुनर्भ्वौ । पुनर्भ्वः । कारापूर्वस्यापीष्यते–काराभ्वौ । काराभ्वः ॥

## न भूसुधियोः ॥ ८५ ॥

भू, सुधी इत्येतयोर्यणादेशो न भवति । प्रतिभुवौ । प्रतिभुवः । सुधियौ । सुधियः ॥

## छन्दस्युभयथा ॥ ८६ ॥

छन्दसि विषये भू, सुधी इत्येतयोरुभयथा दृश्यते । वनेषु चित्रं विभ्वं विशे । विभुवम् विशे । सुध्यो हव्यमग्ने । सुधियो हव्यमग्ने ॥

## हुश्नुवोः सार्वधातुके ॥ ८७ ॥

हु इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्यानेकाचोऽसंयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवति । जुह्वति । जुह्वतु । जुह्वत् । सुन्वन्ति । सुन्वन्तु । असुन्वन् । हुश्नुवोरिति किम् ? योयुवति । रोरुवति । इदमेव हुश्नुग्रहणं ज्ञापकं भाषायामपि यङ्लुगस्तीति । छन्दसि छन्दस्युभयथेत्यार्द्धधातुकत्वादेव यणादेशस्याप्रसङ्गः । न च यङ्लुगन्तादन्यत् प्रत्युदाहरणमुवर्णान्तमनेकाजसंयोगपूर्वं सार्वधातुके विद्यते । सार्वधातुक इति किम् ? जुहुवतुः । जुहुवुः । असंयोगपूर्वस्येत्येव । आप्नुवन्ति । राध्नुवन्ति ॥

## भुवो वुग् लुङ्लिटोः ॥ ८८ ॥

भुवो वुगागमो भवति लुङि लिटि चाजादौ परतः । अभूवन् । अभूवम् । लिट्—बभूव । बभूवतुः । बभूवुः ॥

## ऊदुपधाया गोहः ॥ ८९ ॥

गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः । निगूहति । निगूहकः । साधु निगूही । निगूहम् । निगूहन्ति । गूहो वर्त्तते । उपधाया इति किम् ? अन्त्यस्य मा भूत् । गोह इति विकृतग्रहणं विषयार्थम् (१) । यत्रास्यैतद्रूपं तत्रैव यथा स्यादिह मा भूत्—निजुगुहतुः । निजुगुहुः । अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति । निगूह्य गत इत्यूत्वस्यासिद्धत्वमत्र नास्ति । णावूत्वं, ण्यन्तस्य च ल्यप्यथादेश इति । अचीत्येव । निगोढा । निगोढुम् ॥

---

वर्षाभ्वश्च—अजादि सुप् के परे वर्षाभूशब्द को भी यण् आदेश हो जाता है ।

पुनर्भ्वश्चेति—पुनर्भूशब्द के स्थान में भी यणादेश का प्रतिपादन करना चाहिए ।

न भूसुधियोः—भू तथा सुधी शब्दों को यणादेश नहीं होता है ।

छन्दस्युभयथा—छन्दोविषयप्रयोग में भू तथा सुधी शब्दों के स्थान में यणादेश भी देखा जाता है और उसका अभाव भी ।

हुश्नुवोः—अजादि सार्वधातुक के परे अङ्गसंज्ञक 'हु' तथा असंयोगपूर्वक श्नुप्रत्ययान्त अनेकाच् अङ्गसंज्ञक धातुओं को यणादेश हो जाता है ।

भुवो—अजादि लुङ् तथा लिट् के परे 'भू' धातु को वुक् का आगम हो जाता है ।

ऊदुपधायाः—अङ्गसंज्ञक 'गुह्' धातु की उपधा को अजादि प्रत्यय के परे ऊ आदेश हो जाता है ।

---

( १ ) विषयनियमार्थमिति क्वचित्पाठः ।

## दोषो णौ ॥ ९० ॥

दोष उपधाया ऊकार आदेशो भवति णौ परतः। दूषयति। दूषयतः। दूषयन्ति। विकृतग्रहणं प्रक्रमाभेदार्थम्। पूर्वत्र हि गोह इत्युक्तम्(१)। णाविति किम्? दोषो वर्त्तते॥

## वा चित्तविरागे ॥ ९१ ॥

चित्तविकारार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः। चित्तं दूषयति। चित्तं दोषयति। प्रज्ञां दूषयति। प्रज्ञां दोषयति॥

## मितां ह्रस्वः ॥ ९२ ॥

मितो धातवो घटादयो मित इत्येवमादयो ये प्रतिपादितास्तेषामुपधाया ह्रस्वो भवति णौ परतः। घटयति। व्यथयति। जनयति। रजयति। शमयति। ज्ञपयति। केचिदत्र वेत्यनुवर्त्तयन्ति। सा च व्यवस्थितविभाषा। तेन उत्क्रामयति, संक्रामयतीत्येवमादि सिद्धं भवति॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ९३ ॥

चिण्परे णमुल्परे च णौ परतो मितामङ्गानामुपधाया दीर्घो भवति अन्यतरस्याम्। अशमि। अशामि। अतमि। अतामि। शमंशमम्। शामंशामम्। तमंतमम्। तामंतामम्। दीर्घग्रहणं किम्, न ह्रस्वविकल्प एव विधीयते? नैवं शक्यं, शमयन्तं प्रयुङ्क्त इति द्वितीये णिचि ह्रस्वविकल्पो न स्यात्, णिलोपस्य स्थानिवद्भावाद्, दीर्घविधौ स्वजादेशो न स्थानिवत्। शमयन्तं प्रयुक्तवान्—अशमि। अशामि। शमंशमम्। शामंशामम्। शंशमयतेः, अशंशमि। अशंशामि। शंशमम्। शंशामम्। योऽसौ णौ णिर्लुप्यते यश्च यङ्कारश्च तयोर्दीर्घविधौ आदेशो न स्थानिवद्भवतीति अस्थानिवद्भावाद्दीर्घः सिद्धो भवति, ह्रस्वविकल्पे तु विधीयमाने स्थानिवद्भावः स्यात्। णिण्यन्ते यङ्ण्यन्ते स्वसिद्धिरेव। व्याश्रयत्वादसिद्धत्वमपि नास्ति। णौ हि णियङोर्लोपः चिण्णमुल्परे णावङ्गस्य दीर्घत्वम्॥

## खचि ह्रस्वः ॥ ९४ ॥

खच्परे णौ परतो ह्रस्वो भवत्यङ्गस्योपधायाः। द्विषंतपः। परंतपः। पुरंदरः॥

## ह्लादो निष्ठायाम् ॥ ९५ ॥

ह्लादोऽङ्गस्योपधाया ह्रस्वो भवति निष्ठायां परतः। प्रह्लन्नः। प्रह्लन्नवान्। निष्ठायामिति किम्? प्रह्लादयति। ह्लाद इति योगविभागः क्रियते। क्तिन्यपि यथा स्यात्-प्रह्लत्तिरिति(२)॥

---

दोषो—'णि' के परे 'दुष' धातु की उपधा को ऊ आदेश हो जाता है।

वा चित्त—चित्तविकारार्थक 'दुष' धातु की उपधा को विकल्प से ऊ आदेश होता है।

मिताम्—मित् धातुओं की उपधा को ह्रस्वादेश हो जाता है।

चिण्—चिण् तथा णमुल् प्रत्ययों के परे अङ्गसंज्ञक मित् धातुओं की उपधा को विकल्प से दीर्घादेश होता है।

खचि—खच्प्रत्ययपरक 'णि' के परे अङ्ग की उपधा को ह्रस्वादेश हो जाता है।

ह्लादो—निष्ठा प्रत्यय के परे अङ्गसंज्ञक 'ह्लाद' धातु की उपधा को ह्रस्वादेश हो जाता है।

---

(१) णावीदृशस्यैव संभवादित्यधिकमेकस्मिन्पुस्तके।

(२) ह्लाद इति योगविभाग इत्यारभ्य प्रह्लत्तिरित्यन्तः पाठो बहुषु पुस्तकेषु नास्ति।

## छादेर्घेऽद्व्युपसर्गस्य ॥ ९६ ॥

छादेरङ्गस्याद्व्युपसर्गस्य घप्रत्यये(१) परत उपधाया ह्रस्वो भवति। उरश्छदः। प्रच्छदः। दन्तच्छदः। णिलोपस्यासिद्धत्वं स्थानिवद्भावो वा वचनसामर्थ्यादत्र न भवतीति ह्रस्वभाविन्युपधा भवति। अद्व्युपसर्गस्येति किम्? समुपच्छादः? अद्विप्रभृत्युपसर्गस्येति वक्तव्यम्। समुपातिच्छादः। उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्त्तयति। न हि त्रिपुत्रो द्विपुत्र इति व्यपदिश्यते॥

## इस्मन्त्रन्क्विषु च ॥ ९७ ॥

इस्, मन्, त्रन्, क्वि इत्येतेषु परतश्छादेरुपधाया ह्रस्वो भवति। छदिः। छद्म। छत्त्रम्। धामच्छत्। उपच्छत्॥

## गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९८ ॥

गम, हन, जन, खन, घस इत्येतेषामङ्गानामुपधाया लोपो भवत्यजादौ प्रत्यये क्ङित्यनङि परतः। जग्मतुः। जग्मुः। जघ्नतुः। जघ्नुः। जज्ञे। जज्ञाते। जज्ञिरे। चख्नतुः। चख्नुः। जक्षतुः। जक्षुः। अक्षन्नमीमदन्त पितरः। क्ङितीति किम्? गमनम्। हननम्। अनङीति किम्? अगमत्। अघसत्। अचीत्येव। गम्यते। हन्यते॥

## तनिपत्योश्छन्दसि ॥ ९९ ॥

तनि, पति इत्येतयोश्छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः। वितत्निरे कवयः। शकुना इव पप्तिम। छन्दसीति किम्? वितेनिरे। पेतिम॥

## घसिभसोर्हलि च ॥ १०० ॥

घसि, भस इत्येतयोश्छन्दसि उपधाया लोपो भवति हलादावजादौ च क्ङिति प्रत्यये परतः। सग्धिश्च मे सपीतिश्च मे। बब्धां ते हरी धानाः। सग्धिरित्यदेः क्तिनि बहुलं छन्दसि इति घस्लादेशे उपधाया लोपे च कृते, झलो झलि इति सकारलोपः। घत्वं तकारस्य, जश्त्वं घकारस्य। ततः समाना ग्धिः सग्धिरिति समासे कृते समानस्य सभावः। बब्धामिति भसेर्लोटि ताम् श्लौ द्विर्वचने कृते उपधालोपधत्वजश्त्वानि कर्त्तव्यानि। द्विर्वचनात्परत्वान्नित्यत्वाच्च उपधालोपः प्राप्नोति, छान्दसत्वात् स तथा न क्रियते। अजादौ—बप्सति। क्ङितीत्येव—अंशून् बभस्ति॥

---

छादेर्घे—घ प्रत्यय के परे अङ्गसंज्ञक 'छादि' धातु की उपधा को ह्रस्वादेश हो जाता है यदि दो उपसर्गों से विशिष्ट न हो।

अद्विप्रभृति—एक से अधिक उपसर्गों से विशिष्ट 'छादि' धातु की उपधा को ह्रस्वादेश नहीं होता है।

इस्मन्—इस्, मन्, त्रन् तथा क्वि प्रत्ययों के परे 'छादि' धातु की उपधा को ह्रस्व हो जाता है।

गमहन—अजादि कित् तथा अनङ्भिन्न अजादि ङित् प्रत्ययों के परे 'गम्', 'हन', 'जन्', 'खन' तथा 'घस' धातुओं की उपधा का लोप हो जाता है।

तनिपत्योः—अजादि कित्-ङित् प्रत्ययों के परे 'तनि' तथा 'पति' धातुओं की उपधा का लोप हो जाता है छन्दोविषय में।

घसिभसोः—हलादि एवम् अजादि कित्-ङित् प्रत्ययों के परे 'घसि' तथा 'भसि' धातुओं की उपधा का लोप हो जाता है छन्दोविषय-प्रयोग में।

---

(१) अत्र 'घ' इति न तरप्तमपौ घ इत्यस्य ग्रहणम्, व्याख्यानात् इति भावः (श्रीना०)।

## हुझल्भ्यो हेर्धिः ॥ १०१ ॥

हु इत्येतस्माद् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति । जुहुधि । झलन्तेभ्यः-भिन्द्धि, छिन्द्धि । हुझल्भ्य इति किम् ? क्रीणीहि, प्रीणीहि । हेरिति किम् ? जुहुतात् । हलीत्येव-रुदिहि, स्वपिहि । इह जुहुतात्, भिन्तात् इति परत्वात् तातङि कृते 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति पुनर्धिभावो न भवति । भिन्द्धकि, छिन्द्धकीत्यत्र परत्वाद् धिभावे कृते पुनः प्रसङ्गविज्ञानादकच् क्रियते ॥

## श्रुशृणुपृकृवृभ्यश्छन्दसि ॥ १०२ ॥

श्रु, शृणु, पृ, कृ, वृ इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये । श्रुधी हवमिन्द्र । शृणुधी गिरः । पूर्धि । उरुणस्कृधि । अपावृधि । शृणुधीत्यत्र धिभावविधानसामर्थ्यात् उतश्च प्रत्ययात् इति हेर्लुङ्न भवति । अन्येषामपि दृश्यते इति दीर्घत्वम् । अतोऽन्यत्र व्यत्ययो बहुलम् इति शप्, तस्य बहुलं छन्दसि इति लुक् ॥

## अङितश्च ॥ १०३ ॥

अङितश्च हेर्धिरादेशो भवति । "वा छन्दसि" इति पित्त्वेनास्याङित्त्वम् । सोमं रारन्धि । अस्मभ्यं तद्धर्यस्व प्रयन्धि । युयोध्यस्मज्जुहुराणमेनः । अङित इति किम् ? हव्यं प्रीणीहि । रारन्धीति रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घत्वं छान्दसत्वात् । मलोपाभावश्च अङित्वादेव । प्रयन्धीति यमेः शपो लुक् । युयोधीति यौतेः शपः श्लुः ॥

## चिणो लुक् ॥ १०४ ॥

चिण उत्तरस्य प्रत्ययस्य(१) लुग्भवति । अकारि । अहारि । अलावि । अपाचि । अकारितराम्, अहारितमामित्यत्र तलोपस्यासिद्धत्वात् तरप्तमपोर्न लुग्भवति, "चिणो लुक्" इत्येतद्विषयभेदाश्रियते ॥

## अतो हेः ॥ १०५ ॥

(२)अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवति । पच । पठ । गच्छ । धाव । अत इति किम् ? युहि । रुहि । तपरकरणं किम् ? लुनीहि । पुनीहि । ईत्वस्यासिद्धत्वादाकार एव भवति ॥

## उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥

उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादुत्तरस्य हेर्लुग्भवति । चिनु । सुनु । कुरु । उत

---

हुझल्भ्यो—'हु' तथा झलादि धातुओं से उत्तरवर्त्ती हलादि 'हि' के स्थान में 'धि' आदेश हो जाता है ।

श्रुशृणु—छन्दोविषय में 'श्रु', 'शृणु', 'पृ', 'कृ' तथा 'वृ' धातुओं से विहित 'हि' के स्थान में 'धि' आदेश हो जाता है ।

अङितश्च—अङित् धातु से विहित 'हि' के स्थान में भी छन्दोविषय में 'धि' आदेश हो जाता है ।

चिणो लुक्—चिण् से उत्तरवर्त्ती प्रत्यय का लुक् हो जाता है ।

अतो हेः—अकारान्त अङ्ग से परवर्त्ती 'हि' का लुक् हो जाता है ।

उतश्च—असंयोगपूर्वक जो उकार तदन्त प्रत्यय से परवर्त्ती 'हि' का भी लुक् हो जाता है ।

---

(१) एतच्च अङ्गाधिकाराल्लभ्यते, प्रत्ययेऽसति अङ्गत्वानुपपत्तेरिति भावः (श्रीना०)।

(२) अत्र अदन्तादित्युचितम् । यथाश्रुते आकारान्तादपि परस्य हेर्लुक् स्यात् । तथापि अत इत्यस्योपस्थितत्वेन समाधेयम् । (श्रीना०)

इति किम्? लुनीहि। पुनीहि। प्रत्ययादिति किम्? रुहि। युहि। असंयोगपूर्वादिति किम्? प्राप्नुहि। राध्नुहि। तक्ष्णुहि। ❀उतश्च प्रत्ययाच्छन्दो वा वचनम्❀। उतश्च प्रत्ययादित्यत्र छन्दसि वेति वक्तव्यम्। आतनुहि यातुधानान्। धिनुहि यज्ञपतिम्। तेन मा भागिनं कृणुहि॥

## लोपश्चास्यान्यतरस्यां म्वोः॥ १०७॥

योऽयमुकारोऽसंयोगपूर्वस्तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति वकारमकारादौ प्रत्यये परतः। सुन्वः। सुनुवः। सुन्मः। सुनुमः। तन्वः। तनुवः। तन्मः। तनुमः। प्रत्ययस्येत्येव। युवः। युमः। असंयोगपूर्वस्येत्येव। शक्नुवः। शक्नुमः। लुगिति वर्त्तमाने लोपग्रहणमन्त्यलोपार्थम्॥

## नित्यं(२) करोतेः॥ १०८॥

करोतेरुत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतो नित्यं लोपो भवति। कुर्व्वः। कुर्म्मः। उकारलोपस्य दीर्घविधावस्थानिवद्भावाद् "हलि च" इति दीर्घत्वं प्राप्तम्, "न भकुर्छुराम्" इति प्रतिषिद्ध्यते॥

## ये च॥ १०९॥

यकारादौ च प्रत्यये परतः करोतेरुत्तरस्योकारप्रत्ययस्य नित्यं लोपो भवति। कुर्यात्। कुर्याताम्। कुर्युः॥

## अत उत्सार्वधातुके॥ ११०॥

उकारप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकार आदेशो भवति सार्वधातुके क्ङिति परतः। कुरुतः। कुर्वन्ति। सार्वधातुकग्रहणं किम्? भूतपूर्वेऽपि सार्वधातुके यथा स्यात्—कुरु। तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम्। क्ङितीत्येव—करोति, करोषि, करोमि॥

## श्नसोरल्लोपः॥ १११॥

श्नस्यास्तेश्चाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। रुन्धः। रुन्धन्ति। भिन्तः। भिन्दन्ति। अस्तेः—स्तः। सन्ति। क्ङितीत्येव—भिनत्ति। अस्ति। श्नसोरिति पररूपं शकन्ध्वादिषु द्रष्टव्यम्॥

---

उतश्च प्रत्ययात्—छन्दोविषय में इस सूत्र की वैकल्पिक प्रवृत्ति होती है—यह व्याख्यान करना चाहिए।

लोपः—असंयोगपूर्वक जो उकार तदन्त प्रत्यय का वकारादि एवम् मकारादि प्रत्ययों के परे विकल्प से लोप हो जाता है।

नित्यम्—'कृ' धातु से विहित उकार प्रत्यय का वकारादि तथा मकारादि प्रत्ययों के परे नित्य लोप हो जाता है।

ये च—यकारादि प्रत्यय के परे भी 'कृ' धातु के उकार प्रत्यय का वकारादि एवम् मकारादि प्रत्ययों के परे नित्य लोप हो जाता है।

अतः—उकारप्रत्ययान्त 'कृ' धातु के अत् के स्थान में उत् आदेश हो जाता है सार्वधातुक कित्-ङित् प्रत्ययों के परे।

श्नसोः—श्नम् प्रत्यय तथा 'अस्' धातु के अत् का कित्-ङित् सार्वधातुक प्रत्ययों के परे लोप हो जाता है।

---

(२) आरम्भसामर्थ्यात् अस्वरितत्वप्रतिज्ञानाद्वा सिद्धे नित्यग्रहणं स्पष्टार्थम् एव। (मीना०)

## श्नाभ्यस्तयोरातः ॥ ११२ ॥

श्ना इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। लुनते। लुनताम्। अलुनत(१)। अभ्यस्तानाम्-मिमते। मिमताम्। संजिहते। संजिहताम्। समजिहत। श्नाभ्यस्तयोरिति किम्? यान्ति। आत इति किम्? बिभ्रति। क्ङितीत्येव। अलुनात्। अजहात्॥

## ई हल्यघोः ॥ ११३ ॥

श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः। लुनीतः। पुनीतः। लुनीथः। पुनीथः। पुनीते। अभ्यस्तानाम्—मिमीते। मिमीषे। मिमीध्वे। संजिहीते। संजिहीध्वे। हलीति किम्? लुनन्ति। मिमते। अघोरिति किम्? दत्तः। धत्तः। क्ङितीत्येव। लुनाति। जहाति॥

## इद्दरिद्रस्य ॥ ११४ ॥

दरिद्रातेर्हलादौ सार्वधातुके क्ङिति परत इकारादेशो भवति। दरिद्रितः। दरिद्रिथः। दरिद्रिवः। दरिद्रिमः। हलीत्येव। दरिद्रति। क्ङितीत्येव। दरिद्राति। *दरिद्रातेरार्धधातुके लोपो वक्तव्यः*। *सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम्*। दरिद्रातीति दरिद्रः। आकारान्तलक्षणः प्रत्ययो न भवति। पचादित्वादजेव भवति।

न दरिद्रायके लोपो दरिद्राणे च नेष्यते। दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा॥

*अद्यतन्यां वेति वक्तव्यम्*(२)। अदरिद्रीत्। अदरिद्रासीत्। दरिद्रस्येति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यम्॥

## भियोऽन्यतरस्याम् ॥ ११५ ॥

भी इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः। बिभितः। बिभीतः। बिभिथः। बिभीथः। बिभिवः। बिभीवः। बिभिमः। बिभीमः। हलीत्येव। बिभ्यति। क्ङितीत्येव। बिभेति। सार्वधातुके इत्येव। भीयते(३)॥

---

श्नाभ्यस्तयोः—श्ना तथा अभ्यस्तसंज्ञक के आत् का कित्-ङित् सार्वधातुक प्रत्ययों के परे लोप हो जाता है।

ई हल्यघोः—श्नाप्रत्ययान्त तथा घुसंज्ञकभिन्न अभ्यस्तसंज्ञक धातुओं के आत् के स्थान में हलादि कित्-ङित् सार्वधातुक प्रत्ययों के परे 'ई' आदेश हो जाता है।

इद्दरिद्रस्य—हलादि कित्-ङित् सार्वधातुक प्रत्ययों के परे 'दरिद्रा' धातु के आत् के स्थान में 'इत्' आदेश हो जाता है।

दरिद्रातेः—आर्धधातुक प्रत्ययों के परे 'दरिद्रा' धातु के आत् का लोप समझना चाहिए।

सिद्धश्च—प्रत्ययविधि में लोप की सिद्धता भी समझनी चाहिए (अर्थात् आर्धधातुक प्रत्यय की उत्पत्ति से पूर्व ही आर्धधातुक के विषय में लोप का विधान समझना चाहिए)।

अद्यतन्याम्—लुङ् के परे विकल्प से लोप का विधान समझना चाहिए।

भियः—हलादि कित्-ङित् सार्वधातुक के परे अङ्गसंज्ञक 'भी' के स्थान में विकल्प से 'इ' आदेश हो जाता है।

---

(१) पुनते, पुनताम्, अपुनत इत्यधिकं पुस्तकान्तरे।

(२) लुङ् एषा पूर्वाचार्यसंज्ञा।

(३) हलीत्येवेत्यारभ्य भीयत इत्यन्तं बहुषु पुस्तकेषु नास्ति, युक्तं चैतत्। पदमञ्जर्यां हलादौ क्ङिति सार्वधातुक इत्येषां नात्रोपयोग इत्युक्तत्वात्॥

## वाहनमाहितात् ॥ ८ ॥

आहितवाचि यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्य वाहननकारस्य णकार आदेशो भवति । इक्षुवाहणम् । शरवाहणम् । दर्भवाहणम् । वाहने यद् आरोपितमुह्यते तदाहितमुच्यते । आहितादिति किम् ? दाक्षिवाहनम् । दाक्षिस्वामिकं वाहनमित्यर्थः ॥

## पानं देशे ॥ ९ ॥

पाननकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति । पीयत इति पानम्, कृत्यल्युटो बहुलमिति कर्मणि ल्युट् । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । मनुष्याभिधानेऽपि देशाभिधानं गम्यते । सुरापाणाः प्राच्याः । सौवीरपाणा वाह्लीकाः । कषायपाणा गन्धाराः । देश इति किम् ? दाक्षीणां पानं दाक्षिपानम् ॥

## वा भावकरणयोः ॥ १० ॥

भावे करणे च यः पानशब्दस्तदीयस्य नकारस्य णकार आदेशो भवति वा पूर्वपदस्थान्निमित्तादुत्तरस्य । क्षीरपाणं वर्त्तते । क्षीरपानम् । कषायपाणम् । कषायपानम् । सुरापाणम् । सुरापानम् । करणे–क्षीरपाणः कंसः । क्षीरपानः । *वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम्* । गिरिणदी । गिरिनदी । चक्रणदी । चक्रनदी । चक्रणितम्बा । चक्रनितम्बा ॥

## प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ११ ॥

वेति वर्त्तते । प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारस्तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णकार आदेशो भवति । प्रातिपदिकान्ते तावत्–माषवापिणौ । माषवापिनौ । व्रीहिवापिणौ । व्रीहिवापिनौ । नुमि–माषवापाणि । माषवापानि । व्रीहिवापाणि । व्रीहिवापानि । विभक्तौ–माषवापेण । माषवापेन । व्रीहिवापेण । व्रीहिवापेन । पूर्वपदाधिकारादुत्तरपदस्य प्रातिपदिकस्थो योऽन्त्यो नकारस्तस्येदं णत्वमिष्यते । इह हि न भवति–गर्गाणां भगिनी गर्गभगिनी । यदा त्वेवं भवति गर्गाणां भगो गर्गभगः, गर्गभगोऽस्या अस्तीति गर्गभगिणीति–तदा मातृभोगीणमित्यादिवन्नित्यं णत्वमेवेति वेदितव्यम् । माषवापिणी, माषवापिनीत्यत्र तु गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति कृदन्तेनैव समासे सति प्रातिपदिकस्योत्तरपदस्यैव सतो नकारो भवति(१) । तथा

---

वाहनम्—वाहन पर लदे पदार्थ ( आहित ) के वाचक पूर्वपद में वर्तमान निमित्त से परवर्त्ती वाहन शब्द के नकार के स्थान में णकारादेश हो जाता है ।

पानम्—समुदाय के देशवाचक होने पर पूर्वपदस्थ निमित्त से परवर्त्ती पान शब्द के नकार के स्थान में णकारादेश होता है ।

वा भाव—पूर्वपदस्थ निमित्त से परवर्त्ती भावव्युत्पन्न अथवा करणव्युत्पन्न पान शब्द के नकार के स्थान में विकल्प से णकारादेश हो जाता है ।

वाप्रकरणे—विकल्प से णत्वविधि के प्रकरण में गिरिणदी आदि शब्दों का भी परिगणन करना चाहिए, अर्थात् गिरिणदी एवम् गिरिनदी आदि उभयविध—कृतणत्व तथा णत्वरहित रूपों की सिद्धि के लिए विकल्प से णकारादेश का विधान करना चाहिए ।

प्रातिपदिकान्त—प्रातिपदिकान्त, नुम् तथा विभक्ति के परे पूर्वपदस्थ निमित्त से उत्तरवर्त्ती नकार के स्थान में विकल्प से णकार हो जाता है ।

---

( १ ) क्वचित्तु प्रातिपदिकस्योत्तरपदस्यान्तो नकारो भवति इति पाठः ।

नुम्ग्रहणं कृतम्। स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवति। ॐयुवादीनां(१) प्रतिषेधो वक्तव्यःॐ। आर्ययूना। क्षत्रिययूना। प्रपक्वानि(२)। दीर्घाह्नी शरत्॥

## एकाजुत्तरपदे णः॥ १२॥

एकाजुत्तरपदं यस्य स एकाजुत्तरपदः। तस्मिन्नेकाजुत्तरपदसमासे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकार आदेशो भवति। वृत्रहणौ। वृत्रहणः। नुमि–क्षीरपाणि। सुरापाणि। विभक्तौ–क्षीरपेण। सुरापेण। ण इति वर्त्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम्॥

## कुमति च॥ १३॥

कवर्गवति चोत्तरपदे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। वस्त्रयुगिणौ। वस्त्रयुगिणः। स्वर्गकामिणौ। वृषगामिणौ। नुमि–वस्त्रयुगाणि। खरयुगाणि। विभक्तौ–वस्त्रयुगेण। खरयुगेण॥

## उपसर्गादसमासेऽपि णोपदेशस्य॥ १४॥

ण उपदेशे यस्यासौ णोपदेशः। णोपदेशस्य धातोर्यो नकारः तस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति असमासेऽपि। प्रणमति। परिणमति। (३)प्रणायकः। परिणायकः। उपसर्गादिति किम्? प्रगता नायका अस्माद्देशात् प्रनायको देशः। असमासेऽपीति किम्? पूर्वपदाधिकारात् समास एव स्यादिति तदधिकारनिवृत्तिद्योतनार्थम्। णोपदेशस्येति किम्? प्रनर्दति। प्रनर्दकः॥

## हिनुमीना॥ १५॥

हिनु मीना इत्येतयोरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। प्रहिणोति। प्रहिणुतः। प्रमीणाति। प्रमीणीतः। हीनुमीनाग्रहणे विकृतस्यापि भवति, अजादेशस्य स्थानिवत्त्वात्॥

## आनि लोट्॥ १६॥

आनीत्येतस्य लोडादेशस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो

युवादीनाम्—परन्तु युवन् आदि शब्दों के नकार को उक्त परिस्थिति में भी णकारादेश नहीं होता है—ऐसा व्याख्यान करना चाहिए।

एकाच्—जिसमें उत्तरपद एक ही स्वर (=अच्) से सम्पन्न हो उस समास में प्रातिपदिकान्त, नुम् तथा विभक्ति के परे रहते पूर्वपदस्थ निमित्त से परवर्त्ती नकार के स्थान में णकारादेश हो जाता है।

कुमति च—प्रातिपदिकान्त, नुम्, विभक्ति तथा कवर्गयुक्त उत्तरपद (=समासचरमावयव) के परे भी पूर्वपदस्थ निमित्त से परवर्त्ती नकार के स्थान में णकारादेश हो जाता है।

उपसर्गात्—उपदेश काल में जिस धातु में णकार रहा हो उस धातु के उपसर्गस्थ निमित्त से परवर्त्ती नकार के स्थान में, समास न होने पर भी, णकारादेश हो जाता है।

हिनुमीना—उपसर्गस्थ निमित्त से परवर्त्ती हिनु तथा मीना (√हि+श्नु, √मी+श्ना) शब्दों के नकार के स्थान में णकारादेश हो जाता है।

आनि—उपसर्गस्थ निमित्त से परवर्त्ती लोट्-स्थानिक 'आनि' के नकार के स्थान में णकारादेश हो जाता है।

(१) युवादीनां नेति वक्तव्यम् इति न्याससम्मतः पाठः प्रतीयते (भीना०)।

(२) परिपक्वानीत्यधिकमन्यत्र।

(३) प्रणयति। परिणयति। प्रणामकः। परिणामकः। इति क्वचिदधिकोऽयं पाठः।

भवति । प्रवपाणि । परिवपाणि । प्रयाणि । परियाणि । लोडिति किम् ? प्रवपानि मांसानि ॥

## नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥

नेरित्येतस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद नद पत पद घु मा स्यति हन्ति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि इत्येतेषु परतः । गद–प्रणिगदति । परिणिगदति । नद–प्रणिनदति । परिणिनदति । पत–प्रणिपतति । परिणिपतति । पद–प्रणिपद्यते । परिणिपद्यते । घु–प्रणिददाति । परिणिददाति । प्रणिदधाति । परिणिदधाति । माङ्–प्रणिमिमीते । परिणिमिमीते । मेङ्–प्रणिमयते । परिणिमयते । मा इति माङ्मेङोर्ग्रहणमिष्यते । स्यति–प्रणिष्यति । परिणिष्यति । हन्ति–प्रणिहन्ति । परिणिहन्ति । याति–प्रणियाति । परिणियाति । वाति–प्रणिवाति । परिणिवाति । द्राति-प्रणिद्राति । परिणिद्राति । प्साति-प्रणिप्साति । परिणिप्साति । वपति–प्रणिवपति । परिणिवपति । वहति–प्रणिवहति । परिणिवहति । शाम्यति–प्रणिशाम्यति । परिणिशाम्यति । चिनोति–प्रणिचिनोति । परिणिचिनोति । देग्धि–प्रणिदेग्धि । परिणिदेग्धि । अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते–प्रण्यगदत् ॥

## शेषे विभाषाऽकखादावषान्त उपदेशे ॥ १८ ॥

नेरिति वर्त्तते उपसर्गादिति च । अककारखकारादिरषकारान्तश्च उपदेशे यो धातुः शेषस्तस्मिन् परत उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य विभाषा णकार आदेशो भवति । प्रणिपचति । प्रनिपचति । प्रणिभिनत्ति । प्रनिभिनत्ति । अकखादाविति किम् ? प्रनिकरोति । प्रनिखादति । अषान्त इति किम् ? प्रनिपिनष्टि । उपदेशग्रहणं किम् ? इह च प्रतिषेधो यथा स्यात्–प्रनिचकार । प्रनिचखाद । प्रनिपेक्ष्यतीति । इह च मा भूत्–विशेः–प्रणिवेष्टा । प्रणिवेक्ष्यति ॥

## अनितेः ॥ १९ ॥

अनितेर्नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । प्राणिति । पराणिति ॥

## अन्तः ॥ २० ॥

अनितेरिति वर्त्तते । उपसर्गस्थान्निमित्तादुत्तरस्यानितिनकारस्य पदान्ते वर्त्तमानस्य णकारादेशो भवति । हे प्राण् । हे पराण् । पदान्तस्येति प्रतिषेधस्यापवादोऽयम् । अन्तश्च पदापेक्षो गृह्यते । केचित्तु पूर्वसूत्र एवैतदन्तग्रहणं सामीप्यार्थमभिसंबध्नन्ति, निमित्तस-

---

नेर्गद—उपसर्गस्थ निमित्त से परवर्त्ती 'नि' (उपसर्ग) के अवयवभूत नकार के स्थान में 'गद' आदि धातुओं के परे रहते णकारादेश हो जाता है।

शेषे—जो धातु उपदेशावस्था में ककारादि, खकारादि अथवा षकारान्त न हो उसके परे रहते उपसर्गस्थ निमित्त से परवर्त्ती 'नि' (उपसर्ग) के नकार के स्थान में णकारादेश विकल्प से हो जाता है।

अनितेः—उपसर्गस्थनिमित्त से उत्तरवर्ती 'अन' धातु के नकार के स्थान में णकारादेश होता है।

अन्तः—उपसर्गस्थ निमित्त से उत्तरवर्त्ती 'अन' धातु के पदान्त नकार के स्थान में भी णकारादेश हो जाता है।

मीपरस्यैकवर्णव्यवहितस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो यथा स्यात्। इह मा भूत्-पर्यनितीति। द्वितीयोऽपि पदान्तस्य णत्वार्थमन्तग्रहणमाश्रयितव्यमेव। येषां तु पर्यणितीति भवितव्यमिति दर्शनम् तेषां पूर्वसूत्रे नार्थोऽन्तग्रहणेन॥

## उभौ साभ्यासस्य॥ २१॥

साभ्यासस्यानितेरुपसर्गस्थान्निमित्तादुत्तरस्योभयोर्नकारयोर्णकार आदेशो भवति। प्राणिणिषति। प्राणिणत्। पराणिणिषति। पराणिणत्। पूर्वत्रासिद्धीयमद्विर्वचन इत्येतस्मिन्सति पूर्वेणैव कृतणत्वस्य द्विर्वचने कृते सिद्धमेतदन्तरेणापि वचनम्, तत्तु नाश्रयितव्यमिति सूत्रमिदमारभ्यते। तेन औजढदिति सिद्धं भवति(१)॥

## हन्तेरत्पूर्वस्य॥ २२॥

अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकार आदेशो भवति। प्रहण्यते। परिहण्यते। प्रहणनम्। परिहणनम्। अत्पूर्वस्येति किम्?। प्रघ्नन्ति। तपरकरणं किम्? घिणि-प्राघानि। पर्यघानि॥

## वमोर्वा॥ २३॥

हन्तेरिति वर्त्तते। वकारमकारयोः परतो हन्तिनकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति। प्रहण्वः। परिहण्वः। प्रहन्वः। परिहन्वः। प्रहण्मः। परिहण्मः। प्रहन्मः। परिहन्मः(२)॥

## अन्तरदेशे॥ २४॥

अन्तःशब्दादुत्तरस्य हन्तिनकारस्यात्पूर्वस्य णकारादेशो भवति अदेशाभिधाने। अन्तर्हण्यते। अन्तर्हणनं वर्त्तते। अदेश इति किम्? अन्तर्हननो देशः। अत्पूर्वस्येत्येव। अन्तर्घ्नन्ति। तपरकरणं किम्? अन्तरघानि॥

## अयनं च॥ २५॥

अन्तरदेश इति वर्त्तते। अयननकारस्यचान्तःशब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने। अन्तरयणं वर्त्तते। अन्तरयणं शोभनम्। अदेश इत्येव। अन्तरयनो देशः॥

---

उभौ—उपसर्गस्थ निमित्त से परवर्त्ती 'अभ्यास'-विशिष्ट 'अन' धातु के अभ्यासगत तथा उत्तरवर्त्ती नकारों के स्थान में णकारादेश हो जाता है।

हन्तेः—उपसर्गस्थ निमित्त से परवर्त्ती ह्रस्व-अकारपूर्वक 'हन्' धातु के नकार के स्थान में णकार हो जाता है।

वमोर्वा—वकार तथा मकार के परे भी उपसर्गस्थ निमित्त से परवर्त्ती 'हन्' धातु के नकार को विकल्प से णकार हो जाता है।

अन्तरदेशे—अन्तः शब्द से उत्तरवर्त्ती अकारपूर्वक 'हन्' धातु के नकार के स्थान में भी णकारादेश हो जाता है यदि समुदाय देशवाचक शब्द न हो तो।

अयनम्—अन्तर् शब्द से उत्तरवर्त्ती अयन शब्द के नकार को भी णकारादेश हो जाता है यदि समुदाय संज्ञाशब्द न हो तो।

---

(१) तेनेत्यादिभवत्यन्तं क्वचिन्नास्ति।

(२) पूर्वेण नित्ये प्राप्ते विकल्प इति क्वचिदधिकम्।

## छन्दस्यृदवग्रहात् ॥ २६ ॥

पूर्वपदादिति वर्त्तते । ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये । नृमणाः । पितृयाणम् । अत्र हि नृमणाः पितृयाणमिति ऋकारोऽवगृह्यते । अवग्रहग्रहणं किमर्थमुच्यते । यावता संहिताधिकार आध्यायपरिसमाप्तेरित्युक्तम् ? विषयोपलक्षणार्थमवग्रहग्रहणमवगृह्यमाणाद्यथा स्यादनवगृह्यमणान्मा भूत् । अपदान्ते चावग्रहो नास्ति ॥

## नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥

नस् इत्येतस्य नकारस्य णकारादेशो भवति धातुस्थान्निमित्तादुत्तरस्योरुशब्दात् षुशब्दाच्च छन्दसि विषये । धातुस्थात्तावत्-अग्ने रक्षा णः । शिक्षा णो अस्मिन् । उरुशब्दात्-उरुणस्कृधि । षुशब्दात्-अभीषु णः सखीनाम् । ऊर्ध्वं ऊषु ण ऊतये । अस्मदादेशोऽयं नस्शब्दो बहुवचनस्य वस्नसाविति ॥

## उपसर्गाद् बहुलम् ॥ २८ ॥

उपसर्गस्थान्निमित्तादुत्तरस्य नसो नकारस्य णकारादेशो भवति बहुलम् । प्रणः शूद्रः । प्रणसः । प्रणो राजा । न च भवति-प्र नो मुञ्चतम् । बहुलग्रहणाद्भाषायामपि भवति-प्रणसं मुखम्(१) । उपसर्गाच्चेति नासिकाया णसादेशः ॥

## कृत्यचः ॥ २९ ॥

कृत्स्थो यो नकारोऽच उत्तरस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । अन मान अनीय अनि इनि निष्ठादेश एते णत्वं प्रयोजयन्ति । अन-प्रयाणम् । परियाणम् । प्रमाणम् । परिमाणम् । मान-प्रयायमाणम् । परियायमाणम् । अनीय-प्रयाणीयम् । परियाणीयम् । अनिः-अप्रयाणिः । अपरियाणिः । इनि-प्रयायिणौ । परियायिणौ । निष्ठादेशः-प्रहीणः । परिहीणः । प्रहीणवान् । परिहीणवान् । अच इति किम् ? प्रभुग्नः । (२) भुजो कौटिल्ये । अस्य निष्ठाप्रत्ययः । ओदितश्चेति निष्ठानत्वम् । चोः कुरिति कुत्वे सिद्धं परिभुग्न इति । ॐकृत्स्थस्य णत्वे निर्विण्णस्योपसङ्ख्यानं कर्त्तव्यम्ॐ । निर्विण्णोऽहमत्र वासेन ॥

---

छन्द—ऋदन्त अवग्रहात्मकपूर्वपद से परवर्त्ती नकार के स्थान में छन्दोविषय में णकारादेश हो जाता है ।

नश्च—धातुस्थ निमित्त, उरु शब्द तथा षु शब्द से उत्तरवर्ती 'नस्' शब्द के नकार के स्थान में छन्दोविषय में णकारादेश हो जाता है ।

उपसर्गाद्—उपसर्गस्थ निमित्त से परवर्त्ती 'नस्' शब्द के नकार के स्थान में बहुलतया णकारादेश हो जाता है ।

कृत्यचः—उपसर्गस्थ निमित्त से परवर्त्ती कृत्प्रत्ययावयव नकार के स्थान में, यदि वह अच् ( स्वर ) से उत्तर आया हो तो, णकारादेश हो जाता है ।

कृत्स्थस्य—उक्त सूत्र से कृत्स्थ नकार के स्थान में णकारादेश का व्याख्यान निर्विण्ण शब्द ( निर् + विद् + क्त > न ) की सिद्धि के निमित्त करना चाहिए ।

---

( १ ) छन्दसीति निवृत्तं तेन भाषायामपि भवतीति क्वचित्पाठः ।

( २ ) भुजो कौटिल्य इत्यारभ्य परिभुग्न इत्यन्तं क्वचिन्नास्ति ।

## णेर्विभाषा ॥ ३० ॥

ण्यन्ताद्यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रयापणम्। प्रयापनम्। परियापणम्। परियापनम्। प्रयाप्यमाणम्। प्रयाप्यमानम्। प्रयापणीयम्। प्रयापनीयम्। अप्रयापणिः। अप्रयापनिः। प्रयापिणौ। प्रयापिनौ। विहितविशेषणं किम्? प्रयाप्यमाणमित्यत्र यका व्यवधानेऽपि यथा स्यादिति ॥

## हलश्चेजुपधात् ॥ ३१ ॥

कृत्यच इति वर्त्तते। हलादिर्यो धातुरिजुपधस्तस्मात्परो यः कृत्प्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रकोपणम्। परिकोपणम्। प्रकोपनम्। परिकोपनम्। हल इति किम्? प्रेहणम्। प्रोहणम्। इजुपधादिति किम्? प्रवपणम्। परिवपणम्। कृत्यच इति नित्ये प्राप्ते विकल्पः। अच इत्येव। परिभुग्नः। इजुपधस्य सर्वस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम् ॥

## इजादेः सनुमः ॥ ३२ ॥

हल इति वर्त्तते। तेनेह सामर्थ्यात्तदन्तविधिः। इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारो भवति। प्रेङ्खणम्। परेङ्खणम्। प्रेङ्गणम्। परेङ्गणम्। प्रोम्भणम्। परोम्भणम्। सिद्धे सत्यारम्भो नियमार्थः—इजादेरेव सनुमो नान्यस्मादिति। प्रसङ्गनम्। परिमङ्गनम्। हल इत्यधिकारादण्यन्ते नित्यं विद्धयर्थमेतन्न भवति ॥

## वा निंसनिक्षनिन्दाम् ॥ ३३ ॥

उपसर्गादिति वर्त्तते। निंस निक्ष निन्द इत्येषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति। प्रणिंसनम्। प्रनिंसनम्। प्रणिक्षणम्। प्रनिक्षणम्। प्रणिन्दनम्। प्रनिन्दनम्। णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः ॥

## न भाभूपूकमिगमिप्यायीवेपाम् ॥ ३४ ॥

भा भू पू कमि गमि प्यायी वेप इत्येतेषामुपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्य नकारादेशो न भवति। भा–प्रभानम्। परिभानम्। भू–प्रभवनम्। परिभवनम्। पू–प्रपवनम्। परिपवनम्। पूञ्ग्रहणं द्रष्टव्यम्। पूङो हि भवत्येव णत्वम्–प्रपवणं सोमस्येति। कमि–प्रकमनम्। परिकमनम्। गमि–प्रगमनम्। परिगमनम्। प्यायी–प्रप्यानम्।

---

णेर्विभाषा—उपसर्गस्थनिमित्त से उत्तरवर्त्ती ण्यन्तधातु-विहित कृत्प्रत्यय के अवयवभूत नकार के स्थान में विकल्प से णकारादेश होता है।

हलश्च—हलादि इजुपध धातु से विहित कृत्प्रत्ययके अवयवभूत अनुत्तरवर्त्ती नकार के स्थान में भी, निमित्त के उपसर्गस्थ होने पर, विकल्प से णकारादेश हो जाता है।

इजादेः—नुम्विशिष्ट इजादि हलन्त धातु से विहित कृत्प्रत्यय के अवयवभूत नकार के स्थान में, निमित्त के उपसर्गस्थ होने पर, णकारादेश हो जाता है।

वा निंस—उपसर्गस्थ निमित्त से परवर्त्ती 'निस्', 'निक्ष' तथा 'निन्द्' धातुओं के कृत्प्रत्ययस्थ नकार के स्थान में विकल्प से णकारादेश हो जाता है।

न भाभू—उपसर्गस्थ निमित्त से परवर्त्ती होने पर भी 'भा', 'भू', 'पू', 'कमि', 'गमि', 'प्यायी' तथा 'वेप्' धातुओं से विहित कृत्प्रत्यय के नकार के स्थान में णकारादेश नहीं होता है।

परिप्यानम् । वेप-प्रवेपनम् । परिवेपनम् । ॐण्यन्तानां भादीनामुपसंख्यानं कर्त्तव्यम्ॐ । प्रभापनम् । परिभापनम् ॥

## षात्पदान्तात् ॥ ३५ ॥

षकारात्पदान्तादुत्तरस्य णकारादेशो न भवति । निष्पानम् । दुष्पानम् । सर्पिष्पानम् । यजुष्पानम् । षादिति किम् ? निर्णयः । पदान्तादिति किम् ? कुष्णाति । पुष्णाति । पदे अन्तः पदान्त इति सप्तमीसमासोऽयम् । तेनेह न भवति-सुसर्पिष्केण । सुयजुष्केण । शेषाद्विभाषेति कप् ॥

## नशेः षान्तस्य ॥ ३६ ॥

नेति वर्त्तते । नशेः षकारान्तस्य णकारादेशो न भवति । प्रनष्टः । षान्तस्येति किम् ? प्रणश्यति । परिणश्यति । षान्तग्रहणं षान्तभूतपूर्वमात्रस्यापि यथा स्यात्-प्रनङ्क्ष्यति । परिनङ्क्ष्यति ॥

## पदान्तस्य ॥ ३७ ॥

पदान्तस्य नकारस्य णकारादेशो न भवति । वृक्षान् । प्लक्षान् । अरीन् । गिरीन् ।

## पदव्यवायेऽपि ॥ ३८ ॥

पदेन व्यवायः-पदव्यवायः । पदव्यवधानम् । पदे व्यवायेऽपि सति निमित्तनिमित्तिनोर्नकारस्य णकारादेशो न भवति । माषकुम्भवापेन । चतुरङ्गयोगेन । प्रावनद्धम् । पर्यवनद्धम् । प्रगान्नयामः । परिगान्नयामः । ॐपदव्यवायेऽतद्धित इति वक्तव्यम्ॐ । इह मा भूत्-आर्द्रगोमयेण । शुष्कगोमयेण । गोश्च पुरीष इति मयट् । स्वादौ पूर्वं पदमिति गोशब्दः पूर्वपदं, तेन व्यवायः ॥

## क्षुभ्नादिषु च ॥ ३९ ॥

नेति वर्त्तते । क्षुभ्ना इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति । क्षुभ्नाति । अजादेशस्य स्थानिवद्भावादिहापि प्रतिषेधो भवति । क्षुभ्नीतः । क्षुभ्नन्ति । नृनमनः । पूर्वपदात्संज्ञायामिति प्राप्तिः । छन्दस्यृदवग्रहादिति च प्राप्नोति । नन्दिन् । नन्दथ । नगर । एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति-हरिनन्दी । हरिनन्दनः । गिरिनगरम् । नृतिर्यङि प्रयोजयति-नरीनृत्यते । नृप्नुतृप्नोति । नर्तन । गहन । नन्दन । निवेश । निवास । अग्नि । अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्त्तनम् । परिगहनमिति संज्ञायां पूर्वपदात्संज्ञायामिति प्राप्नोति । परिनन्दनमित्यत्रोपसर्गादसमासेऽपीति

---

ण्यन्तानाम्—उक्त परिस्थिति में ण्यन्त 'भा' आदि धातुओं से विहित कृत्प्रत्यय के अवयवभूत नकार के स्थान में भी णकारादेश के प्रतिषेध का प्रतिपादन करना चाहिए।

षात्—षकारान्त पद से उत्तरवर्त्ती कृत्प्रत्ययावयव नकार को भी णकार नहीं होता है।

नशेः—षकारान्त 'नश्' धातु के नकार को भी णकार नहीं होता है।

पदान्तस्य—पदान्त नकार को भी णकार नहीं होता है।

पद—निमित्त तथा निमित्ती के बीच किसी पद के विद्यमान होने पर भी नकार को णकार नहीं होता है।

पदव्यवाये—निमित्त एवं निमित्ती के बीच किसी पद के विद्यमान होने पर तद्धितभिन्न नकार के स्थान में ही णकारादेश का प्रतिषेध होता है—ऐसा व्याख्यान करना चाहिए।

क्षुभ्नादिषु—'क्षुभ्ना' इत्यादि शब्दस्वरूपों के अवयवभूत नकार के स्थान में भी णकारादेश नहीं होता है।

प्राप्नोति। शरनिवेशः। शरनिवासः। शराग्निः। दर्भानूपः। इत्येताः संज्ञाः। ॐआचार्यादणत्वं चॐ। आचार्यभोगीनः। आचार्यानी(१) ॐइरिकादिभ्यो वनोत्तरपदेभ्यः संज्ञायाम्ॐ। इरिका। तिमिर। समीर। कुबेर। हरि। कर्मार। इत्युत्तरपदवनशब्दस्य संज्ञायाम्। क्षुभ्नादिराकृतिगणः। अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः॥

## स्तोः श्चुना श्चुः॥ ४०॥

सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः। स्तोः श्चुनेति यथासंख्यमत्र नेष्यते। सकारस्य शकारेण चवर्गेण द्वाभ्यामपि संनिपाते शकारो भवति। तवर्गस्यापि च शकारेण चवर्गेण च सन्निपाते चवर्गो भवति। आदेशे तु यथासंख्यमिष्यते। सकारस्य शकारस्तवर्गस्य च चवर्ग इति। सकारस्य शकारेण सन्निपाते-वृक्षश्शेते। प्लक्षश्शेते। तस्यैव चवर्गेण-वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षश्छादयति। प्लक्षश्छादयति। तवर्गस्य शकारेण-अग्निचिच्छेते। सोमसुच्छेते। तस्यैव चवर्गेण-अग्निचिच्चिनोति। सोमसुच्चिनोति। अग्निचिच्छादयति। सोमसुच्छादयति। अग्निचिज्जयति। सोमसुज्जयति। अग्निचिज्झकारम्। सोमसुज्झकारम्। अग्निचिञ्ञकारः। सोमसुञ्ञकारः। मस्जेः-मज्जति। भ्रस्जेः-भृज्जति। वश्चेः-वृश्चति। यजेः-यज्ञः। याचेः-याच्ञा। शादिति प्रतिषेधो ज्ञापकः संख्यातानुदेशाभावस्य। स्तोः श्चाविति सप्तमीनिर्देशो न कृतः, पूर्वेण परेण च श्चुत्वं यथा स्यादिति॥

## ष्टुना ष्टुः॥ ४१॥

स्तोरिति वर्त्तते। सकारतवर्गयोः षकारटवर्गाभ्यां संनिपाते षकारटवर्गावादेशौ भवतः। अत्रापि तथैव संख्यातानुदेशाभावः। षकारेण सकारस्य-वृक्षष्षण्डे। प्लक्षष्षण्डे। तस्यैव टवर्गेण-वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षष्ठकारः। प्लक्षष्ठकारः। तवर्गस्य षकारेण-पेष्टा। पेष्टुम्। कृषीष्ट। कृषीष्ठाः। तस्यैव टवर्गेण-अग्निचिट्टीकते। सोमसुट्टीकते। अग्निचिट्ठकारः। सोमसुट्ठकारः। अग्निचिड्डीनः। सोमसुड्डीनः। अग्निचिड् ढौकते। अग्निचिण्णकारः। अटट्-अट्टति। अदृड्-अड्डति॥

## न पदान्ताट्टोरनाम्॥ ४२॥

पदान्ताट्टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति नामित्येतद्वर्जयित्वा। श्वलिट्साये। मधुलिट्तरति। पदान्तादिति किम्? ईड स्तुतौ-ईट्टे। टोरिति किम्? सर्पिष्टमम्। अनामिति

---

आचार्यात्—आचार्य शब्द से उत्तरवर्ती नकार के स्थान में णत्व व्यवस्थित रूप में कहीं नहीं होता है और कहीं हो भी जाता है—ऐसा व्याख्यान करना चाहिए।

इरिकादिभ्यः—इरिका आदि शब्दों से परवर्ती (समासघटक) वन शब्द के नकार के स्थान में भी णकारादेश नहीं होता है यदि समुदाय से संज्ञा की प्रतीति होती हो तो।

स्तोः श्चुना—शकार अथवा चवर्ग के योग में सकार के स्थान में शकार तथा तवर्ग के स्थान में चवर्ग हो जाते हैं।

ष्टुना—किन्तु षकार अथवा टवर्ग के योग में सकार के स्थान में षकार तथा तवर्ग के स्थान में टवर्ग हो जाते हैं।

न पदान्तात्—नाम्-शब्दावयव तवर्ग को छोड़कर पदान्त टवर्ग से परवर्त्ती सकार अथवा तवर्ग के स्थान में षकार अथवा टवर्ग नहीं होते हैं।

---

(१) तथा हायनस्य नेष्यते। त्रिहायनः, चतुर्हायनः कर्मार इति चोत्तरपदस्य संज्ञायाम् इत्यधिकं क्वचित्।

शस्यथा। अदितेरपत्यमादित्यस्य इत्यत्र तकारात्पर एको यकारो यणो मय इति क्रमजो द्वितीयः। तत्र मध्यमस्य वा लोपो भवति—आदित्यः। आदित्य्यः। आदित्यो देवता अस्य किम्? षण्णाम्। अत्यल्पमिदमुच्यते। ॐअनाम्नवतिनगरीणामिति वक्तव्यम्ॐ। षण्णाम्। षण्णवतिः। षण्णगर्यः॥

## तोः षि ॥ ४३ ॥

नेति वर्त्तते। तवर्गस्य षकारे यदुक्तं तन्न भवति। अग्निचित्षण्डे। भवान्षण्डे। महान्षण्डे॥

## शात् ॥ ४४ ॥

तोरिति वर्त्तते। शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति। प्रश्नः। विश्नः॥

## यरोऽनुनासिकेऽनुनासिको वा ॥ ४५ ॥

पदान्तग्रहणमनुवर्त्तते। यरः पदान्तस्यानुनासिके परतो वाऽनुनासिकादेशो भवति। वाङ्नयति। वाग्नयति। श्वलिण्नयति। श्वलिड्नयति। अग्निचिन्नयति। अग्निचिद्नयति। त्रिष्टुम्नयति। त्रिष्टुब्नयति। पदान्तस्येत्येव। वेद्मि। क्षुभ्नाति। ॐयरोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्त्तव्यम्ॐ। वाङ्मात्रम्। कियन्मात्रम्। व्यवस्थितविभाषाविज्ञानात् सिद्धम्॥

## अचो रहाभ्यां द्वे ॥ ४६ ॥

यर इति वर्त्तते। अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः। अर्क्कः। मर्क्कः। ब्रह्म्मा। अपह्न्नुते। अच इति किम्? ह्नुते। ह्मलयति॥

## अनचि च ॥ ४७ ॥

अच इति वर्त्तते यर इति च। अच उत्तरस्य यरो द्वे वा(१) भवतोऽनचि परतः। दद्ध्यत्र। मद्ध्वत्र। अच इत्येव। स्मितम्। ध्मातम्। ॐयणो मयो द्वे भवत इति वक्तव्यम्ॐ। केचिदत्र यण इति पञ्चमी मय इति षष्ठीति व्याचक्षते। तेषामुल्क्का, वाल्म्मीक

---

अनाम्—प्रतिषेध के प्रसङ्ग में नाम् के साथ-साथ नवति तथा नगरी शब्दों का भी परिगणन करना चाहिए।

तोः षि—षकार के परे रहते तवर्ग के स्थान में टवर्ग नहीं होता है।

शात्—शकार से परवर्त्ती तवर्ग के स्थान में चवर्ग नहीं होता है।

यरोऽनु—अनुनासिक के परे रहते पदान्त यर् के स्थान में विकल्प से अनुनासिकादेश हो जाता है।

यरोऽनुनासिके—परवर्त्ती अनुनासिक यदि प्रत्यय हो तो पदान्त यर् के स्थान में अनुनासिकादेश नित्य होता है—ऐसा व्याख्यान करना चाहिए।

अचः—अच् से परवर्त्ती रेफ तथा हकार से उत्तरवर्त्ती यर् का द्वित्व हो जाता है।

अनचि—अच्भिन्न वर्ण के परे रहते अच् से परवर्त्ती यर् का विकल्प से द्वित्व होता है।

यणो मयः—यण् से परवर्त्ती मय् (प्रत्याहार) अथवा मय् से परवर्त्ती यण् के द्वित्व का प्रतिपादन करना चाहिए।

---

(१) पूर्वसूत्रेऽपि वा इत्यस्यानुवृत्तिर्बोध्या।

इत्युदाहरणम् । अपरे तु यण इति षष्ठी मय इति पञ्चमीति तेषां दध्यत्र, मध्वत्रेत्युदाहरणम् । ॐशरः खयो द्वे भवत इति वक्तव्यम्ॐ । अत्रापि यदि शर इति पञ्चमी खय इति षष्ठी तदा स्थ्थातः स्थ्थातेत्युदाहरणम् । अथवा खय उत्तरस्य शरो द्वे भवतः । वत्स्सराः । अप्स्सरा । ॐअवसाने च यरो द्वे भवत इति वक्तव्यम्ॐ । वाक्क् । वाक् । त्वक्क् । त्वक् । षट्ट् । षट् । तत्त् । तत् ॥

## नादिन्याक्रोशे पुत्रस्य ॥ ४८ ॥

आदिनी शब्दे परत आक्रोशे गम्यमाने पुत्रशब्दस्य न द्वे भवतः । अनचि चेति प्राप्तिः प्रतिषिध्यते । पुत्रादिनी त्वमसि पापे । आक्रोश इति किम् ? तत्त्वकथने द्विर्वचनं भवत्येव । पुत्रानत्तीति पुत्त्रादिनी–शिशुमारी व्याघ्री । ॐतत्परे चेति वक्तव्यम्ॐ । पुत्रपुत्रादिनी त्वमसि पापे । ॐवा हतजग्धपर इति वक्तव्यम्ॐ । पुत्त्रहती । पुत्रहती । पुत्त्रजग्धी । पुत्रजग्धी । ॐचयो द्वितीयाः शरि पौष्करसादेःॐ । चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन । तकारस्य थकारः–वथ्सः । ककारस्य खकारः–अख्षरम् । पकारस्य फकारः–अफ्सराः ॥

## शरोऽचि ॥ ४९ ॥

नेति वर्तते । शरोऽचि परतो न द्वे भवतः । अचो रहाभ्यामिति प्राप्तिः प्रतिषिध्यते । कर्षति । वर्षति । आकर्षः । अक्षदर्शः । अचीति किम् ? दश्शर्यते ॥

## त्रिप्रभृतिषु शाकटायनस्य ॥ ५० ॥

त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्याचार्यस्य मतेन द्वित्वं न भवति । इन्द्रः । चन्द्रः । उष्ट्रः । राष्ट्रम् । भ्राष्ट्रम् ॥

## सर्वत्र शाकल्यस्य ॥ ५१ ॥

शाकल्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न भवति । अर्कः । मर्कः । ब्रह्मा । अपह्नुते ॥

---

शरः—शर् से परवर्ती खय् अथवा खय् से परवर्ती शर् के द्वित्व का भी प्रतिपादन करना चाहिए ।

अवसाने—अन्त में आए यर् के द्वित्व का भी प्रतिपादन करना चाहिए ।

नादिन्याक्रोशे—आदिनी शब्द के परे रहते पुत्र शब्द के अवयव—त् का द्वित्व नहीं होता यदि वाक्य से आक्रोश अवगत होता हो तो ।

तत्परे—पुत्रादिनी शब्द के परे रहते भी पुत्रशब्दावयव यर्—त् का द्वित्व नहीं होता है—ऐसा व्याख्यान करना चाहिए ।

वा हत—हत तथा जग्ध् शब्दों के परे पुत्रशब्दावयव यर् का विकल्प से द्वित्व नहीं होता है—ऐसा प्रतिपादन करना चाहिए ।

चयः—पौष्करसादि आचार्य के मत में चय् ( प्रत्याहार ) के स्थान में वर्ग के द्वितीय व्यञ्जन आदेश हो जाते हैं ।

शरोऽचि—अच् के परे रहते शर् का द्वित्व नहीं होता है ।

त्रिप्रभृतिषु—शाकटायन आचार्य के मत में तीन से लेकर अधिक व्यञ्जनों के संयोग में किसी का द्वित्व नहीं होता है ।

सर्वत्र—शाकल्य आचार्य के मत में किसी भी संयोग में द्वित्व नहीं होता है ।

## दीर्घादाचार्याणाम् ॥ ५२ ॥

दीर्घादुत्तरस्याचार्याणां मतेन न द्वित्वं भवति । दात्रम् । पात्रम् । मूत्रम् । सूत्रम् ॥

## झलां जश् झशि ॥ ५३ ॥

झलां स्थाने जशादेशो भवति झशि परतः । लब्धा । लब्धुम् । लब्धव्यम् । दोग्धा । दोग्धुम् । दोग्धव्यम् । बोद्धा । बोद्धुम् । बोद्धव्यम् । झशीति किम् ? दत्तः । दत्थः । दध्कः ॥

## अभ्यासे चर्च ॥ ५४ ॥

अभ्यासे वर्त्तमानानां झलां चरादेशो भवति चकाराज्जश्च । चिखनिषति । चिच्छि-त्सति । टिठकारयिषति । तिष्ठासति । पिफकारयिषति । बुभूषति । जिघत्सति । डुढौकिषते । प्रकृतिचरां प्रकृतिचरो भवन्ति । चिचीषति । टिटीकिषते । तितनिषति । प्रकृतिजशां प्रकृ-तिजशो भवन्ति । जिजनिषते । बुबुधे । ददौ । डिड्ये ॥

## खरि च ॥ ५५ ॥

खरि च परतो झलां चरादेशो भवति । झलग्रहणं नानुवर्त्तते पूर्वसूत्रे चानुकृष्टत्वात् । भेत्ता । भेत्तुम् । भेत्तव्यम् । युयुत्सते । आरिप्सते । आलिप्सते ॥

## वाऽवसाने ॥ ५६ ॥

झलां चरिति वर्त्तते । अवसाने वर्त्तमानानां झलां वा चरादेशो भवति । वाक् । वाग् । त्वक् । त्वग् । श्वलिट् । श्वलिड् । त्रिष्टुप् । त्रिष्टुब् ॥

## अणोऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अणः प्रगृह्यसंज्ञस्यावसाने वर्त्तमानस्य वानुनासिकादेशो भवति । दधिँ दधि । मधुँ मधु । कुमारीँ कुमारी । अण इति किम् ? कर्तृ । हर्तृ । अप्रगृह्यस्येति किम् ? अग्नी । वायू ॥

## अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

अनुस्वारस्य ययि परतः परसवर्ण आदेशो भवति । शङ्किता । शङ्कितुम् । शङ्कितव्यम् । उञ्छिता । उञ्छितव्यम् । कुण्डिता । कुण्डितुम् । कुण्डितव्यम् । नन्दिता । नन्दितुम् । नन्दितव्यम् । कम्पिता । कम्पितुम् । कम्पितव्यम् । इह कुर्वन्ति वृषन्ति इत्यत्र णत्वस्या-सिद्धत्वात्पूर्वं नकारस्यानुस्वारः क्रियते । तस्यापि परसवर्णेन पुनर्नकार एव भवति । तस्याप्यसिद्धत्वात्पुनर्णत्वं न भवति । एवमनुस्वारीभूतो णत्वमतिक्रामतीति । ययीति किम् ? आक्रंस्यते । आचिक्रंस्यते ॥

---

दीर्घात्—आचार्यों के मत में दीर्घ से उत्तरवर्त्ती संयोग का द्वित्व नहीं होता है ।

झलाम्—झश् के परे रहते झल् के स्थान में जश् आदेश हो जाता है ।

अभ्यासे—अभ्यास में वर्त्तमान झल् के स्थान में यथायोग्य चर् अथवा जश् आदेश हो जाते हैं ।

खरि च—खर् के परे रहते भी झल् के स्थान में चर् आदेश हो जाता है ।

वाऽवसाने—अवसान में आए झल् के स्थान में विकल्प से चर् आदेश होता है ।

अणः—अवसान में वर्त्तमान प्रगृह्यसंज्ञकभिन्न अण् विकल्प से अनुनासिक हो जाता है ।

अनुस्वारस्य—मय् प्रत्याहार के परे रहते अनुस्वार के स्थान में परवर्त्ती वर्ण के समान आदेश ( परसवर्ण ) हो जाता है ।

## वा पदान्तस्य ॥ ५९ ॥

पदान्तस्यानुस्वारस्य यथि परतो वा परसवर्णादेशो भवति । तङ्कथञ्चित्रपक्षण्डयमान-न्नभःस्थम्पुरुषोऽवधीत् । तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत् ॥

## तोर्लि ॥ ६० ॥

तवर्गस्य लकारे परसवर्णादेशो भवति । अग्निचिल्लुनाति । सोमसुल्लुनाति । भवाँ-ल्लुनाति । महाँल्लुनाति ॥

## उदः स्थास्तम्भोः पूर्वस्य ॥ ६१ ॥

सवर्ण इति वर्त्तते । उद उत्तरयोः स्था स्तम्भ इत्येतयोः पूर्वसवर्णादेशो भवति । उत्थिता । उत्थातुम् । उत्थातव्यम् । स्तम्भेः खल्वपि–उत्तम्भिता । उत्तम्भितुम् । उत्तम्भि-तव्यम् । स्थास्तम्भोरितिकिम् ? उत्स्नातिः ॥ ❀उदः पूर्वसवर्णत्वे स्कन्देश्छन्दस्युपसंख्या-नम्❀ । अग्ने दूरमुत्कन्दः । ❀रोगे चेति वक्तव्यम्❀ । उत्कन्दको नाम रोगः । कन्दतेर्वा धात्वन्तरस्यतद्रूपम् ॥

## झयो होऽन्यतरस्याम् ॥ ६२ ॥

झय उत्तरस्य हकारस्य पूर्वसवर्णादेशो भवति अन्यतरस्याम् । वाग्घसति । वाग्ह-सति । श्वलिड्ढसति । श्वलिड् हसति । अग्निचिद्धसति । अग्निचिद् हसति । सोमसु-द्धसति । सोमसुद् हसति । त्रिष्टुब्भसति । त्रिष्टुब् हसति । झय इति किम् ? प्राङ्हसति । भवान् हसति ॥

## शश्छोटि ॥ ६३ ॥

झय इति वर्त्तते अन्यतरस्यामिति च । झय उत्तरस्य शकारस्याटि परतश्छकारादेशो भवति अन्यतरस्याम् । वाक्छेते । वाक् शेते । अग्निचिच्छेते । अग्निचित् शेते । सोमसु-च्छेते । सोमसुत् शेते । श्वलिट् छेते । श्वलिट् शेते । त्रिष्टुप्छेते । त्रिष्टुप् शेते । ❀छत्वम-मीति वक्तव्यम्❀ । किं प्रयोजनम् ? तच्छ्लोकेन, तच्छ्मश्रुणेत्येवमर्थम् ॥

---

वा पदान्तस्य—पदान्तगत अनुस्वार के स्थान में यय् के परे रहते विकल्प से परसवर्ण होता है ।

तोर्लि—लकार के परे रहते तवर्ग के स्थान में भी परसवर्णादेश हो जाता है ।

उदः—उद् से उत्तरवर्त्ती 'स्था' तथा 'स्तम्भ' धातुओं के सकार के स्थान में पूर्ववर्त्ती वर्ण के समान आदेश ( पूर्वसवर्ण ) हो जाता है ।

उदः पूर्व—उद् से परवर्त्ती शब्द के पूर्वसवर्णत्व के प्रसङ्ग में यह भी व्याख्यान करना चाहिए कि छान्दस प्रयोग में ( उद् से परवर्त्ती ) 'स्कन्द' धातु के सकार के स्थान में भी पूर्वसवर्ण आदेश हो जाता है ।

रोगे—समुदाय यदि रोगवाचक हो तो भी उत् से परवर्त्ती 'स्कन्द्' के सकार के स्थान में पूर्वसवर्ण आदेश का प्रतिपादन करना चाहिए ।

झयः—झय् से परवर्त्ती हकार के स्थान में विकल्प से पूर्वसवर्ण आदेश हो जाता है ।

शश्छोऽटि—अट् के परे रहते झय् से उत्तरवर्त्ती शकार के स्थान में विकल्प से छकारादेश हो जाता है ।

छत्वम्—उक्त छकारादेश अम् प्रत्याहार के परे रहते होता है—ऐसा व्याख्यान करना चाहिए ।

## हलो यमां यमि लोपः ॥ ६४ ॥

अन्यतरस्यामिति वर्त्तते। हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम्। शय्या इत्यत्र द्वौ यकारौ क्रमजस्तृतीयस्तत्र मध्यमस्यात्र वा लोपो भवति। शय्या। शय्य्या। आदित्यस्यापत्यमादित्य्य इत्यत्र तकारात्पर एको यकारो यणो मय इति क्रमजो द्वितीयः। तत्र मध्यमस्य वा लोपो भवति—आदित्यः। आदित्य्यः। आदित्यो देवता अस्य स्थालीपाकस्येति आदित्यः। आदित्य्य इत्यत्रापि द्वौ यकारौ क्रमजस्तृतीयः। तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति। हल इति किम्? अक्षम्। यमामिति किम्? अग्निः। अर्घ्यम्। यमीति किम्? शार्ङ्गम्॥

## झरो झरि सवर्णे ॥ ६५ ॥

हल इति वर्त्तते अन्यतरस्यामिति च। हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरस्याम्। प्रत्तमवत्तमित्यत्र त्रयस्तकाराः। क्रमजश्चतुर्थः। तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति। मरुत्त इत्यत्र चत्वारस्तकाराः क्रमजः पञ्चमस्तत्र मध्यमस्य मध्यमयोर्मध्यमानां वा लोपो भवति। मरुच्छब्दस्य ह्युपसंख्यानसामर्थ्याद्घ उपसर्गात्ति इति तत्वं भवति। झर इति किम्? शार्ङ्गम्। झरीति किम्? प्रियपञ्ज्ञः। अल्लोपस्य च पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवद्भावप्रतिषेधादत्र चकारस्य ञकारे लोपः स्यात्। सवर्ण इति किम्? तर्प्तुम्। तर्प्तव्यम्। सवर्णग्रहणसामर्थ्यात्संख्यातानुदेशो न भवति। सवर्णमात्रे लोपो विज्ञायते। तेन शिण्ढि, पिण्ढि इति ढकारे ढकारस्य लोपो भवति॥

## उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥

उदात्तादुत्तरस्यानुदात्तस्य स्वरितादेशो भवति। गार्ग्यः। वात्स्यः। पचति। पठति। अस्य स्वरितस्यासिद्धत्वादनुदात्तं पदमेकवर्जमित्येतन्न प्रवर्त्तते। तेनोदात्तस्वरितावुभावपि श्रूयेते॥

## नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ ६७ ॥

उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरितो न भवति, पूर्वेण प्राप्तः प्रतिषिध्यते, अगार्ग्यकाश्यपगालवानां मतेन। उदात्त उदयो यस्मात्स उदात्तोदय उदात्तपर इत्यर्थः। एवं स्वरितोदयः। उदात्तोदयस्तावत्-गार्ग्यस्तत्र। वात्स्यस्तत्र। तत्र शब्द आद्युदात्तः। तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति। स्वरितोदयः-गार्ग्यः क्व। वात्स्यः क्व। क्वशब्दः स्वरितः तस्मिन् परतोऽनुदात्तः स्वरितो न भवति। अगार्ग्यकाश्यपगालवानामिति किम्? गार्ग्यस्तत्र। गार्ग्यः क्व। तेषां हि मतेन स्वरितो भवत्येव। उदात्तपरस्येति वक्तव्ये उदयग्रहणं मङ्गलार्थम्। अनेकाचार्यसंकीर्तनं पूजार्थम्॥

---

हलः—हल् से परवर्त्ती यम् ( प्रत्याहार ) का यम् के परे रहते विकल्प से लोप हो जाता है।

झरः—हल् से उत्तरवर्त्ती झर् का सवर्ण झर् के परे रहते विकल्प से लोप हो जाता है।

उदात्तात्—उदात्त से परवर्त्ती अनुदात्त के स्थान में स्वरित आदेश हो जाता है।

नोदात्त—गार्ग्य, काश्यप तथा गालव आचार्यों से भिन्न आचार्यों के मत में उदात्तोदय ( उदात्तपरक ) तथा स्वरितोदय ( स्वरितपरक ) अनुदात्त के स्थान में स्वरित नहीं होता है।

अ अ इति ॥ ६८ ॥

एकोऽत्र विवृतोऽन्यः संवृतस्तत्र विवृतस्य संवृतः क्रियते। अकारो विवृतः संवृतो भवति। वृक्षः। प्लक्षः इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातस्तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते। दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते। तेन तयोः संवृतो न भवति। संवृतेन च सवर्णगुणस्य साम्निकस्य ग्रहणमिष्यते। तेन सवर्णगुणः प्रत्यापद्यते ॥

[ इष्टयुपसंख्यानवती शुद्धगणा (१)विवृतगूढसूत्रार्था ॥
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥ १ ॥
व्याकरणस्य शरीरं परिनिष्ठितशास्त्रकार्यमेतावत् ॥
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण ॥ २ ॥ ]

इति श्रीवामनकृतायां काशिकावृत्तावष्टमाध्यायस्य तुरीयः पादः ॥
समाप्तश्चायमध्यायो ग्रन्थश्च ॥ ८ ॥ ४ ॥



---

अ अ इति—विवृत अकार के स्थान में सम्वृत अकार हो जाता है।

अष्टम अध्याय का चतुर्थ पाद समाप्त हुआ।

अष्टमाध्याय समाप्त हुआ।

यह 'काशिका' वृत्ति समाप्त हुई।



---

( १ ) इदं पद्यद्वयं न्यासकृन्मते अत्र अन्ते वर्तते, हरदत्तमते तु प्रारम्भे एव वृत्तेः इति अस्माभिः अत्र प्रकोष्ठे स्थापितम् ( श्रीना० )।

# काशिका-उत्तरार्ध

## सूत्रानुक्रमणिका

